# राजघंटु:

## श्रीनरहरित्तविरचितः

इसमे ग्रंथकारनेऔधीकेनाम और गुण के अंतमे महाराष्ट्र और कर्णाटक भाषामे औषधीके नामलि और प्रसिद्ध पदके नाम देशीभाषामेभी हैं यह ग्रंथबहुत अलभ्यहे इसको बतलासकरको बडेपरिश्रमसे शोधको है सूची भी इसकी-बडे परिश्रम [illegible]ाया हे सो अंतमे है ॥

वाराणसीप्रसा नियोगेन प्रयत्नतः॥
काशी संस्कृत[illegible]यामंकितोयं शिलाक्षरैः॥१॥

काशीजीमे
म[illegible]होद कटोरा
श्री पंचाबाबू के मकान मे
काशीसंतमुद्रायंत्र मे छपी

जिनको [illegible]ाय उनको इसकार्यके संपादक श्रीयु[illegible]बूवाराणसी प्रसादजीके पास उक्तस्थ[illegible] याकचौरी गलीमे भाई प्रताप सिं[illegible]के दुकानपर मिलेगी ॥

संबत [illegible]९ मिति फाल्गुन शुक्ल ११
ता[illegible] माहे मार्च सन् १८८३ ई०

६२

# राजनिघंटः प्रारभ्यते

श्रीगणेशायनमः॥ श्रीकंठाचलमेखलापरिणमत्कुंभींद्रबुध्या
रदप्रांतोत्तंभितसंभृताव्दगलितैः शीतैरपांशीकरैः॥ निर्वाणमद
संज्वरे प्रमुदितस्तेनात्तपत्नश्रियंतन्वानेननिरंतरंदिशतुवः श्रीवि
घ्नराजोमुदं॥१॥ कर्पूरक्षोदगौरंधृतकपिलजटं श्रीसुपर्णचंद्रमौलिं
सौधंकुंडंसुधांशुवरयुतमभयंदोश्चतुष्केदधानं॥ वामोत्संगेवहं
तं विविधमणिगणालंकृतासुज्वलांगीं शर्वाणींस्वानुरूपांतमनि
शममृतेशाख्यमीशंस्मरामि॥२॥ श्रीमन्महेशनलिनासननिर्जरें
द्रास्तत्राश्विनावथततोत्रितनूद्भवश्च॥ धन्वंतरिश्चरकसुश्रुत
सूरिमुख्यास्तेप्यायुरागमकृतः कृतिनोजयंतु॥३॥ शंभुंप्रणम्यशि
रसास्वगुरूंनुपास्यपित्रोः पदाब्जयुगलेप्रणिपत्यभक्त्या॥ विघ्ने
शितारमधिगम्यसरस्वतींचप्रारंभि भैषजहितायनिघंटुराजः॥
॥४॥ धन्वंतरीयमदनादिहलायुधादीन्विश्वप्रकाश्यमरकोशस
शेषराजौ॥ आलोक्यलोकविदितांश्चविचिंत्यशब्दान्द्रव्याभि
धानगणसंग्रहएष स्पष्टः॥५॥ राजौ॥ भोजराजशेषराजौ॥ आयु
श्रुतीनामतुलोपकारकंधन्वंतरिग्रंथमतानुसारकं। आचक्ष्महे
लक्षणलक्ष्मधारकंनाम्नोच्चयंसर्वरुजापसारकं॥६॥ निर्देशल
क्षणपरीक्षणनिर्णयेननानाविधौषधविचारपरायणोयः॥ सो
धीत्ययत्सकलमेनमवैतिसर्वंतस्मादयंजयतिसर्वनिघंटुराजः
॥७॥ नानाविधौषधिरसाह्वयवीर्यपाकप्रस्तावनिस्तरणपंडित
चेतनोपि। मुह्यत्यवश्यमनवेक्ष्यनिघंटुमेनंतस्मादयंविरचितो
भिषजांहिताय॥८॥ निघंटुनाविनावैद्योविद्वान्व्याकरणंवि
ना॥ अनभ्यासेनधानुष्कस्त्रयोहास्यस्यभाजनं॥९॥ नानादे

शविशेषभाषितवशाद्यत्संस्कृतंप्राकृतापभ्रंशादिकनाम्निने

वगणनादृश्योच्चयव्याहृतौ॥तस्मादत्रतुयावतास्त्युपकृतिस्ता
वन्मयागृह्यतेपाथोदैःपरिपीयतेकिमखिलंतद्वारिवारांनिधेः
॥१०॥आभीरगोपालपुलिंदतापसाःपांथास्तथान्येपिचवन्यपा
रगाः॥परिस्यतेभ्योविविधौषधाभिधारसादिलक्ष्माणिततःप्र
योजयेत्॥११॥नानाभिधेयमथयत्रशिवासमंगाश्यामादिना
मनिगमेषुनिवेशितंयत्॥प्रस्ताववीर्यरसयोगवशादमुष्यबु
ध्याविमृश्यभिषजांचधृतिर्विधेया॥१२॥नामानिक्वचिदिहरू
ढितःस्वभावाद्देश्योक्त्याक्वचनचलांछनोपमाभ्यां॥वीर्येणक्वचि
दितराह्वयादिदेशाद्द्रव्याणांध्रुवमितिसप्तधोदितानि॥१३॥अ
त्रौषधीनिवहनामगुणाभिधानप्रस्तावतस्तदुपयुक्ततयेतरा
णि॥क्षेत्रावनीधरनदीनरतिर्यगादीन्व्याख्यागुणैरतिसविस्त
रमीरितानि॥१४॥एकःकोपिसवेत्तसांयदिमुदेकल्पेतजल्पेगुण
स्तत्रान्येपिविनार्थनांबहुमतिंसंतःस्वयंतन्वते॥अप्यार्द्रीकृतशै
लसानुगशिलामापीयचांद्रींसुधामंभोधिःकुमुदैर्दृशश्चजगतांनं
दंतिकेनार्थिताः॥१५॥अप्रसिद्धाभिधंचात्रयदौषधमुदीरितं॥
तस्याभिधाविवेकःस्यादेकार्थादिनिरूपणे॥१६॥रंभाश्यामादि
नाम्नांयेस्वर्गस्त्रीतरुणीतिच॥अर्थानानार्थतंत्रोक्तास्त्यक्तास्ते
स्मिन्नपार्थकाः॥१७॥व्यक्तिःकृतात्रकर्नाटमहाराष्ट्रीयभाषया
॥आंध्रलाटादिभाषास्तुज्ञातव्यास्तद्ध्याश्रयाः॥१८॥एतत्त्रिनेत्र
गुणनीयगुणानुविद्धवर्णोद्भवरत्नशितमौक्तिकवर्गसारं॥कंठे
सतांसकलनिर्वृतिधामनामचिंतामणिप्रकरदामकरोतुकेलिं
॥१९॥अत्रानूपादिरस्मादवनिरथगुडूचीशताह्वादिकौह्वौत
स्त्रांतेपर्पटादिस्तदुपरिपठितौपिप्पलीमूलकादि॥शाल्मल्यादिः
प्रभद्रादिकमनुकरवीरादिरास्रादिरन्यस्तस्याग्रेचंदनादिस्त
दनुनिगदितःकोमलःकांचनादिः॥२०॥पानीयःक्षीरशाल्यादि
कमनुकथितौमांसमानुष्यकादिःसिंहादिःस्याद्गुदादिस्तदनु
भवतिसत्वाधिकोमिश्रकोन्यः॥२१॥एकार्थादिस्ततस्तैःत्रिकरप
रिचितैःप्रातिभोनोषसर्गैर्वर्गैरासा[illegible]नमनहृदयेनिस्तरां

निश्चिनोतु॥२२॥काश्मीरेणकपर्दिपादकमलंद्वंद्वार्चनोपार्जित
श्रीसौभाग्ययशः प्रतापपदवीधाम्नाप्रतिष्ठापिता॥सेयंश्रीनरसिं
हनामविदुषोस्त्ववैद्यविद्यास्थितिः प्रीत्याप्राप्तसुवर्णराजिरचना
चित्रोज्वलापीठिका॥२३॥अन्यत्रविद्यमानत्वादुपयोगानवेक्षणा
त्॥वृथाविस्तरभीत्याचनोक्तोगुणगणोमया॥२४॥इतिग्रंथप्रस्ता
वना॥अथअनूपादिवर्गः॥ ॥नानासोपीजविरूढनमृगसहितं
निर्भरव्रातशीतंशैलाकीर्णंकनीयःकुररसुखखगालंकृतंताम्र
भूमिः॥विभ्रद्व्रीह्यादिकंयत्स्थलमतिविपुलंनीरसंयत्ववुसंपि
त्तघ्नंश्लेष्मवानप्रदमुदररुजापामदंस्यादनूपं॥२५॥तच्चोक्त.
कृत्स्नानिजलक्षणधारिभूरिकुयावृतांतरवहद्रुवारिमुख्यं
॥ईषत्प्रकाशसलिलंयदिमध्यमंतदेतच्चनातिबहुलांबुभवे
त्कनीयः॥ ॥इतित्रिविधमनूपं॥ ॥इत्यनूपदेशः॥यत्रानू
पविपर्ययस्तनुतृणास्तीर्णाधराधूसरामुद्गव्रीहियवादिधान्य
फलदातीव्रोष्मवत्युत्तमा॥प्रायःपित्तविरद्धिरूढतबलाःस्युर्नी
रजःप्राणिनोगावोजाश्चपयःस्वरंतिवहतत्कूपेजलंजांगलं॥२७
॥एतच्चमुख्यमुदितंस्वगुणैःसमग्रमल्याल्पभूरुहयुतंयदिम
ध्यमंतत्॥तच्चापिकूपखननेसुलभांवुयत्तद्ज्ञेयंकनीयइति
जांगलकंत्रिरूपं॥२८॥इतिजांगलदेशः॥लक्ष्मोन्मीलतियत्र
किंचिदुभयोस्तज्जांगलानूपयोर्गोधूमोल्बणयावनालविलस
न्माषादिधान्योद्भवः॥नानावर्णमशेषजंतुसुखदंदेशंबुधामध्य
मंदोषोद्भूतिविकोपशांतिसहितंसाधारणंतंविदुः॥ ॥इतिसा
धारणदेशः॥ ॥तच्चसाधारणंद्वेधाऽनूपजांगलयोःपरं॥यत्रय
त्रगुणाधिक्यंतत्रतस्यगुणंभजेत्॥२९॥मुख्यंतद्देशवैषम्यान्ना
स्तिसाधारणंक्वचित्॥सूक्ष्मत्वाल्लक्ष्मतत्वस्यतद्विधैर्वैद्यमिष्यते
॥३०॥इतिदेशाः॥क्षेत्रभेदंप्रवक्ष्यामिशिवेनाख्यातमंजसा॥ब्रा
ह्मंक्षात्रंचवैश्यीयंशौद्रंचेतियथाक्रमात्॥३१॥तत्रक्षेत्रेब्रह्मभू
मीरुहाढ्यंवारिस्फारंयत्कुशांकूरकीर्णं॥रम्यंयच्चश्वेतमृत्स्ना
समेतंतद्धाचरेब्राह्ममित्याहमूर्ति॥३२॥ताम्रभूमिबलयंविभू

धरं यन्मृगेंद्रमुखसंकुलंकुलं॥ घोरघोषिखदिरादिदुर्गमंक्ष
त्रमेतदुदितं पिनाकिना॥ ३४॥ शातकुंभनिभभूमिभास्वरंस्व
र्णरेणुनिचितं निधानवत्॥ सिद्धकिंनरसुपर्वसेवितं वैश्यमा
स्यदिदमिंदुशेखरः॥ ३५॥ श्यामस्थलाढ्यबहुसस्यभूतिदं
लसत्तृणैर्बहुलरसवृद्धिदं॥ धान्योद्भवैः कर्षकलोकहर्षदंज
गादशूद्रंजगतोवृषध्वजः॥ ३६॥ द्रव्यंक्षेत्रादुदितमनर्घंब्रा
ह्मंतत्तुसिद्धिदायिक्षत्रादुत्थंवलिपलितजिद्व्याधिरोगापहारि॥
वैश्याज्जातंप्रभवतितरांधातुलोहादिसिद्ध्यैशूद्रादेतज्जनि
तमखिलव्याधिविद्रावकंद्राक्॥ ३७॥ ब्रह्माशक्रः किन्नरेश
स्तथाभूरित्येतेषांदेवताःस्युः क्रमेण॥ प्रोक्तास्तत्रप्रागुमाव
ल्लभेनप्रत्येकंतेपंचभूतानिवक्ष्ये॥ ३८॥ पीतस्फुरद्दलयशु
र्करिलाश्मरम्यंपीतंयदुत्तममृगंचतुरस्रभूतं॥ प्रायश्चपीत
कुसुमान्वितवीरुदादितत्पार्थिवंकठिणमुद्यदशेषतस्तु॥
॥ ३९॥ अर्द्धचंद्राकृतिश्वेतंकमलाभंहृषच्चितं॥ नदीनदजला
कीर्णमाप्यंतत्क्षेत्रमुच्यते॥ ४०॥ खदिरादिद्रुमाकीर्णंभूरिचित्र
कवेणुकं॥ त्रिकोणंरक्तपाषाणंक्षेत्रंतैजसमुत्तमं॥ ४१॥ धूम्रस्थ
लंधूम्रदृषत्परीतंषट्कोणकंतूर्णमृगावकीर्णं॥ शाकैस्तृणैरंचि
तरू—सवृक्षकंप्राकारमेतत्खलुवायवीयं॥ ४२॥ नानावर्णव
र्तुलंतत्प्रशस्तंप्रायःशुभ्रंपर्वताकीर्णमुच्चैः॥ यच्चस्थानंपावनंदे
वतानांप्राहक्षेत्रंत्र्यक्षणस्त्वांतरिक्षं॥ ४३॥ द्रव्यंव्याधिहरंबला
तिशयकृत्स्वादुस्थिरंपार्थिवंस्वादाप्यंकटुकंकषायमखिलंशी
तंचपित्तापहं॥ यत्तिक्तंलवणंचदीप्यमरुजिद्रौक्षंचतत्तैजसंवा
व्यंतुहिमोस्लमम्लमबलंस्यान्नाभसंनीरसं॥ ४४॥ ब्रह्माविष्णु
श्चरुद्रोस्मादीश्वरोथसदाशिवः॥ इत्येताःक्रमतःपंचक्षेत्रभूता
धिदेवताः॥ ४५॥ जित्वाजवाज्जरसैन्यमिहाजहारवीरःपुरायु
धिसुधाकलशंगरुत्मान्॥ कीर्णेस्तदाभुविसुधासकलैःकिलासी
त्स्यादिकंसकलमस्यशुधाम्रुरीशः॥ ४६॥ तत्रोत्पन्नास्तूत्तमेक्षेत्र
भागेदिव्याधारोविशुषाचयत्रः सोमाजादद्रव्यंभूयंप्रपन्नासा

स्ताःसंज्ञाबिभ्रतेतत्रभूयः॥४७॥एवंक्षेत्रानुगुण्येनतज्ज्ञावि
प्रादिवर्णिनः॥यदिवालक्षणंवस्यास्यमोह्यायमनीषिणं॥४८
किसलयकुसुमेप्रकांडशाखादिषुविशदेषुवदंतिविप्रमेता
न्॥नरपतिमतिलोहितेषुवैश्यंकनकनिभेषुसितेतरेषुशूद्रं
॥२५॥विप्रादिजातिसंभूतान्विप्रादिष्वेवयोजयेत्॥गुणाढ्यान
पिवृक्षादीन्प्रतिलोम्यंनचाचरेत्॥२६॥अपिच॥विप्रोविप्रादिषु
वर्णेषुराजाराजन्यादौवैश्यमुख्येषुवैश्यः॥शूद्रःशूद्राद्येषुशस्तं
गुणाढ्यंद्रव्यंनैवंप्रातिलोम्येनकिंचित्॥२७॥द्रव्यंयदंकूरजमा
हुरार्यास्तत्तत्पुनःपंचविधंवदंति॥वनस्पतिश्चापिसएववानस्प
त्यःक्षुपोवीरुदथौषधीश्च॥२८॥ज्ञेयःसोत्रवनस्पतिःफलति
यःपुष्पैर्विनातैःफलंवानस्पत्यइतिस्मृतस्तनुरसोह्रस्वःक्षुपःक
थ्यते॥यावेल्लत्यगमादिसंश्रयवशादेषानुवल्लीमता॥शाल्यादिःपु
नरोषधिःफलपरीपाकावसानान्विताः॥२९॥स्त्रीपुंनपुंसकत्वे
नत्रैविध्यंस्थावरेष्वपि॥शृणुवक्ष्यामितल्लक्ष्मव्यक्तमत्रयथाक्रमं
॥३०॥इक्षुवेणुतरुवीरुदादयःस्कंधकांडफलपुष्पपल्लवैः॥स्नि
ग्धदीर्घतनुतामनोरमास्ताःस्त्रियःखलुमताविपश्चितां॥३१॥यत्र
पुष्पप्रवालादिनातिदीर्घंनचाल्पकं॥स्थूलंपरुषमित्येषपुमानु
क्तोमनीषिभिः॥३२॥स्त्रीपुंसयोर्यत्रविभातिलक्ष्मद्वयोरपिस्कंध
फलादिकेषु॥संदेहदंनैकतरावधारिनपुंसकंतद्विबुधावदंति
॥३३॥द्रव्यंपुमान्स्यादखिलस्यजंतोरारोग्यदंतद्बलवर्द्धनंच॥स्त्री
दुर्बलास्वल्पगुणागुणाढ्यास्त्रीष्वेवनक्वापिनपुंसकःस्यात्॥त
थाच॥यदिस्त्रियःस्त्रीषुकृतागुणाढ्याःक्लीबानितुक्लीबशरीरभा
जां॥सदाचसर्वत्रपुमान्प्रयुक्तोगुणावहश्चेतिचकेचिदाहुः॥३५
॥क्षुत्पिपासाचनिद्राचरक्षादिष्वपिलक्ष्यते॥मज्जलादानतस्ता
श्चेपर्णसंकोचितोंतिमा॥३६॥यत्काठिन्येसोस्तितिर्योद्भवोंभ
स्तेजस्तूष्मावर्द्धतेयत्सवातः॥यच्चच्छिद्रंतन्नभस्थावराणामित्ये
तेषांपंचभूतात्मकत्वं॥३७॥इत्थंदेशगुणस्वरूपकथनप्रक्रांत
कान्तारजसेत्रद्रव्यगुणानवक्रमममिंवर्गेपरिज्ञानरः॥प्राप्ते

त्याशुभिषक्प्रयोगविषयप्रावीण्यपारीणतांहंकुर्वाणसुपर्वसंस
द्गदंकारक्रियाकौशलं॥२८॥असूतसुतमीश्वरःश्रुतयशायम
ष्टादशप्रभेदविधवाङ्मयांबुनिधिपारपारीणधीः॥अमुष्यन
हरीशितुःकृतिवरस्यवर्गःकृतावसावगमदादिमःसदभिधा
नचूडामणौ॥३०॥इतिवैद्यपतिमूर्द्धन्यरत्नाभरणश्रीमदीश्वर
सूरिसूनुश्रीकंठचरणारविंदसेवासेवकराजहंसश्रीकाश्मीरा
दिवंशाचार्यपरंपरान्वयश्रीनरहरिपंडितविरचितेनिघंटुराजा
परनामधेयेपर्यायवत्यभिधानचूडामणौअनूपादिवर्गःप्रथमः
॥अथभूमिवर्गः॥ ॥अथधरणिधरित्रीभूतधात्रीधराभूक्षितिम
हिधरणीडाक्ष्मावनीमेदिनीज्या॥अवनिरुदधिवस्त्रागौःक्ष्मा
क्षोणिरुर्वीकुरपिवसुमतीराकाश्यपीरत्नगर्भा॥१॥क्ष्मादि
माभूमिरिलावसुंधरावराचधात्रीवसुधाचलोर्वरा॥विश्वंभ
राद्याजगतीक्षितीरसापृथ्वीचगोत्रापृथिवीपृथुर्मही॥२॥क्षो
णीसर्वसहानंताभूतमाताचनिश्चला॥भूमीबीजप्रसूःश्या
माक्रोडकांताचकीर्त्तिता॥३॥पृथ्वीनाम॥साभूमिरुर्वराख्या
यासर्वसस्योद्भवप्रदा॥समस्तवस्तूद्भवनादुर्वरानामभूमिच॥
मृन्मृत्तिकाप्रशस्तासामृत्स्नामृत्स्नेतिचेष्यते॥४॥मृत्तिकानाम
॥क्षारामृदूषोदेशस्तुतद्वानिरणमूषरं॥खिलमप्रहृतंप्राहुर्धन्वा
तुमरुरुच्यते॥५॥खडसरादिकरनादिभूमिः॥मरुप्रायस्तुयो
देशःसचोक्तोजांगलाभिधः॥कृस्नमृत्कृस्नभूमिःस्यात्पांडु
भूमिस्तुपांडुमृत्॥६॥कृस्नभूमि॥पांढरीभुंई॥कारियभूमि
निलियभूमि॥सशार्करःशार्करिलोदेशोयःशर्करान्वितः॥से
कतःस्यात्सिकतिलःसिकतावांश्चयोभवेत्॥७॥वालुवटभूमि
मह्ललभूमि॥नदीमातृकभूमिः॥देशोजनपदोनीवृद्विषयश्चो
पवर्त्तनं॥प्रदेशस्थानमाख्याभूरवकाशःस्थितिःपदं॥८॥नद्यं
बुजैर्भृतोधान्यैर्नदीमातृकउच्यते॥वृष्ट्यंबुजैस्तुतैरषदेशःस्या
द्देवमातृकः॥९॥नदीवृष्टिजलोद्भूतैर्नानाधान्यैःसमावृतः॥दे
शोद्वयानुगमनात्सदैमातृकउच्यते॥१०॥मुद्रादीनांसेन्नमुद्भूति

दंयवनन्मोद्गीनंकोद्रवीणंतथान्यत्॥व्रैहेयंस्यात्किंचशालेयमेवं
वुध्याणमंचाणवीनंचविद्यात्॥११॥अथमाष्यं माषीणंभंग्यंभां
गीनमुप्यमोमीनं॥तिल्यंतैलीनंस्यादितिषष्टिकंयचयव्यंच॥१२
॥शाकादेर्यत्रनिष्पत्तिरेतस्याच्छाकशाकटं॥शाकशाकिनमित्ये
नत्तथावास्तुकशाकटं॥१३॥इतिभूमिवर्गः॥ ॥अथशैलवर्गः॥
अथगिरिधरणीध्रगोत्रभूभृच्छिखरिशिलोच्चयशैलसानुमंतः
क्षितिभृद्गनगावनीधराद्रिस्थिरकुधराश्चधराधरोधरश्च॥१४
॥अहार्यःपर्वतोग्रावाकटकीप्रस्थवानपि॥शृंगीचवृक्षवांश्चे
तिशब्दाःशैलार्थवाचकाः॥१५॥पर्वतभेदः॥मध्यमस्तुनितंबः
स्यात्कटकंमेखलाचसा॥तटेतटीप्रपातश्चप्रस्थेत्स्नुःसानुसा
नुनी॥१६॥टेंकुलियादि॥किरुबेट्टादि॥शृंगंतुशिखरंकूटंकंद
रेकंदरादरी॥डोंगराचेंशिखर॥कोडुगल्लु॥ ॥बिलंगुहाशिला
संधिर्देवखातंचगव्हरं॥१७॥पर्वतगुहा॥बेट्टगोहे॥प्रत्यंत
गिरयःपादागंडशैलाश्च्युतोपलाः॥आकरःखनिरित्युक्तोधात
वोगैरिकादयः॥१८॥ग्रावःप्रस्तरपाषाणोदृषदश्मोपलःशि
लाः॥लोहानिविविधानिस्युरश्मसारादिसंज्ञया॥ ॥पाथरु
॥कल्लु॥काननंगहनंसत्रंकांतारंविपिनंवनं॥अरण्यमटवी
दावोदवश्चवनवाचकाः॥२०॥रान॥अटवि॥अन्यदुद्यानमा
क्रीडोयत्रक्रीडतिरागिणः॥नृपालयेषुप्रमदवनमंतःपुरोचि
तं॥२१॥घरापासिलमला॥हित्तिलबनाकु॥महावनमरण्यानी
महारण्यंमहाटवी॥विंध्य॥हेरडवि॥अथोपवनमारामःपुरप्रांतेवनं
तुयत्॥ ॥मले॥तोट॥कुजःक्षितिरुहोंघ्रिपःशिखरिपादपौवि
ष्टरःकुटस्तरुरनोकहःकुरुहभूरुहद्रुद्रुमाः॥२३॥अगोनगवन
स्पतीविटपिशाखिभूजागमामहीजधरणीरुहक्षितिजवृक्षशा
लाद्रुमः॥२४॥वृक्षनाम॥फलितःफलवानेषफलिनश्चफली
तथा॥फलेग्रहिरवंध्योयःस्यादमोघफलोदयः॥२५॥फलितवृ
क्ष॥ ॥अथावकेशीवंध्योयंविफलोनिष्फलोफलः॥अफलवृक्षः
॥वांझारूखु॥ ॥मंजेमर॥ [illegible] नैवालनस्पत्यवन

स्वती॥मूलंतुनेत्रंपादःस्यादंघ्रिश्चरणमित्यपि॥मूल॥बेरु॥उद्दे
दस्त्वंकुरोज्ञेयःप्ररोहोंकुरइत्यपि॥२७॥अंकुरः॥ ॥अर्वाग्भागो
स्यबुध्नःस्यान्नितम्बःसष्टशुर्भवेत्॥वृक्षबुड॥मरनमोदलु॥
आस्कंधात्तुप्रकांडःस्यात्कांडोदंडश्चकथ्यते॥२८॥थोरखांधिया
॥हणेगोंबु॥स्कंधप्रमाणाःस्थलनास्तुशाखाःस्कंधोत्थशाखास्तु
भवंतिशालाः॥सान्हीखाधी॥सणकोंबु॥जटाशिरास्तस्यकिल
वरोहाःशाखाशिफामज्जनिसारमाङ्कः॥२९॥पारंबे॥बीललु॥नि
ष्कुटंकोटरंप्रोक्तंत्वचिवल्कंतुवल्कलं॥टोलाअनिकअन्तरसालि
॥होलु॥मतेऊलसेक्क॥नवपुष्पाढ्यशाखाग्रेवल्लरीमंजरीतथा
॥३०॥पल्लविया॥तलिलु॥पर्णंपत्रंदलंबर्हंपलाशंछदनंछदः॥
॥पान॥एले॥स्यात्पल्लवःकिशलयःप्रबालःपल्लवंनवं॥३१॥लो
हितेपल्लव॥केंदलिलु॥विस्तारोविटपःप्रोक्तःप्राग्रंतुशिखरंशि
रः॥विस्तारवृक्षाचा॥मरनविस्तारं॥माढिःपर्णशिराज्ञेयावृंतं
प्रसवबंधनं॥३२॥पर्णशिर॥कोरकमु॥कुलक्षारकजालककलि
कास्तुकुड्मलेकथिताः॥मुकुले॥मोगेयपेसरु॥कुसुमंसुमनःप्र
सूनप्रसवसुमंसूनुफुल्लपुष्पंस्यात्॥३३॥फूलनाम॥हूविनयेस
रु॥मकरंदोमरंदश्चमधुपुष्परसाहूयं॥पौष्पंरजःपरागःस्यान्म
धूलीधूलिकाचसा॥३४॥पुष्पसार॥गुच्छोगुलुंछस्तबकोगुच्छ
कःकुसुमोच्चयः॥घोंस॥थोवानाम॥गोंचलुः॥ ॥समंपरिमलामो
दगंधसौरभ्यसौरभं॥परिमलनाम॥उज्जृम्भितमुज्जृम्भंस्मितमु
न्मिषितंविनिद्रमुन्निद्रं॥उन्मीलितंविजृंभितमुद्बुद्धोद्भिन्नभिन्नमुद्भि
न्नं॥३५॥विकसितहसितविकस्वरविकचव्याकोशफुल्लसंफु
ल्लं॥स्फुटमुदितदलितदीर्णस्फुटितोत्फुल्लप्रफुल्लमेकार्थं॥
॥३६॥निद्राणमुद्रितंसुप्तंमिलितंमीलितंनतं॥निकूणितंसं
कुचितंसनिद्रमलसंसमं॥३७॥मुकुलितं॥आह्वस्तरूणांफ
लमत्रसस्यंतदामसुक्तंहिशलाटुसंज्ञं॥शुष्कंतुवानंप्रवदंति
गुल्मस्तंबैःप्रकांडैरहितोमहीजः॥३८॥उपलंगुल्मिनीवीरु
ल्लतावल्लीप्रतानिनी॥व्रततिःप्रततिश्चैवाविस्तीर्णावीरुदुच्य

ते॥३९॥ वेलीनाम॥ वेल्लि॥ अथवस्यामिनक्षत्रवृक्षानागमलक्षितान्॥ पूज्यानायुष्यदांश्चैववर्द्धनात्पालनादपि॥४०॥ विषद्रुधात्रीतरुहेमदुग्धाजंबूस्तथाखादिरकृष्णवंशाः॥ अश्वत्थनागौ च वटः पलाशः प्लक्षस्तथांबष्ठतरुः क्रमेण॥४१॥ बिल्वार्ज्जुनौ चैवविकंकतोथसकेसरः शम्बरसर्ज्जवंजुलाः॥ सपानसार्कौ श्वशमीकदम्बास्तथाम्रनिम्बौमधुकद्रुमः क्रमात्॥४२॥ अमी नक्षत्रदेवत्यावृक्षास्युः सप्तविंशतिः॥ अश्विन्यादिक्रमादेषामेषानक्षत्रपद्धतिः॥४३॥ यस्त्वेतेषामात्मजन्मर्क्षभाजांमर्त्यः कुर्याद्वेषजादीन्मदांधः॥ तस्यायुष्यंश्रीकलत्रंचपुत्रंनश्यत्येषांवर्द्धनेवर्द्धनाद्यैः॥४४॥ आचार्योक्तोस्फुटमथबृहत्सुश्रुतेनारदीयेनारायण्यांक्वचिदपितथान्यत्रतंत्रान्तरेषु॥ ज्ञात्वापीहप्रथितभिषजान्नानिदृष्टोपयोगंनैवास्माभिर्विशदितमिदंगौरवाद्ग्रंथभीतेः॥४५॥ तालाद्याजातयः सर्वाः क्रमुकः केतकीतथा॥ खर्जूरीनालिकेराद्यास्तृणवृक्षाः प्रकीर्त्तिताः॥४६॥ सर्वाणिचार्द्राणिनवौषधानिसुवीर्यवंतीनिवदंतिधीराः॥ सर्वाणिशुष्काणितुमध्यमानि शुष्काणिजीर्णानिचनिष्फलानि॥४७॥ वास्तुककुटजगुडूचीवासाकूष्मांडकादिशतपत्री॥ इत्यादितुनित्यार्द्रंगुणवच्छुष्कंयदातदाद्विगुणं॥४८॥ विडंगंमधुमंडूरादाडिमंपिप्पलीगुडः॥ नागवल्लीं दुशाल्याद्याः पुराणाः स्युर्गुणोत्तमाः॥४९॥ इंदुः कर्पूरः॥ काठिन्यमध्यकाठिन्यंमार्दवंचेतितुत्रिधा॥ द्रव्याणामिहसर्वेषां प्रकृतिः कथ्यतेबुधैः॥५०॥ द्रव्याणांसन्तिसर्वेषांपूर्वैरुक्तास्त्रयोगुणाः॥ रसोवीर्यविपाकाश्चज्ञातव्यास्तेतियत्नतः॥५१॥ रसास्तुमधुरादिः स्याद्वीर्यंकार्यसमर्थता॥ परिणामेगुणाढ्यत्वंविपाकइतिसंज्ञितं॥५२॥ शीतमुष्णंचरूक्षंचस्निग्धंतीक्ष्णंतथामृदु॥ पिच्छिलंविषदंचेतिवीर्यमष्टविधंस्मृतं॥५३॥ निष्कुटप्रमदकाननादिषुद्रव्यमेतदपिनिर्गुणंभवेत्॥ कापलीकवचनोपकर्णिनात्काप्यसाधुवनितादिसेवनात्॥५४॥ जातंश्मशानेवल्मीकेदेशेमन्नादिदूषिते॥ द्रव्यंनैवोपयोगायभिषजामुपजायते॥५५॥

कंदंहिमर्त्तौशिशिरेचमूलंपुष्पंवसंतेगुणदंवदंति॥प्रवालप
त्राणिनिदाघकालेस्युःपंकजातानिशरत्प्रयोगे॥५६॥निंबोदुं
बरजंब्वाद्यायथाकालंगुणोत्तराः॥कंदादिषव्वसर्वेषांपृथग्गेवर
सादयः॥५७॥केचित्कंदेकेपिमूलेषुकेचित्पत्रेपुष्पेकेपिकेचि
त्फलेषु॥त्वग्ग्वेवान्येवल्कलेकेचिदित्थंद्रव्यस्तोमाभिन्नभिन्नगुणा
ढ्याः॥५८॥देशेदेशेयोजनद्वादशान्तेभिन्नान्याहुर्द्रव्यनामादि
लोके॥किंचामीषुप्राणिनांवर्णभाषाचेष्टाच्छायाभिन्नरूपाविभा
ति॥५९॥अनिर्दिष्टप्रयोगेषुमूलंग्राह्यंत्वगादिषु॥सामान्योक्तौ
प्रयोक्तव्यंप्राहुस्तोयंतुनाभसं॥६०॥चूर्णकल्ककषायाणांप्रमा
णंपत्रनोदितं॥तत्रद्रव्यप्रमाणेनस्वयंबुध्वाप्रयोजयेत्॥६१॥
माध्वीकंसर्वमद्यानांमधूनांमाक्षिकंतथा॥तैलंतुतिलसंभूतं
घातवोवस्तिसंभवाः॥६२॥शालीनांरक्तशालिःस्यात्सूप्यानांमु
द्गएवच॥मूलानांपिप्पलीमूलंफलानांमदनंफलं॥६३॥त्वचातु
गंधद्रव्याणांपत्राणांगंधपत्रकं॥जीवंतिशाकंशाकानांलवणा
नांचसैंधवं॥६४॥सामान्यपुष्पनिर्देशान्मालतीकुसुमंक्षिपेत्
॥इत्थमन्येपिबोधव्याःप्रयोगायोगलक्षिताः॥६५॥द्रव्यंवातह
रंयत्तत्सकलंदीपनंपरं॥कफहारिसमंप्रोक्तंपित्तघ्नंमंददीप
नं॥६६॥यच्छीतवीर्यंगुरुपित्तहारिद्रव्यंनृणांवातकरंतदुक्तं॥
यदुष्णवीर्यंलघुवातहारिश्लेष्मापहंपित्तकरंचतत्स्यात्॥६७॥
इतिबहुविधदेशभूधभूमीरुहवनगुल्मलताभिधागुणानां॥
सविवरमभिधायलक्ष्मसाधारणमथतच्चविशेषतोभिधास्ये॥
॥६८॥इत्थंभूमीविपिनविषयक्षेत्रगोत्रादिनामस्तोमाख्यानप्रक
रणगुणव्याकृतिप्रौढमेनं॥वर्गंबुध्वाभिषगुपचितानर्गलत्वंत
सूक्ष्मप्रज्ञालोकप्रकटित धियामाधिराज्येभिषज्येत्॥६९॥इ
त्येषवैद्यकविकल्पभिधानिदानचूडामणौसुडपरागमपारगे
ण॥काश्मीरवंशतिलकेनकृतोपवर्गवर्गोनृसिंहकृतिनारचि
तोद्वितीयः॥७०॥इतिवैद्यपतिमूर्द्धन्यरत्नाभरणश्रीमदीश्वर
सूरिसूनुश्रीकंठचरणारविंदसेवादेवाकराजहंसश्रीकाश्मी

राद्यवंशाचार्यपरान्वयश्रीनरहरिपंडितविरचितेनिघंटुराजा
परनामधेयपर्यायवत्स्यभिधानचूडामणौधरण्यादिवर्गोद्विती
यः॥ ॥अथगुडूच्यादिवर्गः॥ ॥गुडूचीचाथमूर्वाचपटोलोरण्य
जस्तथा॥काकोलीचद्विधाप्रोक्तामाषपर्णीतथापरे॥१॥मुद्गप
र्णीचजीवंतीत्रिविधाचाथलिंगिनी॥कटुकोशातकीचैवकपि
कच्छुस्तथापरे॥२॥खलताकटुतुंबीचदेवदालीतथास्मृता॥
वंध्याकर्कोटकीप्रोक्ताकटुतुंब्याखुकर्णिका॥३॥द्विधेंद्रवारु
णीचान्नयवतिक्तेश्वरीतथा॥ज्योतिष्मतीद्विधाचैवद्विधाचगि
रिकर्णिका॥४॥मोरटश्चाथचेदिंदीवरावस्तांत्रिकाचसा॥सो
मवल्लीतथावत्सादनीगोपलकर्कटी॥५॥काकतुंडीद्विधाचा
थगुंजाद्विर्द्धदारुच॥केवर्त्तीताम्रवल्लीचकांडीरीचाथजं
तुका॥६॥अम्लपर्णीतथाशंखपुष्पीचावर्त्तकीतथा॥कर्णस्फो
टातथाकट्वीलताचैवामृतस्रवा॥७॥पुत्रदाचपलाशीचविज्ञेया
न्नवाभिधा॥सुमतिभिरित्यमनूक्ताबोधम्यावीरुधःक्रमादे
ताः॥८॥अस्मिन्वीरुद्वर्गेनाम्नाचगुणेश्चकीर्त्यते॥अपानीया
त्परिगणनयैवाप्रसिद्धाभिधानांनाम्नामुक्तापरिमितिकथाप्य
न्नसर्वौषधीनां॥सापिक्वापिस्फुटमभिधयाक्वापिचप्रौढिभंग्या
प्रोक्तानोक्ताप्रथितविषयेसापिनष्टांकवाक्ये॥९॥तस्मादिहन
यत्रोक्तानाम्नामंकादिनिर्मितिः॥तत्रतत्राष्टसंख्येवज्ञेयासर्व
त्रसूरिभिः॥१०॥यद्यपिक्वापिनष्टांकसंख्यानियतिरिष्यते॥
तत्रस्फुटत्वबुध्यैवनोक्तासंख्येतिबुध्यतां॥११॥द्रव्याणांगणशो
नियोगवशतोवीर्यपरेप्रोचिरेप्राचीनैर्नचतद्वशेननिगमेषूक्त
श्चिकित्साक्रमः॥तस्मान्नैगमयोगसंग्रहविदांसंवादवाग्भि
स्तथानैवास्माभिरभाणिकिंतुतदिहप्रत्येकशःकथ्यते॥१२॥
इतित्रयोदशादिअंकं॥ज्ञेयागुडूच्यमृतवल्ल्यमृताज्वरारिःश्या
मावरासुरकृतामधुपर्णिकाच॥छिन्नोद्भवामृतलताचरसाय
नीचछिन्नाचसोमलतिकामृतसंभवाच॥१३॥वत्सादनीछिन्न
रुहाविशल्याभिषक्प्रियाकुंडलिनीवयस्था॥जीवन्तिकाना

गकुमारिकाचस्याछिन्नकासैवचचंडहासा॥१४॥अन्याकंदो
द्भवाकंदामृतापिंडगुडूचिका॥बहुच्छिन्नाबहुरुहापिंडालुःकं
दरोहिणी॥१५॥पूर्वावार्द्धिकराव्हास्यादुत्तरालोकसंज्ञिका॥गु
डूच्योरुभयोरित्थमेकत्रिंशदिहाभिधा॥१६॥ज्ञेयागुडूचीगु
रूरुसवीर्यातिक्ताकषायाज्वरनाशिनीच॥दाहार्तितृस्नावमि
रक्तवातप्रमेहपांडुभ्रमहारिणीच॥१७॥कंदोद्भवागुडूचीचक
टूष्णासन्निपातहा॥विषघ्नीज्वरभूतघ्नीवलीपलितनाशिनी॥
॥१८॥गुलवेलि॥अमरदवल्लि॥गुरूंचीतिकान्यकुब्जाः॥ग
लोइतिगुर्जराः॥गलाव्हइतिपाश्चात्याः॥मूर्वादिव्यलतामिरा
मधुरसादेवीत्रिपर्णीमधुश्रेणीभिन्नदलामरीमधुमतीतिक्ता
पृथक्पर्णिका॥गोकर्णीलघुपर्णिकाचदहनीतेजस्विनीमो
रटादेवश्रेणिमधूलिकामधुदलास्युःपीलुनीरक्तला॥१९॥सु
खोषितास्निग्धपर्णीपीलुपर्णीमधुस्रवा॥ज्वलनीगोपवल्लीचे
त्यष्टविंशतिसंज्ञकाः॥२०॥मूर्वातिक्तकषायोस्णाहृद्रोगकफवा
तहृत्॥वमिप्रमेहकुष्टार्तिविषमज्वरहारिणी॥२१॥मुहुरसि॥
स्यात्पटोलःकटुफलःकुलकःकर्कशच्छदः॥राजनामाऽमृतफलः
पांडुपांडुफलोमतः॥२२॥कर्णाटेसोगवल्ली॥चूरनिहारकापील
वर्णीइतिगुर्जराः॥मोरहडीतिकान्यकुब्जाः॥बीजगर्भो नागफ
लःकुष्टारीकासमर्दनः॥पंचराजिफलोज्योत्स्नीकुष्टघ्नःषोडशा
हूयः॥२३॥पटोलःकटुतिक्तोस्नःरस पित्तबलासजित्॥कफकं
डूतिकुष्टास्रकृज्वरदाहार्तिनाशनः॥२४॥कडुपडोल॥कहिप
डवल॥काकोलीमधुराकाकीकालिकावायसोलिका॥क्षीराचध्वां
क्षिकावीराशुक्लाधीराचमेदुरा॥२५॥ध्वांक्षोलीस्वादुमांसीचवय
स्याचैवजीविनी॥इत्येषाखलुकाकोलीज्ञेयापञ्चदशाहूया॥२६॥
काकोलीमधुरास्निग्धाक्षयपित्तानिलार्तिनुत्॥रक्तदाहज्वरघ्नीच
कफशुक्रविवर्द्धनी॥२७॥काउली॥कर्णाटेकहवत्तिगे॥द्वितीया
क्षीरकाकोलीक्षीरशुक्लापयस्विनी॥पयस्याक्षीरमधुरावीराक्षीर
विषाणिका॥२८॥जीववल्लीजीवशुक्लास्यादित्येकानवाहूया॥२

सवीर्यविपाकेषुकाकोल्यासदृशीचसा॥२९॥दूधकाउली॥ह
लुगदृवनिगे॥माषपर्णीतुकांबोजीकृष्णवृन्तामहासहा॥आर्द्र
माषामांसमाषामंगल्याहयपुच्छिका॥३०॥हंसमाषाश्वपुच्छाच
पांडुरामाषपत्रिका॥कल्याणीवज्रमूलीचशालिपर्णीविसारि
णी॥३१॥आत्मोद्भवाबहुफलास्वयंभूसुलभाघना॥इत्येषामा
षपर्णीस्यादेकविंशतिनामका॥३२॥माषपर्णीरसेतिक्तावृष्या
दाहज्वरापहा॥शुक्रवृद्धिकरीबल्याशीतलापुष्टिवर्द्धिनी॥३३॥
रानोडिंडु॥काउदृ॥रानउडदी॥मुद्गपर्णीक्षुद्रसहासिंबीमार्जा
रगंधिका॥वनजारिंगिणीह्रस्वासूर्पपर्णीकुरंगिका॥३४॥कांसि
काकाकमुद्गाचवनमुद्गावनोद्भवा॥अरण्यमुद्गावन्येतिज्ञेयापं
चदशाह्वया॥३५॥मुद्गपर्णीहिमाकासवातरक्तक्षयापहा॥पि
त्तदाहज्वरान्हंतिचक्षुष्याशुक्रवृद्धिकृत्॥३६॥रानमूग॥का
हेसरु॥जीवंतीस्याज्जीवनीजीवनीयाजीवाजीव्याजीवदा
जीवदात्री॥शाकश्रेष्ठाजीवभद्राचभद्रामंगल्याचक्षुद्रजीवा
यशस्या॥३७॥शृंगाटीजीवपुष्टाचकांजिकाशशशिंबिका॥सु
पिंगलेतिजीवंतीज्ञेयाअष्टदशाभिधा॥३८॥लाहानिहरिणवे
लि॥किरियदाले॥जीवन्त्यन्याबृहत्पूर्वापुत्रभद्राप्रियंकरी॥
मधुराजीवपुष्टाचबृहज्जीवायशस्करी॥३९॥जीवंतीमधुरा
शीतारक्तपित्तानिलापहा॥क्षयदाहज्वरान्हंतिकफवीर्यविव
र्द्धिनी॥४०॥एवमेवबृहत्पूर्वारसवीर्यबलान्विता॥भूतविद्रा
वणीज्ञेयावेगाद्रसनियामिका॥४१॥दोन्हीहरिणवेलि॥कि
रयहाले॥हिरियहाले॥हेमाहेमवतीसौम्यातृणग्रंथिर्हिमाश्र
या॥स्वर्णपर्णीसुजीवंतीस्वर्णजीवासुवर्णिका॥४२॥हेमपुष्पी
स्वर्णलतास्वर्णजीवंतिकाचसा॥हेमवल्लीहेमलतानामान्यस्या
श्चतुर्दश॥४३॥स्वर्णजीवंतिकावृष्याचक्षुष्यामधुरातथा॥शि
शिरावातपित्तास्रग्दाहजिद्बलवर्द्धनी॥४४॥हेमहरिणवेलि
॥होबंणदहाले॥लिंगिनीबहुपत्रास्यादीश्वरीशैवमल्लिका॥
स्वयंभूर्लिंगसंभूतालिंगीचित्रफलामता॥४५॥पंडोलीलिंग

जादेवीचंडापस्तंभिनीतथा॥शिवजाशिववल्लीचविज्ञेयाषोड
शाह्वया॥४६॥लिंगिनीकटुरुष्णाचदुर्गंधाचरसायनी॥सर्वसि
द्धिकरीदिव्यावश्यारसनियामिनी॥४७॥वाडुवली॥ह्माकदोंडे
॥पचगुरिया॥ईश्वरलिंगी॥कोशातकीकृतच्छिद्राजालिनीकृ
तवेधना॥क्ष्वेडासुतिक्ताघंटालीमृदंगफलिनीतथा॥४८॥को
शातकीतुशिशिराकटुकाल्यकषायका॥पित्तवातकफघ्नीच
मलाध्मानविशोधिनी॥४९॥कडुदोडकी॥काहीरे॥कपिकच्छू
रात्मगुप्तास्वयंगुप्तामहर्षभी॥लांगुलीकुंडलीचंडामर्कटीदु
रभिग्रहा॥५०॥कपिरोमफलागुप्तादुस्पर्शाकच्छुराजया॥प्रा
वृषेण्याशूकशिंबीवदरीगुरुरार्षभी॥५१॥शिंबीवराहिका
तीक्ष्णारोमालुर्वनसूकरी॥कीशरोमारोमवल्लीस्यात्षड्विंश
तिनामका॥५२॥कपिकच्छुःस्वादुरसावृष्यावातक्षयापहा॥
शीतपित्तास्रहंत्रीचविकृताव्रणनाशिनी॥५३॥कपासकूह
री॥नसुकूगुरि॥कटुतुंबीकटुफलातुंबिनीकटुतुंबिनी॥बृह
त्फलाराजपुत्रीतिक्तबीजाचतुंबिका॥५४॥कटुतुंबीकटुस्ती
क्ष्णावांतिकृत्श्वासवातजित्॥कासघ्नीशोधनीशोफव्रणशूल
विषापहा॥५५॥कडुदूधी॥कहिसोरे॥खवल्ल्याकाशवल्लीस्या
दस्पर्शाव्योमवल्लिका॥आकाशनामपूर्वासावल्लीपर्यायगास्मृ
ता॥५६॥आकाशवल्लीकटुकामधुरापित्तनाशिनी॥वृष्यारसा
यनीबल्यादिव्यौषधिपरास्मृता॥५७॥अंतरवेलि॥आकाशवे
लि॥नेलमुरवल्लि॥जीमूतकःकंटफलागरागरीवेणीसहाको
शफलाचकटूफला॥घोराकदंबाविषहाचकर्कटीस्याद्देवदाली
खलुसारमूषिका॥५८॥वृत्तकोशाविषघ्नीचदालीलोमसपत्रि
का॥तुरंगिकाचतर्कारीनाम्नामेकोनविंशतिः॥५९॥देवदालीतु
तिक्तोष्णाकटुःपांडुकफापहा॥दुर्नामश्वासकासघ्नीकामलाभूत
नाशनी॥६०॥देवडंगरी॥देवडंगर॥वंध्यादेवीवंध्यकर्कोटकास्या
न्नागारातिर्नागहंत्रीमनोज्ञा॥पथ्यादिव्यापुत्रदात्रीसुकंदाश्रीकं
दासाकंटवल्लीश्वरीच॥६१॥सुगंधासर्पदमनीविषकंटकिनीवरा॥

कुमारीभूतहं ग्रीचनाम्नामित्यूनविंशतिः॥६२॥वंध्याकर्कोटकी तिक्ता कटूष्णाचकफापहा॥स्थावरादिविषघ्नीचशस्यतेसारसायने॥६३॥वंझकंटोली॥वंजेमड्डवागलु॥तिक्ततुंडीतुतिक्ताख्या कटुकाकटुतुंडिका॥बिंबीचकटुतिक्तादितुंडीपर्यायगाचसा॥ ॥६४॥कटुतुंडीकटुस्तिक्ताकफवान्तिविषापहा॥अरोचकारुपि त्तघ्नीसदापथ्याचरोचनी॥६५॥कडुतोंडली॥कहितोंडे॥नीतकुंदरु॥वनटिंडुराकडुआ॥स्यादाखुकर्णिकाषिकाद्रवंतीचित्रासु कर्णादुरुकर्णिकाच॥न्यग्रोधिकामूषिकनागकर्णीस्याद्दृश्चिक र्णीबहुकर्णिकाच॥६६॥माताभूमिचरीचंडाशंबरीबहुपादिका॥ प्रत्यकूश्रेणीवृषाचैवपुत्रश्रेण्यद्रिभूहृया॥६७॥आखुकर्णीकटू ष्णाचकफपित्तहरासदा॥आनाहज्वरशूलार्तिनाशिनीपाचनी परा॥६८॥ओपली॥वल्लिहरुहे॥ऐंद्रींद्रवारुण्यरुणामृगादनीग वादनीसुद्रसहेंद्रचिर्भिटा॥सूर्याविषघ्नीगुणकर्णिकामराभाता सुवर्णासुफलाचतारका॥६९॥वृषभाक्षीगवाक्षीचपीतपुष्पींद्र वल्लरी॥हेमपुष्पीसुद्रफलावारुणीबालकप्रिया॥७०॥रक्तेर्वारु विषलताशक्रवल्लीविषापहा॥अमृताविषवल्लीचज्ञेयोनत्रिंश दाहृया॥७१॥इंद्रवारुणिकातिक्ताकटुशीताचरेचनी॥गुल्मपित्तो दरश्लेष्मक्रिमिकुष्ठज्वरापहा॥७२॥इंद्रवारुणी॥हामेके॥महें द्रवारुणीरम्याचित्रवल्लीमहाफला॥सामाहेंद्रीचित्रफलात्रपुसी त्रपुसाचसा॥७३॥आत्मरक्षाविशालाचदीर्घवल्लीबृहत्फला॥स्याद्दृहद्वारुणीसोम्यानामान्यस्याश्चतुर्दश॥७४॥महेंद्रवारुणीज्ञेया पूर्वोक्तगुणभागिनी॥रसेवीर्येविपाकेचकिंचिद्दोषागुणाधिका॥ ॥७५॥वडिलइंद्रवारुणि॥हिरियहामेके॥यवतिक्तामहातिक्ताद्दृपादाविसर्पिणी॥नाकुलीनेत्रमीलाचशंखिनीपत्रतंडुली॥७६॥ तंदुलीचाक्षपीडाचसूक्ष्मपुष्पीयशस्विनी॥माहेश्वरीतिक्तयवायावीतिक्तेतिषोडश॥७७॥यवतिक्तासतिक्ताम्लादीपनीरुचितस रा॥क्रिमिकुष्ठविषामामदोषघ्नीरेचनीचसा॥७८॥यवेची॥शंखि नी॥रौद्रीजटारुद्रजटाचरुद्रासौम्यासुगंधासहताघनाच॥स्यादी

श्वरीरुद्रलतासुपत्रासुगंधपत्रासुरभिःशिवाह्वा॥७९॥पत्रव
ल्लीजटावल्लीरुद्राणीनेत्रपुष्करा॥महाजटाजटारुद्रानाम्ना
विंशतिरीरिता॥८०॥जटाकटुरसाश्वासकासहृद्रोगनाशिनी
॥भूतविद्राविणीचैवरक्षसांचनिबर्हिणी॥८१॥ईश्वरी॥रुद्रज
टा॥ज्योतिष्मतीस्वर्णलतानलप्रभाज्योतिर्लतासाकटभीसुपिं
गला॥दीप्ताचमेध्यामतिदाचदुर्जरासरस्वतीस्यादमृतार्कसंख्य
या॥८२॥लघुज्योतिष्मती॥तेजोवतीबहुरसाकनकप्रभान्याती
क्ष्णासुवर्णनकुलीलवणाग्निदीप्ता॥तेजस्विनीसुरलताग्निफला
ग्निगर्भास्यात्कंगुणीतदनुशैलसुतासुतैला॥८३॥सुवेगावाय
सीतीव्राकाकांडीवायसादनी॥गीर्लताश्रीफलीसौम्याब्राह्मील
वणकिंशुका॥८४॥पारावतपदीपीतापीततैलायशस्विनी॥मे
ध्यामेधाविनीधीरास्यादेकत्रिंशदाह्वया॥८५॥ज्योतिष्मतीतिक्त
रसाचरूक्षाकिंचित्कटुर्वातकफापहाच॥दाहप्रदादीपनकृच्च
मेध्याप्रज्ञांचपुष्णातितथाद्वितीया॥८६॥कंगुणीदोनि॥मालकां
गोणी॥कौगुएरडु॥अश्वखुराद्रिकर्णीचकटभीदधिपुष्पिका॥ग
र्दभीसितपुष्पीचश्वेतस्यंदापराजिता॥८७॥श्वेताभद्रासुपुष्पीच
विषहंत्रीत्रिरेकधा॥नागपर्यायकर्णीस्यादश्वाह्वादिखुरीस्मृता
॥८८॥गिरिकर्णीहिमातिक्तापित्तोपद्रवनाशिनी॥चक्षुष्यावि
षदोषघ्नीत्रिदोषशमनीचसा॥८९॥पांडरीसूपली॥विलियगि
रिकर्णिके॥नीलपुष्पीमहानीलास्यान्नीलागिरिकर्णिका॥गवा
दनीव्यक्तगंधानीलस्यंदाषडाह्वया॥९०॥नीलाद्रिकर्णीशिशिरा
सतिक्तारक्तातिसारज्वरदाहहंत्री॥विच्छर्दिकोन्मादमदभ्रमा
र्तिश्वासातिकासामयहारिणीच॥९१॥नीलसूपली॥नीलगिरि
कर्णिके॥मोरटःकीर्णपुष्पश्चपीलुपत्रोमधुस्रवः॥घनमूलोदी
र्घमूलःपुरुषक्षीरमोरटः॥९२॥मोरटःक्षीरबहुलोमधुरःसक
षायकः॥पित्तदाहज्वरान्हन्तिवृष्योबलविवर्द्धनः॥९३॥क्षीरम
हुरसि॥हालुसोगे॥इंदीवरायुग्मफलादीर्घवृन्तोत्तमारणी॥पुष्प
मंजरिकाद्रोणीकरंभानलिकाचसा॥९४॥इंदीवराकटुःशीतापि

नश्लेष्मापहारिका॥ चक्षुष्याकामदोषघ्नीव्रणक्रिमिहरापरा॥९५
॥उतरणि॥कुरुटिगे॥ वस्तांत्रीवृषगंधाख्यामेषांत्रीवृत्तपत्रिका॥
अजांत्रीबोकुडीचैवस्यादित्येषाषडाहूया॥९६॥वस्तांत्रीस्यात्क
टुरसाकासदोषविनाशिनी॥ बीजदागर्भजननीकीर्तिताभिषगु
त्तमैः॥९७॥ बोकुडी॥कुरुटिगेयभेद॥सोमवल्लीमहागुल्मायज्ञ
श्रेष्ठाधनुर्लता॥सोमार्हागुल्मवल्लीचयज्ञवल्लीद्विजप्रिया॥९८॥सो
मक्षीराचसोमाचयज्ञांगारुद्रसंख्यया॥सोमवल्लीकटुःशीतामधु
रापित्तदाहनुत्॥९९॥तृष्णाविशोषशमनीपावनीयज्ञसाधनी॥
सोमवल्लीसर्वभाषा॥सोम्यामहिषवल्लीचप्रतिसोमांत्रवल्लिका॥
॥१००॥अपत्रवल्लिकाप्रोक्ताकांडशाखाषडाहूया॥ रसवीर्यवि
पाकेचसोमवल्लीसमास्मृता॥१॥ महिषवेलि॥ एम्मेवल्लि॥ व
त्सादनीसोमवल्लीविक्रांतामेचकाभिधा॥पातालगरुडीता
र्क्षीसोपर्णीगारुडीतथा॥२॥वासनीदीर्घकांडाचदृढकांडाम
हाबला॥दीर्घवल्लीदृढलतानामान्यस्याश्चतुर्दश॥३॥वत्साद
नीतुमधुरापित्तदाहास्रदोषनुत्॥ तृष्णासंतर्पणीरुच्याविषदो
षविनाशिनी॥ ४॥ छि॥ छि॥ छि॥ ७॥ ७॥
वासनि॥ दागुडि॥ गोपालकर्कटीवन्यागोपकर्कटि
कातथा॥क्षुद्रेर्वारुक्षुद्रफलागोपालीक्षुद्रचिर्भटा॥५॥गोपालक
र्कटीशीतामधुरापित्तनाशनी॥मूत्रकृच्छ्राश्मरीमेहदाहशोषनिकृं
तनी॥६॥गोवलकाकडी॥मूलसौने॥काकनासाध्वांक्षनासाकाक
तुंडाचवायसी॥सुरंगीनस्करःस्याध्रुध्वांक्षतुंडासुनासिका॥७॥वा
यसाह्वाध्वांक्षनखीकाकाक्षाध्वांक्षनासिका॥काकप्राणाचविज्ञेया
स्यादित्येषात्रयोदश॥८॥काकनासातुमधुराशिशिरापित्तहारिणी
॥रसायनीदार्ढ्यकरीविशेषात्पलितापहा॥९॥वडिलिकहुडलि॥
हिरियकागेदोंडे॥काकादनीकाकपीलुःकाकशिंबीचरक्तला॥ध्वां
क्षादनीवक्रशल्यादुर्मोहावायसादनी॥१०॥काकतुंडीध्वांक्षनखी
वायसीकाकदंतिका॥ध्वांक्षदंतीतिविज्ञेयास्तिस्रश्चदशधाभिधा
॥११॥काकादनीकटूष्णाचतिक्तादिव्यरसायनी॥वातदोषहरारु

चापलितस्तंभिनीपरा॥१२॥सान्हीकद्दुडलि॥ किरियकागेरोंडे
॥गुंजाचूडामणिःसौम्याशिखंडीकुसलारुणा॥ताम्रिकाशीतपा
कीस्यादुच्चटाकृष्णाचूडिका॥१३॥रक्ताचरक्तिकाचैवकाभोजी
भिल्लिभूषणा॥वन्यास्यामानचूडाचविज्ञेयाषोडशाह्वया॥१४॥
द्वितीयाश्वेतकांभोजीश्वेतगुंजाभिरिंटिका॥काकादनीकाकपी
लुर्वक्रशल्याषडाह्वया॥१५॥गुंजाद्वयंतुतिक्तोष्णंबीजंवांतिकरी
शिफा॥शूलघ्नंविषकृत्यघ्नंवश्येश्वेतंचशस्यते॥१६॥गुंजादोनि
॥गुलुगुंजे॥एरडु॥वृद्धदारुकआवेगीजुंगकोदीर्घवालुकः॥वृ
द्धःकोटरपुष्पीस्यादजांत्रीछागलांत्रिका॥१७॥जीर्णदारुद्वि
तीयास्याज्जीर्णाफंजीसुपुष्पिका॥अजरासूक्ष्मपत्राचविज्ञेयाच
षडाह्वया॥१८॥वृद्धदारुद्वयंगौल्यंपिच्छिलंकफवातहृत॥बल्यं
कासामदोषघ्नंद्वितीयंस्वल्पवीर्यदं॥१९॥दोनिफांडि॥एरडुम्र
ष्टे॥कैवर्तिकासुरंगाचलतावल्लीद्रुमारुहा॥रिंगिणीवल्लरंगा
चसुभगेत्यष्टधाभिधा॥२०॥कैवर्त्तिकालघुर्वृष्याकषायाकफना
शनी॥कासस्वासहराचैवसैवमंदाग्निदोषनुत्॥२१॥कैवर्त्ति
कामालवेप्रसिद्धा॥तालीतमालीताम्राचताम्रवल्लीतमालि
का॥सूक्ष्मवल्लीसुलोमाचशोधनीतालिकानवा॥२२॥ताम्र
वल्लीकषायास्यात्कफदोषविनाशनी॥मुखकंठोत्थदोषघ्नी
श्लेष्मशुद्धिकरीपरा॥२३॥ताम्रवल्लीचित्रकूटदेशेप्रसिद्धा॥
कांडीरःकांडकटुकोनासासंवेदनःपटुः॥उग्रकांडस्तोयव
ल्लीकारवल्लीसुकांडकः॥२४॥कांडीरःकटुतिक्तोष्णःसरोदु
ष्टव्रणार्त्तिनुत्॥लूतगुल्मोदरप्लीहशूलमंदाग्निनाशनः॥२५
॥कांडवेलि॥मणिगुरवल्लि॥जंतुकाजंतुकारीचजननीचक्र
वर्तिनी॥तिर्यक्फलानिशांधाचबहुपत्रासुपत्रिका॥२६॥रा
जकृष्णाजनेष्टाचकपिकच्छुफलोपमा॥रंजनीसूक्ष्मवल्लीच
भ्रमरीकृष्णवल्लिका॥२७॥विज्जुल्लिकावृक्षरुहाग्रंथिपर्णी
सुवल्लिका॥तरुवल्लीदीर्घफलाएकविंशतिसंज्ञका॥२८॥जं
तुकाशिशिरातिक्तारक्तपित्तकफापहा॥दाहतृष्णावमिघ्नीचरु

चिरुद्दीपनीपरा॥२९॥जंतुकामालवेप्रसिद्धा॥अत्यम्लपर्णीती
क्ष्णाचकंडुलावल्लिसूरणा॥वल्लीकरवडादिश्चवनस्थारण्यवासि
नी॥३०॥अत्यम्लपर्णीतीक्ष्णाम्लाप्लीहशूलविनाशनी॥वातहृद्दी
पनीरुच्यागुल्मश्लेष्मामयापहा॥३१॥करवडवेलि॥हेगोलि
॥शंखपुष्पीसुपुष्पीचशंखाह्वाकंबुमालिनी॥सितपुष्पीकंबुपु
ष्पीमेध्यावनविलासिनी॥३२॥चिरिंटीशंखकुसुमाभूलग्नाशं
खमालिनी॥इत्येषाशंखपुष्पीस्यादुक्ताह्वादशनामभिः॥३३॥
शंखपुष्पीहिमातिक्तामेधाकृत्स्वरकारिणी॥ग्रहभूतादिदोष
घ्नीवशीकरणसिद्धिदा॥३४॥शंखुली॥शंखपुष्पि॥आवर्तकी
तिंदुकिनीविभांडीविषाणिकारंगलतामनोज्ञा॥सारक्तपुष्पीम
हदादिजालीसापीतकीलापिचचर्मरंगा॥३५॥वामावर्त्ताचसंयु
क्ताभूसंख्याशशिसंयुता॥आवर्तकीकषायाम्लाशीतलापित्तहा
रिणी॥३६॥आह्लीतलाडवल्लिकोकणेप्रसिद्धा॥कर्णस्फोटाश्रु
तिस्फोटान्निपुटाकृस्नतंदुला॥चित्रपर्णीस्फोटलताचंद्रिकाचा
र्द्धचंद्रिका॥३७॥कर्णस्फोटाकटुस्तिक्ताहिमासर्वविषापहा॥ग्र
हभूतादिदोषघ्नीसर्वव्याधिविनाशनी॥३८॥कानफोडा॥हिडि
विडिके॥कट्वीकटुकवल्लीचसुकाष्ठाकाष्ठवल्लिका॥सुवल्लीचमहा
वल्लीपशुमोहनिकाकटुः॥३९॥कट्वीतुकटुकाशीताकफश्वासा
र्त्तिनाशनी॥नानाज्वरहरारुच्याराजयक्ष्मनिवारिणी॥४०॥कटु
की॥तोंरेमद्दु॥ज्ञेयामृतस्रवावृक्षारुहाख्यातोयवल्लिका॥घनव
ल्लीसितलतानामभिःशरसंमिता॥४१॥उक्तामृतस्रवापथ्याईषत्ति
क्तरसायनी॥विषघ्नीव्रणकुष्ठामकामलांश्चयक्ष्मजयेत्॥४२॥अमृ
तवल्लि॥अमृतस्रवाचित्रकूटदेशेप्रसिद्धा॥पुत्रदात्रीतुवातारिभी
मरीश्वेतपुष्पिका॥वृत्तपत्रातिगंधालुर्वैशिजातासुवल्लरी॥४३॥पु
त्रदात्रीतुवातघ्नीकटुरुष्णाकफापहा॥सुरभिःसर्वदापथ्यावंध्या
दोषविनाशनी॥४४॥पुत्रदायिमालवेप्रसिद्धा॥पलाशीपत्रव
ल्लीचपर्णवल्लीपलाशिका॥खुरपर्णीसुपर्णीचदीर्घवल्लीविषाद
नी॥४५॥अम्लपत्रीदीर्घपत्रीरसाम्लाचाम्लकानसा॥अम्लानकी

कांजिकाचस्याच्चतुर्दशधाभिधा॥४६॥पालाशीलघुरम्याचमुख
दोषविनाशनी॥अरोचकाहरापथ्यापित्तकोपकरीचसा॥४७॥
पलाशीनागरदेशेप्रसिद्धा॥इतिबहुविधवल्लीस्तोमनामाभि
धानप्रगुणगुणयथावद्वर्णनापूर्णमेनं॥सुललितपदसर्गवर्गना
म्नाचवैद्यःसदसिबहुविलासंव्यासवद्यातनोतु॥४८॥दीप्ताद्दीधि
तयस्तथांधतमसध्वंसायभानोरिवव्यातन्वंतिनिजंरुजांविजय
तेवीर्यैर्विरूढोवयाः॥तासामेषविलासभूमिरसमोवर्गस्तुनोवीरु
धांविरुद्वर्गइतिप्रतीतमहिमानैसर्गिकैर्योगुणैः॥४९॥प्राम्नायस्य
परिग्रहंत्रिविधसद्वीरैकचूडामणेस्तीव्राण्योषधयःस्रवंतिसहसा
वीर्याण्यजर्यादिव॥तस्यायंनृहरेःकृतौस्थितिमगाद्वर्गोगुडूच्यादि
कस्तार्तीयीकतयाभिधानरचनाचूडामणौकीर्त्तितः॥५०॥इतिवैद्य
कसूद्रन्यरत्नालंकरणश्रीमदीश्वरसूरिसूनुश्रीकंठचरणारविंद
सेवाहेवाकराजहंसश्रीकाश्मीराद्यवंशाचार्यपरंपरान्वयश्रीनर
हरिपंडितविरचितेनिघंटुराजापरनामधेयपर्यायवत्त्वभिधान
चूडामणौगुडूच्यादिवर्गस्तृतीयः॥अथशतान्हादिवर्गः॥शता
ह्वाचैवमिश्रेयाशालिपर्णीसमष्ठिला॥बृहतीकंटकारीचद्विधा
स्यात्पृश्निपर्णिका॥१॥द्विधागोक्षुरकश्चैवयासोवास्तासितावरी
॥धन्वयासद्वयंचाग्निदमनीवाकुचीतथा॥२॥सणपुष्पीद्विधाचै
वत्रिविधाशरपुंखिका॥सर्णोबष्टाद्विधानीलीद्विधागोजिह्विका
स्मृता॥३॥अपामार्गद्वयंपंचबलाराष्ट्रीमहादिव॥हयगंधाचह
पुषाशनावर्यौद्विधामते॥४॥एलोवालुकतेरण्योकलिकारीजयं
तिका॥काकमाचीश्रुतश्रेणीभृङ्गराजस्त्रिधामतः॥५॥काकजंघा
त्रिधाचुंचुःत्रिविधःसिंदुवारकः॥भंडास्यात्पुत्रदाचैवतक्रास्वर्ण
लिकाद्वया॥६॥खसखसःसिगडीचैवज्ञेयोवन्यकुसुंभकः॥ह्या
हुल्लीकासमर्दश्चरविपत्रोद्विधाविका॥७॥अजागंधाःदित्यभक्ता
विषमुष्टिर्द्विधापरा॥कालांजनीद्विकर्पासीद्विविधःकोकिलाक्ष
कः॥८॥सातलाकामवृद्धिश्चचक्रमर्दोथकिंकिरा॥द्रेदाडिस्या
क्रमेणैवसुपाःप्रोक्तायथाक्रमात्॥९॥शताह्वाशतपुष्पाचमिसि

घीषाचपोतिका॥अहिछत्राप्यवाक्पुष्पीमाधवीकारवीशिफा॥१०॥
संघातपत्रिकाछत्रावज्रपुष्पासुपुष्पिका॥शतप्रसूनावहलापुष्पा
ह्वाशतपत्रिका॥११॥वनपुष्पाभूरिपुष्पासुगंधासूक्ष्मपत्रिका॥गं
धारिकातिछत्राचचतुर्विंशतिनामका॥१२॥शताह्वाकटुस्तिक्ता
स्निग्धाश्लेष्मातिसारनुत्॥ज्वरनेत्रव्रणघ्नीचबस्तिकर्मणिशस्यते॥
॥१३॥सोफ॥सब्बसिगे॥मिश्रेयातालपर्णीचतालपत्रामिशिस्तथा॥
शालेयास्याच्छीतशिवाशालीनावनजाचसा॥१४॥अवाक्पुष्पीमधु
रिकाछत्रासंहितपुष्पिका॥सुपुष्पासुरसावन्याज्ञेयापंचदशाह्वया
॥१५॥मिश्रेयामधुरास्निग्धाकटुःकफहरापरा॥वातपित्तोत्थदोषघ्नी
प्लीहजंतुविनाशनी॥१६॥वनसउफ॥कासब्बसिगे॥स्याच्छालिपर्णी
सुदलासुपत्रिकास्थिराचसौम्याकुसुदाग्रुहाध्रुवा॥विदारिगंधांशुम
तीसुपर्णिकास्याद्दीर्घमूलापिचदीर्घपत्रिका॥१७॥वातघ्नीपीतिनी
तन्वीसुधासर्वानुकारिणी॥शोफघ्नीसुभगादेवीनिश्चलाव्रीहिपर्णि
का॥१८॥सुमूलाचसुरूपाचसुपत्राशुभपत्रिका॥शालिपर्णीशा
लिदलास्यादूनत्रिंशदाह्वया॥१९॥शालिपर्णीरसेतिक्तागुरूष्णा
वातदोषनुत्॥विषमज्वरमेहार्शःशोफसंतापनाशनी॥२०॥भूइ
सेवरा॥सुरुलुबोंने॥समष्ठिलश्चभंडीरोनद्याम्रश्चाम्रगंधक
कृ॥काकाम्रःकंटकिफलोप्युपदंशोमुनिह्वयः॥२१॥नद्याम्रःक
टुरुष्णश्चरुच्योमुखविशोधनः॥कफवातप्रशमनोदाहकृद्दीप
नःपरः॥२२॥काकुंबा॥तोरेमाउ॥बृहतीमहतीक्रांतावार्ताकीसिं
हिकाकुली॥राष्ट्रिकास्थूलकंठाचभंडाकीतुमहोटिका॥२३॥ब
हुपत्रीकंटतनुःकंटालुर्कटुफलातथा॥डोरलीवनवृन्ताकीनामा
न्यस्याश्चतुर्दश॥२४॥बृहतीकटुतिक्तोष्णावातजिज्ज्वरहारिणी॥
अरोचकामकासघ्नीश्वासहृद्रोगनाशनी॥२५॥डोरलीपांडरी॥
बनभंटी॥हेग्गुलु॥बृहत्यन्यासर्पतनुःक्षविकापीततंदुला॥पुत्रप्र
दाबहुफलागोधिनीतिषडाह्वया॥२६॥क्षविकाबृहतीतिक्ताकटु
रुष्णाचतत्समा॥युक्त्याद्रव्यविशेषेणधारासंस्तंभसिद्धिदा॥६॥बृ
हतीभेदाः॥श्वेतान्याश्वेतबृहतीज्ञेयाश्वेतमहोटिका॥श्वेतसिंहीश्वे

तफलाश्वेतवार्त्ताकिनांचषट्॥२८॥विज्ञेयाश्वेतबृहतीवातश्ले
ष्मविनाशनी॥रुच्याचांजनयोगेननानानेत्रामयापहा॥२९॥
पांढरीडोरली॥बिलियगुल्लु॥कंटकारीकंटकिनीदुःस्पर्शादु
ष्प्रधर्षिणी॥क्षुद्राव्याघ्रीनिदिग्धाचधाविनीक्षुद्रकंटिका॥३०॥
बहुकंटाक्षुद्रकंटाज्ञेयाक्षुद्रफलाचसा॥कंटारिकाचित्रफला
स्याच्चतुर्दशसंज्ञका॥३१॥कंटकारीकटूष्णाचदीपनीश्वासका
सजित्॥प्रतिश्यायार्त्तिदोषघ्नीकफवातज्वरार्त्तिनुत्॥३२॥रिंग
णी॥भटकटैया॥नेलगुल्लु॥सितकंटारिकाश्वेताक्षेत्रदूतीचल
क्ष्मणा॥सितसिंहीसितक्षुद्राक्षुद्रवार्त्ताकिनीसिता॥३३॥क्लिन्ना
चकटुवार्त्ताकीक्षेत्रजाकपटेश्वरी॥स्यान्निःस्नेहफलारामासित
कंठामहौषधी॥३४॥गर्द्दभीचंद्रिकाचांद्रीचंद्रपुष्पाप्रियंकरी॥
नाकुलीदुर्लभारास्नाह्विरेषाद्वादशाह्वया॥३५॥श्वेतकंटारिका
रुच्याकटूष्णाकफवातनुत्॥चक्षुष्यादीपनीज्ञेयाप्रोक्तारसनिया
मिका॥३६॥श्वेतरिंगणी॥श्वेतभटकटैया॥बिलियनेलगुल्लु॥स्या
त्पृश्निपर्णीकलसीमहागुहाशृगालविन्नाधमनीचमेखला॥लांगू
लिकाक्रोष्टुकपुच्छिकागुहाशृगालिकासेवचसिंहपुच्छिका॥३७॥
पृथक्पर्णीदीर्घपर्णीदीर्घाक्रोष्टुकमेखला॥चित्रपर्ण्युपचित्राचस्या
त्पुच्छाष्टदशाह्वया॥३८॥पृश्निपर्णीकटूष्णाम्लानिक्तातीसारकासजि
त्॥वातरोगज्वरोन्मादव्रणदाहविनाशनी॥३९॥सेवरा॥नरियल
वोने॥पिटोनी॥स्याद्गोक्षुरोगोक्षुरकःक्षुरांगःश्वदंष्ट्रकःकंटकभद्रकं
टकौ॥स्याद्व्यालदंष्ट्रःक्षुरकोमहांगोदुश्चक्रमश्चक्रमशोदशाहुः॥४०
॥वेडिलीसराटी॥दोडुनेग्गिलु॥गोखरू॥क्षुद्रोपरोगोक्षुरकस्त्रिकं
टकःकंटीषडंगोबहुकंटकःक्षुरः॥गोकंटकःकंटफलःपलंकषाक्षु
द्रक्षुरोभक्षटकश्वणद्रुमः॥४१॥स्थलश्रृंगाटकश्चैववनशृंगाटकस्त
था॥इक्षुगंधःस्वादुकंटःपर्यायाःषोडशस्मृताः॥४२॥स्यानामुभौ
गोक्षुरकौसुशीतलौबलप्रदौतौमधुरौचबृंहणौ॥कृच्छ्राश्मरीमेहवि
दाहनाशनौरसायनौतत्रबृहद्गुणोत्तरः॥४३॥दोन्हिसराटियाचेगु
ण॥एरडुनेग्गिलगुण॥यासोयवासोबहुकंटकोल्पकःक्षुद्रेंगुदीरो

दनिकाचकच्छुरा॥स्याद्बालपत्रोधिककंटकःखरःसुदूरमूलोविष
कंटकोपिसः॥४४॥अनंतस्तीक्ष्णकंटश्चसमुद्रांतोमरुद्भवः॥दीर्घ
मूलःसूक्ष्मपत्रोविषघ्नःकंटकालुकः॥४५॥त्रिकर्णिकाचगांधारी
चैकविंशतिनामभिः॥यासोमधुरतिक्तोसौशीतःपित्तार्त्तिदाहजि
त्॥बलदीपनकृत्तृष्णाकफछर्दिविसर्पजित्॥४७॥यवासा॥तोरंइं
गुलु॥वासकःसिंहिकावासाभिषंगानावसादनी॥आटरूषःसिं
हमुखीसिंहीकंठीरवीवृषः॥४८॥शितकर्णीवाजिदंतानासापंच
मुखीतथा॥सिंहपर्णीमृगेंद्राणीनामान्यस्यास्तुषोडश॥४९॥वासा
तिक्ताकटुःशीताकासघ्नीरक्तपित्तजित्॥कामलाकफवैकल्यज्वर
श्वासक्षयापहा॥५०॥आडुलिसा॥अडूसा॥आडसोगे॥शितावरी
शितवरःसूच्याह्वःसूचिपत्रकः॥श्रीवारकःशिखीवभ्रुःस्वस्तिकः
सुनिषण्णकः॥५१॥कुरुटःकुक्कुटःसूचीदनःश्वेतावरोपिसः॥मे
धाकृद्ग्राहकश्चेतिज्ञेयःपंचदशाह्वयः॥५२॥शितावरस्तुसंग्राहीक
षायोष्णत्रिदोषजित्॥मेधारुचिप्रदोदाहज्वरहारीरसायनः
॥५३॥कुरुडाहणे॥खडकतिरा॥धन्वयासोदुरालंभानाम्रमू
लीचकच्छुरा॥दुरालंभाचदुस्पर्शाधन्वीधन्वयवासकः॥५४॥
प्रबोधनीसूक्ष्मदलाविरूपादुरभिग्रहा॥दुर्लभादुष्प्रधर्षाच
स्याच्चतुर्दशसंज्ञका॥५५॥दुरालंभाकटुस्तिक्तासोष्णासारांस्लि
कातथा॥मधुरावातपित्तघ्नीज्वरगुल्मप्रमेहजित्॥५६॥वेलिका
सुली॥धमासा॥वल्लिदुरुवे॥अन्यासुद्रदुरालंभामरुस्थामरुसं
भवा॥विशारदाजभक्षास्यात्स्याज्जादस्तुष्ट्रभक्षिका॥५७॥कषायाफ
णिहृच्चैवग्राहिणीकरभप्रिया॥करभादनिकाचेतिविज्ञेयाद्वादश
भिधा॥५८॥दुरालंभाद्वितीयाचगौल्याम्लज्वरकुष्ठनुत्॥श्वासका
सभ्रमघ्नीचपारदेशुद्धिकारिका॥५९॥सान्हीवेलिकासुली॥किरु
वल्लिदुरुवे॥अथाग्निदमनीवह्निदमनीवह्निकंटका॥वह्निकंटारिका
गुच्छफलाक्षुद्रफलाचसा॥६०॥विज्ञेयाक्षुद्रदुस्पर्शाक्षुद्रकंटारिकात
था॥मत्स्येंद्रमातादमनीस्यादित्येषादशाह्वया॥६१॥कटूष्णाचाग्निद
मनीरूक्षावातकफापहा॥रुचिकृद्दीपनीहृद्यागुल्मप्लीहापहाभवे

त्॥६२॥अग्निदमना॥चित्तरटे॥वाकुचीसोमराजीचसोमवल्लीसु
वल्लिका॥सितासितावरीचंद्रलेखाचांद्रीचसुप्रभा॥६३॥कुष्ठहंत्री
चकांबोजीप्रतिगंधाचवल्गुजा॥स्मृताचंद्राभिधाराजीकालमाषीत
थैंदवी॥६४॥कुष्ठदोषापहाचैवकांतिदावल्गुजातथा॥चंद्राभिधा
प्रभायुक्ताविंशतिस्यात्तुनामतः॥६५॥वाकुचीकटुतिक्तोष्णाकिमि
कुष्ठकफापहा॥त्वग्दोषविषकंडूतिखर्जुप्रशमनीचसा॥बाउची॥
बाउचिगे॥सणपुष्पीबृहत्पुष्पीसणिकासणघंटिका॥पीतपुष्पी
स्थूलफलालोमशाअल्पपुष्पिका॥६८॥सणपुष्पीरसेतिक्ताकषा
याकफवातजित्॥अजीर्णज्वरदोषघ्नीवमनीरक्तदोषनुत्॥६९॥
खिलिहिला॥शणबीज॥गिलुगिज्जि॥द्वितीयान्यासूक्ष्मपुष्पास्या
त्क्षुद्रसणपुष्पिका॥विष्टिकासूक्ष्मपर्णीचबाणाह्वासूक्ष्मघंटिका
॥७०॥सणपुष्पीक्षुद्रतिक्तावम्यारसनियामिका॥तृतीयान्यावृत्त
पर्णीश्वेतपुष्पामहासिता॥सामहाश्वेतघंटीचसामहासणपुष्पि
का॥७१॥महाश्वेताकषायोष्णाशस्तारसनियामिका॥कुतूहले
षुचप्रोक्तामोहनस्तंभनादिषु॥७२॥सान्हीकिलिहिला॥पांढरी
खिलिहिला॥कुणकुणा॥चिक्कगिलुगुचिमनेकाडविट्टि॥शरपुं
खाकांडपुंखाबाणपुंखेषुपुंखिका॥ज्ञेयासायकपुंखाचइषुपुंखा
चसप्तधा॥७३॥शराभिधाचपुंखास्याच्छुताद्यासितसायका॥सित
पुंखाश्वेतपुंखाशुभ्रपुंखाचपंचधा॥७४॥शरपुंखाकटूष्णाचक्रि
मिवातरुजापहा॥श्वेतात्वेषागुणाढ्यास्यात्प्रशस्ताचरसायने॥७५
॥शेनिउनिलिया॥येरडुकोग्गि॥शरपुंखा॥अन्यात्तुकंठपुंखास्या
त्कंठालुःकंठपुंखिका॥कंठपुंखाकटूष्णाचक्रिमिशूलविनाशनी
॥७६॥कंटउन्हली॥मुल्लुगोग्गि॥सणस्तुमाल्यपुष्पस्याद्वमनःक
टुतिक्तकः॥निशावनोदीर्घशाखस्त्वक्सारोदीर्घपल्लवः॥७७॥स
णस्त्वम्लःकषायश्चमलगर्भास्रपातनः॥वांतिकृद्ग्राहकफनुद्ज्ञे
यस्तीव्रांगमर्दजित्॥७८॥सण॥सणवु॥अंबष्ठांबालिकांबालाशठाकां
बालिकांबिका॥अंबाचमांविकाचैवदृढवल्कामयूरिका॥७९॥गं
धपत्रीचित्रपुष्पीश्रेयसीमुखवाचिका॥छिन्नपत्राभूरिमल्लीविज्ञे

याषोडशाह्वया॥८०॥अंबष्ठासाकषायाम्लाकफकंठरुजापहा॥वा
तामयबलासघ्नीरुचिकृद्दीपनीपरा॥८१॥आंबाडा॥पुडोन॥नी
लीनीलानीलिनीनीलपत्रीतुत्थाराञ्जीनीलिकानीलपुष्पी॥काली
श्यामाशोधनीश्रीफलाचग्राम्याभद्राभारवाहीचमोचा॥८२॥कृ
ष्णाव्यंजनकेशीचरंजनीचमहाफला॥असिताक्लीतनीनीलके
शीचारटिकामता॥८३॥गंधपुष्पाश्यामलिकारंगपत्रीमहाब
ला॥स्थिररंगारंगपुष्पीस्यादेकत्रिंशदाह्वया॥८४॥नीलीतुकटु
तिक्तोष्णाकेश्याकासकफामनुत्॥मरुद्विषोदरव्याधिगुल्मजंतु
ज्वरापहा॥८५॥द्विभाषानीली॥अन्याचैवमहानीलीअमलाराज
नीलिका॥तुत्थाश्रीफलिकामेलाकेशाह्वाभृशपत्रिका॥८६॥महा
नीलीगुणाढ्यास्याद्रंगश्रेष्ठासुवीर्यदा॥पूर्वोक्तनीलिकादेशासगु
णासर्वकर्मसु॥८७॥वडिलनीली॥हिरियनीली॥गोजिह्वाखरप
त्रीस्यात्सूनकार्दार्विकेतथा॥अधोमुखाधेनुजिह्वाअधःपुष्पीचसप्त
धा॥८८॥गोजिह्वाकटुकातीव्राशीतलापित्तनाशनी॥व्रणसंरोपणी
चैवसर्वदंतविषार्तिजित्॥८९॥घाउना॥यलुनालगे॥पथरी॥गोभी
॥गोजिव्हा॥अपामार्गस्तुशिखरीकिणिहीखरमंजरी॥दुर्ग्रहश्चाप्य
धःशल्यःप्रत्यक्पुष्पीमयूरकः॥९०॥कांडकंठःशेखरिकोमर्कटीदु
रभिग्रहः॥वशिरश्चपराक्पुष्पीकटीमर्कटपिप्पली॥९१॥कटुमं
जरिकोनंदीस्वकःपंक्तिकंटकः॥मालाकंठश्चकुब्जश्चत्रयोविंशति
नामकः॥९२॥अपामार्गस्तुतिक्तोष्णःकटुश्चकफनाशनः॥अर्शःकं
डूदुरामघ्नोरक्तहृद्ग्राहिवांतिकृत्॥९३॥आघाडा॥उत्तरणे॥चिचि
रा॥अन्योरक्तोह्यपामार्गःक्षुद्रापामार्गकस्तथा॥आघट्टकोदुग्धनि
कारक्तबिंदुल्पपत्रिका॥९४॥रक्तोपामार्गकःशीतःकटुकःकफवा
तनुत्॥व्रणकंडूविषघ्नश्चसंग्राहीवांतिकृत्परः॥९५॥तांबडाआघा
डा॥केंपिनुत्तरणे॥रक्तापामार्गः॥बलासमंगोदकिकाचभद्राभद्रो
दनीस्यात्खरकाष्ठिकाच॥कल्याणिनीभद्रबलाचमोटावाटीबला
ह्वेतिदशाह्वयास्यात्॥९६॥बलातितिक्तामधुरापित्तातीसारनाश
नी॥बलवीर्यप्रदापुष्टिकफरोगविशोधनी॥९७॥चिकणा॥देणेग

रग॥वरियारा॥सहासमंगोदनिकौदनाहूयारसारुहारद्धिबल
सतंडुला॥भुजंगजिह्वापिच्छीलपाकिनीशनाबलाशीतवराबलो
त्तरा॥९८॥बल्याखिरिहिटीचैवललज्जिह्वात्रिपंचधा॥महासमंगा
मधुराअम्लाचैवत्रिदोषहा॥९९॥युक्त्याबुधैःप्रयोक्तव्याज्वरदाहवि
नाशनी॥चिक्कणभेदु॥खिरिहिटिवा॥बेणेंगरगभेद॥महाबला
ज्येष्ठबलाकटंभराकेशारुहाकेसरिकामृगादनी॥स्याद्धर्षपुष्पापि
चकेशवर्द्धनीपुरासणीदेवसहाचसारणी॥१००॥सहदेवीपीतपु
ष्पीदेवाहींगंधवल्लरी॥मृगामृगरसाचेतिज्ञेयासप्तदशाह्वया॥
॥१०१॥महाबलातुहृद्रोगवातार्शःशोफनाशनी॥शुक्रवृद्धिकरी
बल्याविषमज्वरहारिणी॥१०२॥पेटारी॥सहदेवी॥वेल्लुदुरुवे॥
बलिकातिबलाबल्याविकंकतावाद्यपुष्पिकाघंटा॥शीताचशीत
पुष्पाभूरिबलावृष्यगंधिकादशधा॥१०३॥तिक्ताकटुश्चातिबलावा
तघ्नीक्रिमिनाशनी॥दाहतृष्णाविषच्छर्दिक्लेदोपशमनीपरा
॥१०४॥कांसुली॥मुल्लुदुरुवे॥भद्रोदनीनागबलाखरगंधाच
तुःफला॥महोदयामहाशाखामहापत्रामहाफला॥१०५॥वि
श्वदेवातथारिष्टाखर्वाह्रस्वागवेधुका॥देवदंडामहादंडाघाटेत्या
ह्वातुषोडश॥१०६॥मधुराम्लानागबलाकषायोष्णागुरुःस्मृता
॥कंडूतिकुष्ठवातघ्नीव्रणपित्तविकारजित्॥१०७॥तुप्पटी॥नागब
ला॥बहगरुके॥महाराष्ट्रीतुसंप्रोक्ताशारदीतोयपिप्पली॥म
त्स्यादनीमत्स्यगंधालांगलीसकुलादनी॥१०८॥अग्निज्वालाचित्र
पत्रीप्राणदाजलपिप्पली॥तृणशीताबहुशिखास्यादित्येषात्रयोद
श॥१०९॥महाराष्ट्रीकटुस्तीक्ष्णाकषायासुरवशोधनी॥व्रणकी
टादिदोषघ्नीरसदोषनिबर्हणी॥११०॥पिप्पलकाउ॥होम्रगुलु॥
पनिसंगा॥अश्वगंधावाजिगंधाकंबुकाष्ठावराहिका॥वराहकर्णी
तुरगीवनजावाजिनीहयी॥१११॥पुष्टिदाबलदापुण्याहयगंधा
चपीवरा॥पलाशपर्णीवातघ्नीश्यामलाकामरूपिणी॥११२॥का
लप्रियाकरीबल्यागंधपत्रीहयप्रिया॥वराहपत्रीविज्ञेयात्रयोविंश
तिनामका॥११३॥अश्वगंधाकटूष्णास्यातिक्ताचमदगंधिका॥बल्या

वातहराहंतिकासश्वासक्षयव्रणान्॥११४॥आसांदु॥अंगुर॥आ
संधिका॥हपुषाविपुषाविस्राविस्रगंधाविगंधिका॥अन्याचासौस्व
ल्पफलाकच्छुघ्नीध्वांक्षनाशिनी॥११५॥प्लीहशत्रुर्विषघ्नीचकफ
घ्नीचापराजिता॥पूर्वानुपंचनाम्नीस्यादपरासप्तधाभिधा॥११६॥
हपुषाकटुतिक्तोष्णागुरुःश्लेष्मबलासजित्॥प्रदरोदरविड्बंधशू
लगुल्मार्शसांहरा॥११७॥सेरणीयादोनी॥यरडहब्बे॥हौबेर॥श
तावरीशतपदीपीवरीधीवरीवरा॥दृश्याह्वीप्याह्वीपशत्रुर्द्वीपिका
मरकंटिका॥११८॥सूक्ष्मपत्रासुपत्राचबहुमूलाशताह्वया॥ना
रायणीस्वादुरसाशताह्वालघुपर्णिका॥११९॥आत्मशल्याजटा
मूलाशतवीर्यामहोदनी॥मधुराशतमूलाचकेशिकाशतनेत्रिका
॥१२०॥विश्वास्याबेस्सवीकार्ष्णीवासुदेवीवरीयसी॥दुर्मरातेज
वल्लीचस्यात्त्रयस्त्रिंशदाह्वया॥१२१॥सानीकांटेसेरु॥छोटीशता
वरी॥किरियआसडि॥महाशतावरीवीरातुंगिनीबहुपत्रिका॥
॥१२२॥सहस्रवीर्यासुरसामहापुरुषदंतिका॥दग्धकःश्रमहावी
र्याफणिजिह्वामहाशता॥१२३॥शतवीर्यासवीर्याचनामान्यस्यास्त्र
योदश॥शतावर्येहिमेवृष्येमधुरेपित्तजित्परे॥कफवातहरेतिक्तेम
हाश्रेष्ठेरसायने॥शतावरीहृद्यंवृष्यंमधुरंपित्तजिद्धिमं॥१२४॥मह
तीकफवातघ्नीतिक्ताश्रेष्ठारसायने॥दोन्हीकांटेसेरुगुण॥यरडु
आसडियगुण॥बडीशतावरी॥एलावालकमालूकंवालुकंहरिवालु
कं॥१२५॥एल्कालुकंकपित्थंचदुर्वर्णंप्रसरंदृढं॥एलागंधिकमेला
ह्वंगुप्तगंधिसुगंधिकं॥एलाफलंचविज्ञेयंद्विःसप्ताह्वयमुच्यते॥१२६
एलावालुकमत्युग्रंकषायंकफवातनुत्॥मूर्च्छार्तिज्वरदाहांश्चना
शयेद्रोचनंपरं॥१२७॥एलावालुक॥कलंगडले॥नैरिणीनेरणस्त
रःकुनीलीनामतश्चतुः॥नेरणःशिशिरस्तिक्तोव्रणघ्नोरुणरंगदः
॥१२८॥नेरणा॥बेवत्तिगे॥कलिकारीलांगलिनीहलिनीगर्भपाति
नी॥दीप्तिर्विशल्याग्निमुखीहलीनक्तेंदुपुष्पिका॥१२९॥विद्युज्ज्वा
लाग्निजिह्वाचव्रणहृत्पुष्पसौरभा॥स्वर्णपुष्पावह्निशिखास्यादेषा
षोडशाह्वया॥१३०॥कलिकारीकटूष्णाचकफवातनिकृंतनी॥गर्भ

तः शल्यनिःकासकारिणीसारिणीपरा ॥१३१॥ लांगलि लांगुलिके ॥ क
रिहारी ॥ राडागारि ॥ जयंतीतुबलामोटाहरिताचजयातथा ॥ विजया
सूक्ष्ममूलाचविक्रांताचापराजिता ॥१३२॥ ज्ञेयाजयंतीगलगंडहारी
तिक्ताकटूष्णानिलनाशनीच ॥ भूतापहाकंठविशोधनीचकुष्ठातु
सात्तत्ररसायनीस्यात् ॥१३३॥ सोवेरि ॥ जोगरसे ॥ काकमाचीध्वांक्षमा
चीवायसाह्वाचवायसी ॥ सर्वतिक्ताबहुफलाकटूफलाचरसायनी
॥१३४॥ गुंछफलाकाकमातास्वादुपाकाचसुंदरी ॥ वाराचंद्राविणी
चैवमत्स्याक्षीकुष्ठनाशनी ॥१३५॥ तिक्तिकाबहुतिक्ताचनाम्नाम
ष्टादशस्मृता ॥ काकमाचीकटुस्तिक्तारसोष्णाकफनाशनी ॥१३६
॥ शूलार्शःशोफदोषघ्नीकुष्ठकंडूनिहारिणी ॥ कावड़ ॥ काके ॥ कव
ष्या ॥ श्वुतश्रेणीद्रवंतीचन्यग्रोधीमूषिकाह्वया ॥ चित्रमूषकमाची
चप्रत्यक्श्रेणीचशंबरी ॥ श्वुतश्रेणीचचक्षुष्याकटुरात्खुविषापहा
॥१३७॥ व्रणदोषहराचैवनेत्रामयनिकृंतनी ॥ उंदिरुविगोवा ॥ इं
दुवालु ॥ इंद्रवालुक ॥ मार्कवोभृंगराजश्चभृंगाह्वःकेशरंजनः ॥
॥१३८॥ पितप्रियोरंगकश्चकेश्यःकुंतलवर्द्धनः ॥ पीतोन्यःस्वर्णभृं
गारोहरिवासोहरिप्रियः ॥१३९॥ देवप्रियोवंदनीयःपवनश्चषडा
ह्वयः ॥ नीलस्तुभृंगराजोन्योमहानीलस्तुनीलकः ॥१४०॥ महाभृं
गोनीलपुष्पःश्यामलश्चषडाह्वयः ॥ भृंगराजास्तुचक्षुष्यास्तिक्तोष्णाः
केशरंजनाः ॥१४१॥ कफशोफविषघ्नाश्चतत्रनीलोरसायनः ॥ मा
केतीनि ॥ गरुगमूरु ॥ भंगरैया ॥ काकजंघाध्वांक्षजंघाकाकाह्वास
श्चवायसी ॥१४२॥ पारापतपदीदासनदीकांतामलोमशा ॥ काकजं
घातुतिक्तोष्णाक्रिमिव्रणकफापहा ॥ वाधीर्यजीर्णजित्जीर्णवि
षमज्वरहारिणी ॥१४३॥ जीरी ॥ चीलेच ॥ चुंचुश्चविजलाचंचुःक
लभीवीरुपत्रिका ॥ चुंचुरश्चुंचुपत्रश्चसुशाकःक्षेत्रसंभवः ॥ चुंचु
स्तुमधुरातीक्ष्णाकषायामलशोषणी ॥१४४॥ गुल्मोदरविबंधा
र्शोग्रहणीरोगहारिणी ॥ महाचुंचु ॥ हिरियचुंचु ॥ वृहच्चुंचुर्विषारीस्यान्म
हाचुंचुःसुचुंचुका ॥ स्थूलचुंचुर्दीर्घपत्रीदिव्यगंधाचसप्तधा ॥ म
हाचुंचुःकटूष्णाचकषायामलरोधनी ॥१४५॥ गुल्मशूलोदरा

शोर्तिविषघ्नीचरसायनी॥क्षुद्रचुंचुस्तुचुंचुःस्याच्चुंचुःशुनकचुंचु
का॥१४६॥त्वक्सारभेदिनीक्षुद्राकटुकापरपत्रिका॥क्षुद्रचुंचुस्तु
मधुराकटूष्णाचकषायिका॥दीपनीशूलगुल्मार्शःशमनीचवि
बंधकृत्॥१४७॥लाहानचुंचु॥नाडचुंचु॥छोटिचेच॥चुंचुबीजंकटू
ष्णंचगुल्मशूलोदरार्तिजित्॥१४८॥विषत्वग्दोषकंडूतिआखुवृ
श्चिकविषापहं॥महाचुंचुबीजगुण॥सिंदुवारःश्वेतपुष्पःसिंदूकःसिं
दुवारकः॥१४९॥सूरसाधनकोनेतासिद्धकश्चार्धसिद्धकः॥सिं
दुवारःकटुस्तिक्तःकफवातक्षयापहः॥कुष्ठकंडूतिशमनःशूल
हृत्काससिद्धिदः॥नीलीनिर्गुंडी॥करियल्लोक्कि॥मेउडी॥सुगंधा
न्याशीतसहानिर्गुंडीनीलसिंदुकः॥१५२॥सिंदूकश्चापिकाभूत
केशीद्राणीचनीलिका॥कटूष्णानिलनिर्गुंडीतिक्तारूक्षाचकास
जित्॥१५३॥श्लेष्मशोफसमीरार्तिप्रदराध्मानहारिणीशेफालि
कातुसुवहाशुक्लांगीशीतमंजरी॥अपराजिताचविजयावात
कीभूतकेशिच॥शेफालिःकटुतिक्तोष्णारूक्षावातक्षयापहा
॥स्यादंगसंधिवातघ्नीगुदवातादिदोषनुत्॥पांढरीनिर्गुंडि॥बि
लियलेकि॥भेंडाभिंडातिकाभिंडोभिंडकःक्षेत्रसंभवः॥१५६॥
चतुष्पदःचतुःपुंड्रःसुशाकश्चाम्लपत्रकः॥करपर्णोवृत्तबी
जोभवेदेकादशाहूयः॥भेंडात्वम्लरसासोष्णाग्राहिकारुचिका
रिका॥भेडु॥बेंडे॥भेंडीरज्जुसंभव॥पुत्रदागर्भदात्रीचप्रजादा
पत्यदाचसा॥१५८॥सृष्टिप्रदाप्राणिमातातापसद्रुमसंनिभा॥
पुत्रदामधुराशीतानारीपुष्पादिदोषहा॥१५९॥पित्तदाहश्रम
हरागर्भसंभूतिदायिका॥गर्भेदा॥वेदनकस॥तक्राह्वातक्रभसा
तुतक्रपर्यायवाचका॥१६०॥पंचांगुलीसिताभास्यादेषापंचाभिधास्मृ
ता॥तक्राकटुःक्रिमिघ्नीस्याद्व्रणनिर्मूलिनीचसा॥ताका॥हिरणि
के॥स्वर्णुलीहेमपुष्पीस्यात्स्वर्णपुष्पध्वजातथा॥स्वर्णुलीकटुका
शीताकषायाचव्रणापहा॥सोनुली॥सदकनकस॥स नाय॥ख
सखसःसूक्ष्मबीजःस्यात्सुबीजःसूक्ष्मतंडुलः॥खसखसोमधुरःपा
केकांतिवीर्यबलप्रदः॥१६३॥खसखसमालवेप्रसिद्धः॥शिगडोम

निद्राप्रोक्ताबल्यापंगुत्वहारिणी॥वृष्यत्यतिचवातघ्नीगुच्छपुष्पीचस
प्तधा॥शिगडीकटुरुष्णाचवातहृत्स्तष्ठशूलहा॥युक्त्यारसायनेयोग्या
देहदार्ढ्यकरीचसा॥सेगुडिती॥सेगुडित्ते॥ज्ञेयोरण्यकुसुंभःस्यात्कौ
सुंभश्चाग्निसंभवः॥कौसुंभःकटुकःपाकेश्लेष्महृद्दीपनश्चसः॥६६॥
रानकसुंभे॥कालुकुसुंभे॥अडविकुसुमे॥आंगुल्यंहलुराख्यंचकरं
नरवदंतथा॥शिंबीफलंसुपुष्पंस्यात्अर्बुरंदंतकाष्ठकं॥६७॥हेम
पुष्पंतथापीतपुष्पंकांचनपुष्पकं॥नृपमंगल्यकंचैवशरस्तुष्पंत्रिरे
कधा॥६८॥आंगुल्यंतिक्तशीतंस्यात्स्वपुष्पंपित्तदोषनुत्॥सुखरुकुष्ठ
कंडूतिजंतुशूलव्रणापहं॥६९॥नरवडु॥आवरे॥भूईनरवडु॥ने
लांवरे॥भूम्यांगुल्यंकुष्ठकेतुर्मार्कंडीयंमहौषधं॥भूम्यांगुल्यंतिक्त
रसंज्वरकुष्ठामसिध्मनुत्॥७०॥कासवदा॥एलहुरि॥कासमर्दो
रिमर्दश्चकासारिःकासमर्दकः॥कालःकनकइत्युक्तोजारणोदी
पकश्चसः॥७१॥कासमर्दःसतिक्तोष्णोमधुरःकफवातनुत्॥अ
जीर्णकासपित्तघ्नःपाचनःकंठशोधनः॥७२॥कासवदीफरहुल
कसारश्च॥आदित्यपत्रोर्कदलार्कपत्रःस्यात्सूक्ष्मपत्रस्तपनच्छद
श्च॥कुष्ठारिरर्कोविटपःसुपत्रोरविप्रियोरश्मिपतिश्चरुद्रः॥७३॥
आदित्यपत्रःकटुरुक्षवीर्यःकफापहोवातरुजापहश्च॥संदीपनो
जाठरगुल्महारीज्ञेयःसचारोचननाशकश्च॥७४॥आदित्याचाभे
दु॥आदित्यभक्तियभेदु॥श्वेताम्लीत्वंबिकाप्रोक्तापिष्टोंडिःपिंडिका
चसा॥श्वेताम्लीमधुरारुच्यापित्तघ्नीबलदायिनी॥पीठोंडि॥बिलि
यहूलि॥कालीपिटोंडि॥करियहूलि॥नीलाम्लीनीलपिष्टोंडीश्या
माम्लीदीर्घशाखिका॥नीलाम्लीमधुरारुच्याकफवातहरापरा॥
कालीपिठोली॥अजगंधि॥बेलेयगिडु॥अजगंधाबस्तगंधासुरपु
ष्पीविगंधिका॥उग्रगंधाब्रह्मगर्भाब्राह्मीपूतिमयूरिका॥अजगंधा
कटूष्णास्याद्वातगुल्मोदरापहा॥कर्णव्रणार्तिशूलघ्नीपीताचेदंजने
हिता॥७८॥नीलवर्णी॥आदित्यभक्तावरदार्कभक्तासुवर्चलासूर्य
लतार्ककांता॥मंडूकपर्णीसुरसंभवाचसौरिस्तुतेजार्कहितारवीष्टा
॥७९॥मंडूकीसत्यनाम्नीस्याद्देषामार्जइवल्लभा॥विक्रांताभास्करेष्टा

चभवेद्दृष्टादशाह्वया॥ ८० ॥ आदित्यभक्ताशिशिरासतिक्ताकटुस्तथो ग्राकफहारिणीच॥ त्वग्दोषकंडूव्रणकुष्ठभूतग्रहोग्रशीतज्वरना शिनीच॥ ८१ ॥ आदित्ता॥ आदित्यभक्ति॥ हुरहुज॥ विषमुष्टिःकेश मुष्टिःसुमुष्टिरणमुष्टिकः॥ क्षुपडोडिसमायुक्तोमुष्टिःपंचाभिधः स्मृतः॥ ८२ ॥ विषमुष्टिःकटुस्तिक्तोदीपनःकफवातहृत्॥ कंठाम यहरोरुच्योरक्तपित्तार्तिदाहकृत्॥ ८३ ॥ दोडी॥ कडसिंगे॥ अन्या डोडीतुजीवंतीशाकश्रेष्ठासुखालुका॥ बहुपर्णीदीर्घपत्रासूक्ष्मप त्राचजीवनी॥ डोडीतुकटुतिक्तोष्णादीपनीकफवातजित्॥ कंठा मयहरारुच्यारक्तपित्तार्तिदाहनुत्॥ वेलिदोडी॥ वल्लिगडसिंगे ॥ कालांजनीचांजनीचरेचनीवासितांजनी॥ नीलांजनीचकृष्णाभा कालीकृष्णांजनीचसा॥ ८४ ॥ कालांजनीकटूष्णास्याद्रक्तामक्रि मिशोधनी॥ अपानावर्त्तशमनीजठरामयहारिणी॥ ८६ ॥ कालांज नीसर्वत्रप्रसिद्धा॥ कार्पासीसारिणीचैवचव्यास्थूलापिचुस्तथा॥ बदरीबादरश्चैवगुणसूत्रुंडिकेरिका॥ मरुद्वीसमुद्रांताज्ञेया एकादशाभिधा॥ कार्पासीमधुराशीतास्तन्यापित्तकफापहा॥ ८८ ॥ तृष्णादाहश्रमभ्रांतिमूर्छाहृद्बलकारिणी॥ कापुसी॥ हत्तिवनजा रण्यकार्पासीभारद्वाजीवनोद्भवा॥ ८९ ॥ भारद्वाजीहिमारुच्याव्र णशस्त्रक्षतापहा॥ रानकापुसी॥ काडहत्ति॥ कोकिलाक्षःशृगाली चशृंखलारकणस्तथा॥ ९० ॥ शृंगालघंटीवज्रास्थिशृंखलावज्रकं टकः॥ इक्षुरःक्षुरकोवज्रःशृंखलीकापिकेक्षणः॥ पिच्छिलाचेक्षुगं धाचज्ञेयाभुवनसंमिता॥ कोकिलाक्षस्तुमधुरःशीतःपित्तातिसारनु त्॥ ९२ ॥ वृष्यःकफहरोबल्योरुच्यःसंतर्पणःपरः॥ कोलिसा॥ कुलुगो लिके॥ तालमखाना॥ सातलासप्तलासारीविदुलाविमलामला॥ ॥ ९३ ॥ बहुफेनाचर्मकषाफेनदीप्ताविषाणिका॥ स्वर्णपुष्पीचित्रघ नास्यात्त्रयोदशनामका॥ ९४ ॥ सातलाकफपित्तघ्नीलघुतिक्तकषा यिका॥ विसर्पकुष्ठविस्फोटव्रणशोफनिकृंतनी॥ वडिलसोतुली॥ हिरियचटकनखपीतदुग्धसंहुडभेद॥ स्यात्कामवृद्धिःस्मरवृद्धिसं ज्ञोमनोजवृद्धिर्मदनायुधश्च॥ कंदर्पजीवश्चतिर्देशियाहुःकामोप

जीवोपि च सप्तसंज्ञः॥कामरूपस्यबीजं स्यान्मधुरं बलवर्द्धनं॥काम
वृद्धिकरं रुच्यं बहुलेंद्रियवृद्धिदं॥१७॥कामजाचंडितेंद्रियाक
र्णाटदेशेप्रसिद्धा॥स्याच्चक्रमर्दोडगजोगजाख्योमेषाह्वयश्चेडग
जोंडहस्ती॥व्यावर्त्तकश्चक्रगजश्च चक्रीपुन्नाडपुन्नाटविमर्दका
श्च॥१८॥दद्रुघ्नश्चक्रमर्द्दः स्याच्चक्राह्वः शकुनाशनः॥दृढबीजः प्र
पुन्नाटः खर्जूघ्नश्चोनविंशतिः॥१९॥चक्रमर्दः कटुस्तीव्रमदो वा
तकफापहः॥व्रणकंडूतिकुष्ठार्तिदद्रुपामादिदोषनुत्॥२०॥
नरवटा॥चगचे॥चकवड॥झिंझिरीटा कंटफली पीनपुष्पा पझिं
झिरा॥ह्रडरोमाश्च यफला वृत्ताचैव षडाह्वया॥१॥झिंझिरीटाक
टुः शीता कषाया चातिसारजित्॥वृष्या संतर्पणी बल्या महिषीर
सवर्द्धनी॥२॥झिंझिरिडा॥जोंटोटे॥अंटरीट॥इक्षुन्(?)पृथुसु
पकटंबकनामकांडनिर्वर्णकागुणनिरूपणपूर्वमेनं॥वर्गबटुः
स्फुटमधीत्यदधीवसद्यः सोवर्गवैद्यकविचारसुचातुरीमः॥३॥
येनस्वेनतृणां क्षणेन महनावीर्येण सूर्योपमाव्यत्तस्यांगविकारमुद्
ततयादूरं क्षिपंत्यामयान्॥स्वस्मिन्नाम्न्यपिसंस्तवादिवनतस्तेषांवि
कारोदयाव्यत्यासंदधतां नितांतमहतो वर्गः क्षुपाणामयं॥४॥संता
पं विदुषां प्रसह्य समितौ स्फीतं प्रतापं द्विषां यस्मिन्विस्मयते धनं
च निधनं नत्वाधुनातेजसा॥धुन्वंत्योषधयः स्वयं किल गतान्येना
र्पितास्पर्द्धितान्तुर्यस्तस्य कृतौ स्थितो नरहरेर्वर्गः शताह्वादिकः॥
इतिवैद्यकमुकुटरत्नालंकरणश्रीमदीश्वरसूनुश्रीकंठचरणार
विंदसेवाहेवाकराजहंसश्रीकाश्मीराद्यवंश्याचार्यपरंपरान्ववाय
श्रीनरहरिपंडितविरचितेनिघंटुराजापरपर्यायनामधेयवत्यभि
धानचूडामणौशताह्वादिवर्गश्चतुर्थः॥अथपर्पटादिवर्गः॥पर्पटो
जीवकश्चैवर्षभकश्चावर्णद्विधा॥मेदाह्वयं च ऋद्धिवृद्धीधूम्रपत्रा
प्रसारणी॥१॥चतुःपाषाणभेदः स्यात्कन्या बर्हिशिखा तथा॥क्षीरि
णी द्वितयं चैव त्रायमाणा रुदंतिका॥२॥ब्राह्मी द्विधा च वंदाकः कुलि
त्थास्तंडुलीयकः॥चिविल्लीनागशुंठीचकुटुंबीस्थलपद्मिनी॥३॥
जंबूश्चनागदंतीचविष्णुक्रांताकुणंजरः॥भूम्यामलीचगोरक्षीगो

लोमीदुग्धफेनिका॥४॥सुद्राम्लिकाचलज्जाह्वेहंसपाद्यश्चकाय
रा॥पुनर्नवात्रयंप्रोक्तंवसुकोद्विविधःस्मृतः॥५॥सर्पिणीचालिम
त्स्याक्षीगुंडालावनपाटली॥स्यात्पांडुरफलीश्वेताब्रह्मदंडीद्रवं
तिका॥६॥द्रोणपुष्पीद्वयंचैवगंडुगोरक्षिदुग्धिका॥नवबाणमि
तासुद्रक्षुपाःप्रोक्तायथाक्रमात्॥७॥पर्पटश्चरकोरेणुस्तृष्णारिः
खरकोरजः॥शीतःशीतप्रियःपांशुःकल्यांगोवर्मकंटकः॥८॥कृ
शशाकःपर्पटकःसुतिक्तोरक्तपुष्पकः॥पित्तारिःकटुपत्रश्चकव
चोष्टादशाभिधः॥९॥पर्पटःशीतलस्तिक्तःपित्तश्लेष्मज्वरापहः॥
रक्तदाहारुचिग्लानिमदविभ्रमनाशनः॥१०॥पित्तपापडा॥पर्पा
टक॥जीवकोजीवनोजीव्यःशृंगाह्वःप्राणदःप्रियः॥चिरजीवीचम
धुरोमंगल्यःकूर्मशीर्षकः॥११॥ह्रस्वांगोवृद्धिदश्चोक्तोह्यायुष्मा
न्जीवकस्तथा॥दीर्घायुर्बलदश्चैवनामान्येतानिषोडश॥१२॥
जीवकोमधुरःशीतोरक्तपित्तानिलार्त्तिजित्॥क्षयदाहज्वरान्हं
तिशुक्रःश्लेष्मविवर्द्धनः॥१३॥जीवकःगौडप्रसिद्धः॥ऋषभोगोप
तिर्धीरोवृषाणीचूर्द्धरोवृषः॥ककुद्मान्पुंगवोवोढाशृंगीधूर्य्यश्चगो
पतिः॥१४॥कामीक्षस्वप्रियश्चोक्तोलांगुलीगोश्चबंधुरः॥गोरसो
वनवासीचत्रयोविंशतिनामकः॥१५॥ऋषभोमधुरःशीतःपि
त्तरक्तविरेकनुत्॥शुक्रश्लेष्मकरोदाहक्षयज्वरहरश्वसः॥१६॥
ऋषभकगौडेप्रसिद्धःकाश्मीरेच॥श्रावणीस्यान्मुंडनिकाभि
क्षुःश्रवणशीर्षकः॥श्रवणाचप्रव्रजितापरिव्राजीतपोधनः॥१७॥
श्रावणीतुकषायास्यात्कटूष्णाकफपित्तनुत्॥आमातीसारकास
घ्नीविषच्छर्दिविनाशनी॥१८॥छोटीमुंडी॥कीयोवोडतर॥महाश्रा
वणिकान्यासामहामुंडीचलोचनी॥कदंबपुष्पाविकचाकोला
चोडाफलंकषा॥१९॥नदीकदंबोमुंडारव्यामहामुंडनिकावसा
॥छिन्नाग्रंथिनिकामातास्थविरालोभनीतथा॥२०॥भूकदंबोलं
बुजास्यादित्येषाषोडशाह्वया॥महामुंडोष्णतिक्ताचईषद्रौल्या
मरुच्छूवा॥२१॥स्वरकृद्रोचनीचैवमेहकृच्चरसायनी॥वडीमुंडी
हिरियबोलतर॥मेदावसामणिच्छिद्राजीवनीशल्यपर्णिका॥नख

क्लेद्याहिमारंगामध्यदेशेप्रजायते॥२२॥मेदसारास्नेहवतीमेदि
नीमधुरावरा॥स्निग्धामेधाद्रवासाध्वीशल्यादाबहुरंध्रिका॥२३॥
स्यात्षोडशाभिधाचैवपुनापूरुषदंतिका॥मेदातुमधुराशीतापि
त्तदाहार्त्तिकासनुत्॥राजयक्ष्मज्वरहरावातदोषकरीचसा॥२४
॥लघुमेदागौडेप्रसिद्धा॥महामेदा॥महामेदावसुच्छिद्राजीवनी
पंसुरागिणी॥देवेष्टासुरमेदाचदिव्यादेवमणिस्तथा॥२५॥देव
गंधामहाच्छिद्राश्रसाह्वारुद्रसंमिता॥महामेदाभिधःकंदोलता
जातःसुपांडुरः॥मेदापिशुक्लकंदःस्यान्मेदोधातुमिवस्रवेत्॥मह
मेदाहिमारुच्याकफशुक्रप्रवृद्धिकृत्॥२६॥हंतिदाहास्रपित्तानि
क्षयंवातज्वरंचसा॥गौडेप्रसिद्धा॥ऋद्धिः॥ऋद्धिःसिद्धिःप्राण
दाजीवदाश्रीसिद्धायोग्याचेतनीयारथांगी॥मंगल्यास्याल्लोककां
तायशस्याज्जीवश्रेष्ठाद्वादशाह्वाक्रमेण॥वृद्धिः॥वृद्धिस्तुष्टिःपु
ष्टिदावृद्धिदाश्रीमंगल्याश्रीसंपदाश्रीर्जनेष्टा॥लक्ष्मीर्भूतिर्मुत्सु
खंजीवभद्रास्यादित्येषाजीवभद्राचसंज्ञा॥२८॥ऋद्धिर्वृद्धिश्चकं
दौद्वौभवतःकोशयामले॥श्वेतरोमान्वितःकंदोलताजातःसरंध्र
कः॥तूलग्रंथिसमाऋद्धिर्वामावर्त्तफलाचसा॥वृद्धिस्तुदक्षि
णावर्त्तफलाप्रोक्तामहर्षिभिः॥ऋद्धिर्वृद्धिश्चमधुरासुस्निग्धा
तिक्तशीतला॥रुचिमेधाकरीश्लेष्मकुष्ठक्रिमिहरापरा॥२९॥प्र
योगेष्वनयोरेकंयथालाभंप्रयोजयेत्॥यत्रद्वयानुसृष्टिःस्याद्द्वय
मप्यत्रयोजयेत्॥ऋद्धिवृद्धीगौडेप्रसिद्धे॥धूम्रपत्रातुधूम्राह्वा
सुलभातुस्वयंभुवा॥गृध्रपत्राचगृध्राणीक्रिमिघ्नीस्त्रीमलापहा॥
धूम्रपत्रारसेतिक्ताशोफघ्नीक्रिमिनाशनी॥उष्णाकासहराचैव
रुच्यादीपनकारिणी॥३२॥गंधाणि॥कत्तगिरि॥प्रसारिणीसुप्र
सरासारणीसरणीसरा॥चारुपर्णीराजबलाभद्रपर्णीप्रतानिका
॥३३॥प्रबलाराजपर्णीचवल्याभद्रबलातथा॥चंद्रवल्लीप्रभद्राच
ज्ञेयापंचदशाह्वया॥३४॥प्रसारिणीगुरूष्णाचतिक्तावातविनाश
नी॥अर्शःश्वयथुहंत्रीचमलविष्टंभहारिणी॥३५॥चांदवेलिहे
सरणे॥पाषाणभेदकोश्मघ्नःशिलाभेदोश्मभेदकः॥श्वेताचोपल

भेदीचनगजिह्लिगर्भजा॥३६॥पाषाणभेदीमधुरस्तिक्तोमेह
विनाशनः॥नृट्दाहमूत्रकृच्छ्रघ्नः शीतलश्चाश्मरीहरः ॥३७॥
अन्यातुवटपत्रीस्यादन्याचैरावतीचसा॥गोधावतीरावतीचश्या
मारव्ह्वांगनामिका॥३८॥वटपत्रीहिमागोल्यामेहकृच्छ्रविनाश
नी॥बलदाव्रणहंत्रीचकिंचिद्दीपनकारिणी॥वडवती॥पाषाण
भेदि॥आलेलगपाषाणभेदि॥अन्याश्वेतशिलावल्काशिलाजा
शैलवल्कला॥वल्कलाशैलगर्भाह्वाशिलात्वक्सप्तनामिका॥
शिलावल्कंहिमंस्वादुमेहकृच्छ्रविनाशनं॥मूत्ररोधाश्मरीशूल
क्षयपित्तापहारकं॥क्षुद्रपाषाणभेदान्याचतुःपत्रीचपार्वती॥ना
गभूरश्मकेतुश्चगिरिभूःकंदरोद्भवा॥शैलोद्भवाचगिरिजानगजा
चदशाह्वया॥क्षुद्रपाषाणभेदाचव्रणकृच्छ्राश्मरीहरा॥४३॥क्षु
द्रपाषाणभेदि॥गृहकन्याकुमारीचकन्यकादीर्घ पत्रिका॥स्थले
रुहामृदुःकन्याबहुपत्रामराजरा॥४४॥कंटकप्रावृतावीराभृंगे
ष्टाविपुलस्रवा॥ब्रह्मघ्नीतरुणीरामाकपिलाचांबुधिस्रवा॥४५॥
सुकंटकास्थूलदलेत्येकोनाविंशतिर्मता॥गृहकन्याहिमातिक्ता
मदगंधिःकफापहा॥पित्तकासविषश्वासकुष्ठघ्नीचरसायनी॥
कुवारि॥लोयिसर॥घिकुवार॥बर्हिचूडातुशिखिनीशिखालुः
सुशिखाशिखा॥४७॥शिखावलाकेकिशिखामयूराद्याभिधा
शिखा॥बर्हिचूडारसेस्वादुर्मूत्रकृच्छ्रविनाशनी॥४८॥बाल
ग्रहादिदोषघ्नीवश्यकर्मणिशस्यते॥मयूरशिखा॥होरेयसू
सुव॥क्षीरिणीकांचनक्षीरीकर्षणीकटुपर्णिका॥४९॥तिक्तदु
ग्धाहैमवतीहिमदुग्धाहिमावती॥हिमाद्रिजापीतदुग्धायव
चिंचोहिमोद्भवा॥हैमीचहिमजाचेतिचतुरेकगुणाह्वया॥क्षीरि
णीकटुतिक्ताचरेचनीशोफतापनुत्॥क्रिमिदोषकफघ्नीचपि
त्तज्वरहराचसा॥पिसोरा॥चिक्कणिकेयभेद॥स्वर्णक्षीरीस्वर्णदु
ग्धास्वर्णाह्वारुक्मिणीतथा॥५२॥सुवर्णहेमदुग्धीचहेमक्षीरी
चकांचनी॥स्वर्णक्षीरीहिमातिक्ताक्रिमिपित्तकफापहा॥५३॥मू
त्रकृच्छ्राश्मरीशोफदाहज्वरहरापरा॥पिसोराभेद॥चिक्कणिके

यभेद्॥ त्रायमाणाकृतत्राणात्रायंतीत्रायमाणिका॥ बलभद्रा
सुकामाचवार्षिकीगिरिजानुजा॥ मंगल्याह्वादेवबलापालनी
भयनाशिनी॥५५॥ अवनीरक्षणीत्राणाविज्ञेयाषोडशाह्वया॥
त्रायंतीशीतमधुरागुल्मज्वरकफास्रनुत्॥५६॥ भ्रमतृष्णाक्ष
यग्लानिविषछर्दिविनाशनी॥ त्रायमाणा॥ हिमवतेप्रसिद्ध॥
स्यादुदंतीस्रवत्तोयासंजीवन्यमृतस्रवा॥ रोमांचिकामहामांसी
चणपत्रीसुधास्रवा॥ रुदंतीकटुतिक्तोष्णाक्षयक्रिमिविनाशि
नी॥५८॥ रक्तपित्तकफश्वासमेहहारीरसायनी॥ चणपत्रसमं
पत्रंसुपंचेवतथाम्लकं॥ शिशिरेजलबिंदूनांस्रवंतीतिरुदंति
का॥५९॥ रुदंती॥ अनुगणि॥ ब्राह्मीसरस्वतीसौम्यासुरश्रेष्ठासुव
र्चला॥ कपोतवेगावेधात्रीदिव्यतेजामहोषधी॥६०॥ स्वायंभुवी
सोमलतासुरेज्याब्रह्मकन्यका॥ मंडूकमातामत्स्याक्षीमंडूकीसु
रसातथा॥६१॥ मेध्यावीराभारतीचवराचपरमेष्ठिनी॥ दिव्याच
शारदीचेतिज्ञेयार्णवकराह्वया॥६२॥ ब्राह्मीहिमाकषायाचति
क्तावातास्रपित्तजित्॥ बुद्धिंप्रज्ञांचमेधांचकुर्यादायुष्यवर्द्धनी॥
ब्रह्ममांडुकी॥ ३० देलग॥ ब्राह्मीतुसुद्रपत्रान्यालघुब्रह्मीजलोद्भ
वा॥ ब्राह्मीतिक्तरसोष्णाचपक्तिंवानामशोफजित्॥ बां॰बि॰॥ कि
र्इब्रह्मि॥ कावर्षका॥ वंदणिके॥ वंदाकःपादपरुहाशिखरीनरु
रोहिणी॥ वृक्षादनीवृक्षरुहाकामवृक्षश्वशेखरी॥६५॥ केशरू
पातरुरुहानरुस्थागंधमेदिनी॥ कामिनीतरुरुक्पद्मामादप
दीषोडशाह्वया॥६६॥ वंदाकस्तिक्तशिशिरःकफपित्तश्रमाप
हः॥ वश्यादिसिद्धिदोवृष्यःकषायश्चरसायनः॥ रानकुलित्थ॥
काडहुलिग॥ कुलत्थादक्प्रसादाचज्ञेयारण्यकुलत्थिका॥ कु
लालीलोचनहितावसुष्याकुंभकारिका॥६८॥ कुलत्थिकाकटु
स्तिक्तस्यादर्शःशूलनाशनी॥ विबंधाध्मानशमनीचक्षुष्याव्रण
रोपणी॥ तांदुलिजा॥ किरकुशाले॥ तंदुलीयस्तुभंडीरस्तंडुली
तंडुलीयकः॥ ग्रंथिलोबहुवीर्यश्चमेघनादोघनस्वनः॥७०॥ सुशा
कःपथ्यशाकश्चस्यात्तेयुःस्वविनाह्वयः॥ नीरतंडुलनामाचपर्याया

श्वचतुर्दश॥७१॥तंडुलीयस्तुशिशिरोमधुरोविषनाशनः॥रुचि
कृद्दीपनःपथ्यःपित्तदाहभ्रमापहः॥७२॥चिविल्लिकारक्तदला
खरक्षुदाक्ष्मास्मुद्रघोलीमदुमाभपत्रिका॥चिविल्लिकाचैवकटुः
कषायिकाज्वरेनिसारेचहितारसायनी॥चिविलि॥किरुंगोलि॥
हस्तिशुंडीमहाशुंडीशुंडीधूसरपत्रिका॥हस्तिसुंडीकटूष्णास्या
त्संनिपातज्वरापहा॥७४॥हस्तिसुंडी॥नेलवाल॥नलदावरे॥
कुटुंबिनीपयस्याचक्षीरिणीजलकामुका॥वक्रशल्यादुराधर्षा
क्रूरकर्माझिरिंटिका॥शीताप्रहारजायाचशीतलाचजलेरुहा॥
विख्याताकिलविद्वद्भिरेषाद्वादशनामभिः॥७६॥कुटुंबिनीतुम
धुराग्राहिणीकफपित्तनुत्॥व्रणास्रदोषकंडूतिनाशनीसारसा
यनी॥७७॥पहरकुटुंबी॥मरिंजेवणिगेयभेद॥मरुलिगनक
स॥स्थूलपद्मीतुपद्माह्वाचारटीपद्मचारिणी॥सुगंधमूलांबुरु
हालक्ष्मीश्रेष्ठासुपुष्करा॥रम्यापद्मवतीचातिचरास्थूलरुहास्म
ता॥ज्ञेयापुष्करिणीचैवपुष्कराद्याचपर्णिका॥पुष्करादिसुताना
डीप्रोक्तापंचदशाह्वया॥स्थलादिपद्मिनीगोल्यातिक्ताशीनाच
वांतिनुत्॥८०॥रक्तपित्तहरामेहभूतातीसारनाशनी॥स्थलप
द्मिनी॥कल्लुदावरे॥जंबूजांबवतीवृत्ताररक्तपुष्पाचजांबवी॥८१॥
मदघ्नीनागदमनीदुर्धर्षादुःसहानव॥ज्ञेयाजंबूस्त्रिदोषघ्नीती
क्ष्णोष्णाकटुतिक्तका॥८२॥उदराध्मानदोषघ्नीकोष्ठशोधनका
रिणी॥नागदमनीप्रसिद्धा॥नागदंतीश्वेतघंटामधुपुष्पाविशे
धनी॥८३॥नागस्फोताविशालाक्षीनागकन्याविचक्षणा॥सर्प
पुष्पीशुक्लपुष्पीस्वादुकाशीतदंतिका॥८४॥सितपुष्पीसर्पदंती
नागिणीबाणभूमिता॥नागदंतीकटुस्तिक्तारूक्षावातकफापहा
॥८५॥मेधाकृद्विषदोषघ्नीपाचनीशुभदायिनी॥गुल्मशूलोद
रव्याधिकंठदोषनिकृंतनी॥नागदंतीभाषाह्वय॥विष्णुक्रांता
हरिक्रांतानीलपुष्पापराजिता॥नीलक्रांतासतीनाचविक्रांता
कुर्दिकाचसा॥विष्णुक्रांताकटुस्तिक्ताकफवातामयापहा॥विष्णु
क्रांता॥विष्णुकाके॥कुणंजरःकुणंजीचकुणंजोरण्यवास्तुकः॥

॥८६॥ कुणंजोमधुरोरुच्योदीपनःपाचनोहितः॥कुणजिरु॥गो
रजे॥श्यामलीतमालीचतालीचैवतमालिका॥८७॥उच्चटाह
ढपादीचविनुंनाचविनुंनिका॥भूधात्रीचारुटारुष्याविषघ्नीबहु
पत्रिका॥८८॥बहुवीर्याहिभयदाविश्वपर्णीहिमालया॥जटा
वीराचनाम्नासाभवेदेकोनविंशतिः॥८९॥भूधात्रीतुकषाया
म्लापित्तमेहविनाशनी॥शिशिरामूत्ररोगार्त्तिशमनीदाहनाशनी
॥भूयांवली॥आरुनेल्लि॥गोरक्षीसर्पदंडीचदीर्घदंडीसुदंडिका
॥चित्रलागंधबहुलागोपालीपंचपर्णिका॥९१॥गोरक्षीमधुरा
तिक्ताशिशिरादाहपित्तनुत्॥विस्फोटवांत्यतीसारज्वरदोष
विनाशनी॥गोरक्षीमालवेप्रसिद्धा॥गोलोमिकातुगोधूमीगोजा
क्षोष्टकपुच्छुका॥गोसंभवाप्रस्तरिणीविज्ञेयेतिषडाह्वया॥गो
लोमिकाकटुस्तिक्तात्रिदोषशमनीहिमा॥मूलरोगास्त्रदोषघ्नी
ग्राहिणीदीपनीचसा॥पाथरी॥हटगिरे॥दुग्धफेनीपयःफे
नीफेनदुग्धापयस्विनी॥लूतारिर्व्रणकेतुश्चगोजापर्णीचस
प्तधा॥दुग्धफेनीकटुस्तिक्ताशिशिराविषनाशिनी॥व्रणाप
सारणीरुच्यायुक्त्याचैवरसायनी॥दूधफेनी॥हालुगोलवि॥
अंबवती॥पुलुंबुणिसे॥क्षुद्राम्लिकातुचांगेरीचुक्राह्वाचुक्रि
काचसा॥लोपाम्लाचचतुःपर्णीलोणालोडाम्लपत्रिका॥९७॥
अंबष्ठाम्लवतीचैवअम्लादंतशठामता॥शस्त्रांगाचाम्लपत्री
चज्ञेयापंचदशाह्वया॥९८॥क्षुद्राम्लीचरसेसाम्लासोष्णासा
वह्निवर्द्धनी॥रुचिकृद्ग्रहणीदोषदुर्नामघ्नीकफापहा॥९९॥
लाजिरी॥मुदिदरेमुरुटव॥रक्तपादीशमीपत्रास्पृक्काखदिरप
त्रिका॥संकोचनीसमंगाचनमस्कारीप्रसारिणी॥१००॥लज्जा
लुःसप्तपर्णीस्यात्खदिरीगंडमालिका॥लज्जाचलज्जिका
चैवस्पर्शलज्जाप्ररोधनी॥१॥रक्तमूलाताम्रमूलास्वगुप्तां
जलिकारिका॥नाम्नाविंशतिरित्युक्तालज्जायांतुभिषग्वरैः
॥२॥रक्तपादीकटुःशीतापित्तातीसारनाशनी॥शोफदाहश्रम
श्वासव्रणकुष्ठकफास्त्रनुत्॥३॥लज्जालुर्वैपरीत्यान्याअल्पक्षुप

हृद्दला॥ वैपरीत्यात्तुलज्जालुर्हृन्मिथानेप्रयोजयेत्॥ लज्जालु
वैपरीत्याह्वः कटुरुष्णः कफामनुत्॥ रसोनियामकोत्यंतनाना
विज्ञानकारकः॥५॥ उपरतीलज्जालुः॥ हिंदक्केसुदृदरेमुडुड
वडु॥ रक्तपाद्यपराप्रोक्तात्रिपदाहंसपादिका॥ घृतमंडलिका
ज्ञेयाविश्वग्रंथिस्त्रिपादिका॥६॥ त्रिपादीकीटमारीचहेसपादी
मधुस्त्रवा॥ कर्णाटीनाम्नपत्रीचविक्रांतासुवहातथा॥७॥ ब्रह्मा
दनीपदांगीचशीतांगीसुतपादुका॥ संचारिणीचपदिकाप्रह्ला
दीकीलपादिका॥८॥ गोधापदीचहंसांघ्रिः धार्त्तराष्ट्रपदीतथा
॥ हंसपादीचविज्ञेयानाम्नाचैषांगुराश्रिधा॥ हंसपादीकटूष्णा
स्याद्विषभूतविनाशिनी॥ भ्रांत्यपस्मारदोषघ्नीविज्ञेयाचरसाय
नी॥ हंसपादी॥ नविलडि॥ काथराह्वयपर्यायैः काथरांतैः प्रकी
र्त्तिताः॥ अश्वकाथरिकातिक्तावातघ्नीदीपनीपरा॥ घोडेकाथरा
कुदिरेगान्नर्रुबिलियगणजिले॥ पुनर्नवाविशाखश्चकठिल्लः
शशिवाटिका॥ पृथ्वीचसितवर्षाभूर्दीर्घपत्रःकठिल्लकः॥१०॥
श्वेतापुनर्नवासोष्णातिक्ताकफविषापहा॥ कासहृद्रोगशूला
स्त्रपांडुशोफानिलार्त्तिनुत्॥११॥ पांडरीघेंटलि॥ बिलिपटुबेल्लड
किलु॥ पुनर्नवाख्यारक्ताख्याक्रूरामंडलपत्रिका॥ रक्तकांडावर्ष
केतुर्लोहितारक्तपत्रिका॥ वैशाखीरक्तवर्षाभूः शोफघ्नीरक्तपु
ष्पिका॥ विकस्वराविषघ्नीचप्रावृषेण्याचसारिणी॥ वर्षाभवःशो
णपत्रोशोणःसंमीलितद्रुमः॥ पुनर्भवोनवोनग्नःस्याच्चविंशतिसं
ज्ञया॥१४॥ रक्तापुनर्नवातिक्ताशारिणीशोफनाशिनी॥ रक्तप्रदर
दोषघ्नीपांडुपित्तप्रमर्दिनी॥१५॥ रक्तघेंटूलि॥ केंपिनबेल्लडकिलु
॥ करियगणजिले॥ नीलापुनर्नवानीलाश्यामानीलपुनर्नवा॥ कृ
ष्णाख्यानीलवर्षाभूर्नीलिनीस्वाभिधान्विता॥१६॥ नीलापुनर्न
वातिक्ताकटूष्णाचरसायनी॥ हृद्रोगपांडुश्वयथुश्वासवातक
फापहा॥१७॥ कालीघेंटूलि॥ करियबेल्लडकिलु॥ हीगणगिलु
॥ वसुकोथवसुःशैवोवसोथशिवमल्लिका॥ पाशुपतःशिवमतः
सुरेष्टःशिवशेखरः॥ सितोरक्तोद्विधाप्रोक्तोज्ञेयःसचनवाभिधः॥

वसुकौकटुतिक्तोष्णौपाकेशीतौचदीपनौ॥१९॥अजीर्णवातशु
लघ्नौश्वेतश्चैवरसायनः॥दोनिवसो॥परडुगणजिले॥सर्पिणी
भुजगीभोगीकुंडलीपन्नगीफणी॥२०॥षडाभिधासर्पिणीस्याद्धि
षघ्नीकुचवर्द्धनी॥सर्पिणीप्रसिद्धा॥सर्पाकारवत्॥वृश्चिकान
खपर्णीचपिच्छिलाप्यलिपत्रिका॥वृश्चिकापिच्छलाम्लास्यादंत्र
वृद्ध्यादिदोषजुत्॥विंचुवा॥इंगुले॥मासमाहोत्रगत्रे॥ब्राह्मीवय
स्यामत्स्याक्षीमीनाक्षीसोमवल्लरी॥मत्स्याक्षीशिशिरारुच्याव्रण
दोषक्षयापहा॥गुंडाला॥कडविनभेद॥गुंडालातुजलोद्भूता
गुच्छबुध्नाजलाशया॥२३॥गुंडालाकटुतिक्तोष्णाशोफव्रणवि
नाशनी॥भूयिपाडलि॥नेलवादरि॥भूपाटलीचकुंभीचभूता
लीरक्तपुष्पिका॥२४॥भूपाटलीकटूष्णाचपारदेसुप्रयोजिका
॥पाटलीस्यात्पांडुफलीधूसरावृत्तबीजका॥२५॥भूरिफलित
थापांडुफलीसप्ताहूयाभिधा॥शिशिरापांडुरफलीगोल्याकच्छू
र्त्तिदोषहा॥२६॥बल्यापित्तहरारुच्यामूत्रघातनिवारणी॥पोट
रफलं॥मणमंडे॥खेनानुकुरिकापत्रीपर्वमूलाप्यविप्रिया॥
॥२७॥खेनातिमधुराशीतास्तन्यदारुचिकृत्परा॥केना॥कन्ने॥
ब्रह्मदंड्यजलादंडीकंटपत्रफलाचसा॥२८॥ब्रह्मदंडीकटू
ष्णास्यात्कफशोफानिलापहा॥ब्रह्मदंडा॥ब्रह्मदंडे॥द्रवंतीशं
बरीचित्रान्यग्रोधीशनमूलिका॥२९॥प्रत्यकश्रेणीवृषाचंडा
पत्रश्रेण्याखुकर्णिका॥मूषकाह्वाभिधाकर्णीप्रतिपर्णाशिफा
चसा॥सहस्त्रमूलीविक्रांताज्ञेयास्याच्चतुरेकधा॥द्रवंतीमधुरा
शीतारसंबंधकरीपरा॥३१॥ज्वरघ्नीक्रिमिहाशूलशमनीचर
सायनी॥भोंपनी॥बल्लिहर्है॥द्रोणपुष्पीदीर्घपत्राकुंभयोनिःकु
तुंबिका॥३२॥चित्राक्षुपःकुतुंबाचसुपुष्पाचित्रपत्रिका॥द्रोणपु
ष्पीकटुःसोष्णारुच्यावातकफापहा॥अग्निमांद्यहराचैवपथ्या
वातापहारिणी॥कुंबा॥तुंबे॥अन्याचैवमहाद्रोणाकुरुंबादेवपू
र्वकः॥दिव्यपुष्पीमहाद्रोणीदेविकाजीषडाहूया॥देवद्रोणीकटु
स्तिक्तामेध्यावातार्तिभूतनुत्॥३५॥कफमांद्यापहाचैवयुक्त्यापार

दृशोधने॥देवकुंबा॥देवतुंबे॥झंडूः स्यात्स्थूलपुष्पा तु झंडूको झंडुकस्तथा॥झंडुः कटुकषायः स्यात् ज्वरभूतग्रहापहा॥झंडू॥गोवगडुं॥गोरसदुग्धी गोरसी नाम्ना दुग्धा रसायनी॥बहुपत्रामृतं जीवामृतसंजीवनी मुनिः॥गोरसदुग्धी मधुरा रुच्या साग्राहिणी हिमा॥सर्ववश्यकरी चैव रसे सिद्धिगुणप्रदा॥नागार्जुनदूधी॥मरीजेवणिगे॥इत्थं वितत्य विशदीक्रियमाण नानासुद्रुसुपाहूयगुणप्रगुणोपवर्गे॥वर्गे विधाय सुखमंडनमेनमुच्चैरुच्चाटनाय च रुजां प्रभुरस्तु वैद्यः॥३५॥सुधं रातिजनस्योच्चैस्तस्मात्सुद्राः प्रकीर्तिताः॥तेषां सुपाणां वर्गोऽयमादानेधात्तु रुच्यते॥४०॥धत्ते नित्यसमाधिसंस्तववशप्रीतार्पिते शार्पितां स्वात्मीयामृतहस्ततां किल सदायः सर्वसंजीवनीं॥सर्गस्तस्य कृतौ नृसिंहकृथितोयः पर्पटादिर्महानेषप्रां चतिनामकांडपरिषच्चूडामणौ पंचमः॥४१॥इति वैद्यकमुकुटमाणिक्यालंकरणे श्रीमदीश्वरसूरिसूनुश्रीकंठचरणारविंदसेवासेवकराजहंसश्रीकाश्मीराद्यवंश्याचार्यपरंपरान्वायश्रीनरहरिपंडितविरचिते निघंटुराजापरपर्यायनामधेयवत्यभिधानचूडामणौ पर्पटादिः सुद्रुः सुपवर्गः पंचमः॥अथ पिप्पल्यादिवर्गः॥चतुर्द्धा पिप्पली प्रोक्ता तन्मूलं नागरं तथा॥आर्द्रकं मरिचद्वंद्वं धान्यकं च यवानिका॥१॥चव्यं च चित्रकद्वंद्वं विडंगं च वचाद्वयं॥कुलंजो जीरकाः पंच मेथिका हिंगुपत्रिका॥२॥हिंगुद्वयं चाग्निचारो राष्ण्यो रेलाद्वयं शिवं॥सौवर्चलं च काचाद्वं विडं च विडनामकं॥सामुद्रं द्रोणिकं चान्यत् औषरं रोमकं तथा॥नवधा लवणं प्रोक्तमजमोदा च रेणुका॥बोलं कचूरकं पाठा वृक्षाम्लश्चाम्लवेतसं॥कटुका तिविषा मुस्ता द्वयं यष्टीमधुद्वयं॥५॥भार्गी पुष्करमूलं च श्रृंगयोदंतिका द्वयं॥जेपाला स्त्रिवृद्द्वे धातक्यपत्रं नागकेसरं॥६॥तवक्षीरं चतालीसपत्राख्यं वंशरोचना॥मंजिष्ठा च चतुर्धा स्याद्धरिद्रे च द्विधा मते॥७॥लाक्षा चालक्तकं लोध्रो धातक्यष्टिफलं तथा॥निर्विषाथ विषद्वंद्वं द्विधा चाम्लहरिद्रका॥८॥अहिफेनमफेनं च टंकणो साकुरुंटकं॥हीनावलीहस्तिमदः खर्चिको लोणकं तथा॥

॥९॥ वज्रकोयवजश्वाथसर्वसारोश्ममायिका॥ औषधान्यभि
धीयंतेषडंकमितिसाख्यया॥१०॥ पिप्पली॥ हिप्पलि॥ पिप्पली
कृकराशौंडीचपलामागधीकणा॥ कटुबीजाचकोरंगीवैदेहीति
क्ततंडुला॥११॥ श्यामादंतफलाकृष्णाकोलाचमगधोद्भवा॥ ऊ
षणाचोपकुल्याचस्मृत्याह्वानीक्ष्णतंडुला॥१२॥ पिप्पलीज्वर
हातृष्यातिक्तोष्णाकटुतिक्तका॥ दीपनीमरुतश्वासकासश्लेष्म
क्षयापहा॥१३॥ गजपिप्पली॥ गजहिप्पली॥ गजोषणाचश्रफलाच
श्यजागजपिप्पली॥ श्रेयसीछिद्रवैदेहीदीर्घग्रंथिश्चतेजसी॥१४
॥ वर्तुलीस्थूलवैदेहीज्ञेयाचेतिदशाभिधा॥ गजोषणाकटूष्णा
चरूक्षामलविशोषणी॥१५॥ बलासवासहंत्रीचस्तन्यकर्णविव
र्द्धनी॥ सिंघलीपिंप्पली॥ सैंहलपिप्पली॥ सैंहलीसर्पदंडाचस
र्पीगीब्रह्मभूमिजा॥ पार्वतीशैलजामूलंलंबबीजातथोत्कटा॥
अद्रिजासिंहलस्थाचलंबदंताचजीवला॥ जीवलाजीवनेत्राच
कुरवीषोडशाह्वया॥ सैंहलीकटुरुष्णाचजंतुघ्नीदीपनीपरा१८
कफश्वाससमीरार्त्तिशमनीकोष्ठशोधनी॥ रानपिंपलि॥ का
हिप्पलि॥ वनादिपिप्पल्यभिधानयुक्तंस्यादिपिप्पल्यभिधा
नमेतत्॥ क्षुद्राचपिप्पल्यभिधानयोग्यंवनाभिधापूर्वकणाभि
धानं॥१९॥ वनपिप्पलिकाचोष्णातीक्ष्णारूक्षाचदीपनी॥ आ
माभवेद्गुणाढ्यास्तुशुष्काःस्वल्पगुणास्मृता॥२०॥ पिंपलीमूल॥
हिप्पलियबेरु॥ ग्रंथिकंपिप्पलीमूलंमूलंतुचटकाशिरः॥ कोल
मूलंकटुग्रंथिकटुमूलंकटूषणं॥२१॥ सर्वग्रंथिचपत्राढ्यंवि
रूपंशोणसंभवं॥ सुग्रंथिग्रंथिलंचैवपर्यायास्तुचतुर्दश॥२२॥
कटूष्णंपिप्पलीमूलंश्लेष्मक्रिमिविनाशनं॥ दीपनंवातरोगघ्नंरो
चनंपित्तकोपनं॥ सूंठि॥ शुंठि॥ शुंठीमहौषधंविश्वंनागरंविश्व
भेषजं॥ विश्वौषधंकटुग्रंथिकटुभद्रंकटूषणं॥२४॥ सौपर्णंसं
गवेरंचकफारिश्वार्द्रकःस्मृतः॥ शोषणंनगराह्वंचविज्ञेयंषोड
शाह्वयं॥ शुंठीकटूष्णास्निग्धाचकफशोफनिलापहा॥ मूलबंधो
दराध्मानश्वासश्लीपदहारिणी॥ शुंठि॥ भाषा॥२॥ आर्द्रकंगु

ल्पमूलंचमूलजंकंदलंवरं॥ शृंगबेरंमहीजंचसैकतेष्टमनूपजं
॥ अपाकशाकंचार्द्रंचराह्णछत्रंसुशाककं॥ शार्ङ्गंस्यादार्द्रशा
कश्चसशाकंमुनिभूह्वयं॥ कटूष्णमार्द्रकंहृद्यंविपाकेशीतलं
लघु॥ दीपनंरुचिदंशोफकफकंठामयापहं॥ आलें॥ अल्ल॥ अ
द्रका॥ मरिचंपलितंश्यामंकोलंवल्लीजमूषणं॥ यवनेष्टंवृत्तफ
लंशाकांगंधर्मपत्तनं॥ कटुकंचशिरोवृत्तंवीरंकफविरोधिच॥
सृष्टंसर्वहितंकृष्णंसप्तभूस्थानिरूपितं॥ ३१॥ मरिचंकटुति
क्तोष्णंलघुश्लेष्मविनाशनं॥ समीरकृमिहृद्रोगहरंचरुचिका
रकं॥ मरिच॥ मेणसु॥ सितमरिचंसीतोन्यस्सितवल्लीजंचबाल
कंबहुलं॥ धवलंचंद्रकमेतन्मुनिनामगुणाधिकंचवश्यकरं॥ ३३
॥ कटूष्णंश्वेतमरिचंविषघ्नंभूतनाशनं॥ अवृष्यंदृष्टिरोगघ्नंयु
क्त्याचैवरसायने॥ ३४॥ पांढरेंमिरियें॥ बिलियमेणसु॥ धान्यकं
धान्यजंधान्यंधानेयंधनिकंतथा॥ कुस्तुबुरीश्चावलिकाछत्राधा
न्यंवितुन्नकं॥ ३५॥ सुगंधिःशाकयोग्यश्चसूक्ष्मपत्रोजनप्रियः॥
धान्यबीजोबीजधान्यंवेधकंषोडशाह्वयं॥ ३६॥ धान्यकंमधुरंशी
तंकषायंपित्तनाशनं॥ ज्वरकासतृषाछर्दिकफहारिचदीपनं
॥ ३७॥ कोथुंबरि॥ भाषा॥ २॥ धनिया॥ यवानीदीप्यकोदीप्योयव
साह्वोयवाग्रजः॥ दीपनीचोग्रगंधाचवातारिर्भूकदंबकः॥ ३८॥
यवजोदीपनीयश्चशूलहंत्रीयवानिका॥ उग्राचतीव्रगंधाचज्ञेया
पंचदशाह्वया॥ ३९॥ यवानीकटुतिक्तोष्णावातार्शःश्लेष्मनाशनी
॥ शूलाध्मानक्रिमिछर्दिमर्दनीदीपनीपरा॥ ३०वा॥ ३०डु॥ अज
वाइन॥ चव्यकंचविकाचव्यंवशिरोगंधनाकुली॥ वल्लीचकोल
वल्लीचकोलंकुटलमस्तकं॥ ४०॥ तीक्ष्णाकरिणिकावल्लीरुक
रोह्वादशाभिधा॥ चव्यंस्यादुष्णकटुकंलघुरोचनदीपनं॥ ४१॥
जंतूद्रेकापहंकासश्वासशूलार्तिकंतनं॥ चव्य॥ भाषा॥ २॥ चि
त्रकोवह्निश्चशार्दूलचित्रपालीकुठःशिखी॥ कृशानुर्दहनोव्या
लोज्योतिष्कःपालकस्तथा॥ ४४॥ अनलोदारुणोवह्निःपावकः
शबलस्तथा॥ पाठीह्वीपीचचित्रांगोज्ञेयःसूरश्चविंशतिः॥ ४५॥

चित्रकोग्निसमः पाके कटुः शोफकफापहः॥ वा नोदरार्शोग्रह
णीक्रिमिकंडूतिनाशनः॥ ४६॥ चित्रकु॥ चित्रमूल॥ कालोव्या
लः कालमूलोनिदीप्योमार्जारोग्निर्दाहकः पावकश्च॥ चित्रांगो
यंरक्तचित्रोमहांगः स्यादुद्राहूश्चित्रकोन्योगुणाढ्यः॥ स्थूलका
यकरोरुच्यः कुष्ठघ्नोरक्तचित्रकः॥ रसेनियामकोलोहेवेधकश्च
रसायनः॥ रक्तचित्रकु॥ केंपिनचित्रमूल॥ कोंकणेप्रसिद्ध॥ विडं
गाक्रिमिहाचित्रतंडुलातंडुलीयका॥ वानारितंडुलाप्रोक्ताजंतु
घ्नीमृगगामिनी॥ ४९॥ कोरलांगेधरामोघाकपालीचित्रतंडुला॥
वरासुचित्रबीजाचजंतुहंत्रीचषोडश॥ ५०॥ विडंगाकटुरुष्णाच
लघ्रर्वातकफार्तिनुत्॥ अग्निमांद्यारुचिभ्रांतिक्रिमिदोषविनाश
नी॥ ५१॥ वायुविडंग॥ भाषा २॥ वचोग्रगंधागोलोमीजटिलोग्राह
लोमशा॥ रक्षोघ्नीविजयाभद्रामंगल्येतिदशाह्वया॥ ५२॥ वचातो
क्ष्णाकटूष्णाचकफामग्रंथिशोफनुत्॥ वातज्वरातिसारघ्नीवांति
कृन्मादभूतनुत्॥ ५३॥ वेखंड॥ वजे॥ बच॥ मेध्याश्वेतवचान्वन्याष
ड्ग्रंथादीर्घपत्रिका॥ तीक्ष्णगंधाहेमवतीमंगल्याविजयाचसा॥ ५४
॥ श्वेतवचातिगुणाढ्यामतिमेधायुःसहितहाकफवत्॥ रुष्याचवात
भूतक्रिमिदोषघ्नीचदीपनीवचा॥ ५५॥ पांढरेंवेखंड॥ बिलियबजे॥
कुलंजोगंधमूलश्चतीक्ष्णमूलःकुलंजनः॥ कुलंजःकटुतिक्तोष्णो
दीपनोमुखदोषनुत्॥ ५६॥ कुलंजन॥ जीरकोजरणोजीरोजीर्णो
दीप्यश्चदीपकः॥ अजाजिकोवह्निशिखोमागधश्चनवाह्वयः॥ ५७॥
जीरकःकटुरुष्णश्चवातहृद्दीपनःपरः॥ गुल्माध्मानातिसारघ्नोग्र
हणीक्रिमिहृत्परं॥ ५८॥ साधारणजीरगुण॥ गोराद्विजीरकस्त्व
न्योजाजीस्यात्त्वेतजीरकः॥ कणाह्वाकणजीर्णाचकणादीप्यःसिता
दिच॥ ५९॥ ज्ञेयादीर्घकणाचैवसिताजाजीनवाह्वया॥ गौराजाजीहि
मारुच्याकटुर्मधुरदीपनी॥ क्रिमिघ्नीविषहंत्रीचचक्षुष्याध्मानना
शनी॥ ६०॥ पांढरेंजीरें॥ बिलियजीरिगे॥ कृष्णातुजरणाकालीबहु
गंधाचभेदिनी॥ पटुभेदिनिकारुच्यानीलानीलकणास्मृता॥ ६१॥
काश्मीरजीरकावर्षाकालीस्याद्दांतिशोधनी॥ कालमेषीसुगंधाच

विज्ञेया षोडशाभिधा॥६२॥ जरणा कटुरूष्णा च कफशोफनिकृंतनी॥ रुच्या जीर्णज्वरघ्नी च चक्षुष्या ग्रहणीपरा॥६३॥ कालेंजीरें॥ करिजीरिगे॥ दीप्यैरवकुंचिका काली पृथ्वी स्थूलकणा पृथुः॥ मनोज्ञा जरणी जीर्णा तरुणी स्थूलजीरकः॥६४॥ सुषवी कारवी ज्ञेया पृथ्वीका च चतुर्दश॥ पृथ्वीका कटुतिक्तोष्णा वातगुल्मामदोषनुत्॥६५॥ श्लेष्माध्मानहरा जीर्णा जंतुघ्नी दीपनीपरा॥ कालेंजीरें॥ करिदोडुजीरगे॥ बृहपाली क्षुद्रपत्रोरण्यजीरकणा तथा॥ नवजीरः कटुः शीतो व्रणहा पंचनामकः॥६६॥ रानजीरें॥ काजीरगे॥ जीरकाः कटुकाः पाके क्रिमिघ्ना वह्निदीपनाः॥ जीर्णज्वरहरा रुच्या व्रणहाध्माननाशनाः॥६७॥ सामान्यसमस्तजीरकगुणाः॥ मेथिका मेथिनी मेथी दीपनी बहुपत्रिका॥ वेधनी गंधबीजा च ज्योतिर्गंधफला तथा॥७०॥ वल्लरी चंद्रिका मेथा मिश्रपुष्पा च कैरवी॥ कुंचिका बहुपर्णी च पीतबीजा मुनींद्रधा॥७१॥ मेथिका कटुरुष्णा च रक्तपित्तप्रकोपनी॥ अरोचकहरा दीप्तिकरी वातघ्न दीपनी॥७२॥ मेथी॥ मेथ्य॥ पृथ्वीका हिंगुपत्री च कबरी दीर्घिका पृथुः॥ तन्वी च दारुपत्री च बिल्वी बाष्पीन बाहुया॥७३॥ हिंगुपत्री कटुस्तीक्ष्णा तिक्तोष्णा कफवातनुत्॥ आमक्रिमिहरा रुच्या पथ्या दीपनपाचनी॥७४॥ हिंगुपत्री॥ भाषा॥२॥ हिंगूग्रगंधं भूतारि वाह्लीकं जंतुनाशनं॥ शूलो गुल्मादि रक्षोघ्नमुग्रवीर्यं च रामठं॥७५॥ अगूढगंधं जरणं भेदनं शूपधूपनं॥ दीप्तं सहस्रवेधीति ज्ञेयं पंचदशाभिधं॥७६॥ हृद्यं हिंगु कटूष्णं च क्रिमिवातकफापहं॥ विबंधाध्मानशूलघ्नं चक्षुष्यं गुल्मनाशनं॥७७॥ हिंगु॥ इंगु॥ लेसु॥ नाडीहिंगुपलाशाख्या जंतुका रामठी च सा॥ वंशपत्री च पिंडाह्वा सुवीर्या हिंगुनाडिका॥७८॥ नाडीहिंगु कटूष्णा च कफवातातिशांतिकृत्॥ विष्ठाविबंधदोषघ्नं अनाहामयहारि च॥७९॥ नाडीहिंगु॥ कलहत्ति॥ अग्निजारोग्निनिर्यासोप्यग्निगर्भोग्निजः स्मृतः॥ वडवाग्निमलो ज्ञेयो जरायुश्चाग्निसंभवः॥८०॥ साद्ग्निजारः कटुरुष्णावीर्यः सुंदामयो वातकफापहश्च॥ पित्त

प्रद:सोधिकसन्निपातःशूलार्त्तिशीतामयनाशकश्च॥८१॥अ
ग्निजार॥भाषा २॥पश्चिमसमुद्रेप्रसिद्धा॥जाराभंदहनिस्पर्शी
पिच्छिलंसागरेप्लवं॥जरायुस्तच्चतुर्वर्णश्रेष्ठंतेषुसलोहितं॥८२
॥अग्निजारगुणाः॥रास्नायुक्तरसारस्याश्रेयसीरसनारसा॥
सुगंधिमूलासुरसारसाढ्यानिरसादघ्रा॥८३॥रास्नाकेदारे
प्रसिद्धा॥राष्णातुत्रिविधाप्रोक्तामूलपत्रतृणस्तथा॥ज्ञेयोमू
लदलोश्रेष्ठोतृणराष्णाचमध्यमा॥८४॥स्थूलैलाबृहदेलात्रि
पुटात्रिदिवोद्भवाचभद्रैला॥सुरभित्वक्कमहेलापृथ्वीकन्या
कुमारिकाचैंद्री॥८५॥कायस्थागोपुटाक्रांताघृताचीगर्भसं
भवा॥इंद्राणीदिव्यगंधाचविज्ञेयाष्टदशाह्वया॥८६॥एलाब
हलगंधैंद्रीत्रिविडीनिष्कुटिस्त्रुटिः॥कपोतवर्णीगौरंगीबा
लाबलवतीहिमा॥८७॥चंद्रिकाचोपकुंचीचसूक्ष्मसागरगामि
नी॥गर्भारिगंधफलिकाकायस्थाष्टदशाह्वया॥८८॥एलाद्वयं
शीतलतिक्तमुक्तंसुगंधिपित्तार्त्तिकफापहारि॥करोतिहृद्रोग
मलार्त्तिवस्तिपूस्त्वघ्नमत्रस्यदिरोगुणाढ्यः॥दोह्लीएला॥यरडु
लक्ति॥सैंधवंस्याच्छीतशिवंनादेयंशिंधुजंशिवं॥शुद्धंशिवात्म
जंपथ्यमाणिमंथंनवाभिधं॥९०॥सैंधवंलवणंवृष्यंचक्षुष्यंरुचि
दीपनं॥त्रिदोषशमनंपूतंव्रणदोषविबंधजित्॥९१॥सैंधवं॥
भाषा२॥सैंधवंद्विविधंज्ञेयंश्वेतंरक्तमितिक्रमात्॥रसवीर्य
विपाकेषुगुणाढ्यपूतनंशिवं॥९२॥सौवर्चलंतुरुचकंतिलकं
हृद्यगंधकं॥अक्षंचकृष्णलवणंरुच्यंकौद्रविकंतथा॥९३॥
सौवर्चलंलघुसारंकटूष्णंगुल्मजंतुजित्॥ऊर्ध्ववातामशूला
र्त्तिविबंधारोचकान्जयेत्॥९४॥सौवर्चल॥भाषा२॥नीलका
चोद्भवंकाचतिलकंकाचसंभवं॥काचसौवर्चलंकृष्णलवणंपा
क्यजंस्मृतं॥९५॥काचोत्थंहृद्यगंधंचतत्काललवणंतथा॥कुरु
विंदंकाचमलंकृत्रिमश्चचतुर्दश॥९६॥काचादिलवणंरुच्यंईष
त्सारंचपित्तलं॥दाहकंकफवातघ्नंदीपनंगुल्मशूलहृत्॥९७॥का
चलवण॥भाषा२॥विडंद्राविडकंखंडंकृतकंक्षारमासुरं॥सुपा

कंपखंडलवणंधूर्त्तकृत्रिमकंदश॥९९॥बिडमुष्णंचलवणंदीप
नंवातनाशनं॥रुच्यंचाजीर्णशूलघ्नंगुल्ममेहविनाशनं॥१००॥
बिडलवण॥भाषा२॥गाढादिलवणंशुभंपृथ्वीजंघटदेशजं॥ग
डोत्थंचमहारंभंसाभरंसंभरोद्भवं॥१॥गडोत्थंनूष्णलवणंईषद
म्लंमलापहं॥दीपनंकफवातघ्नंअर्शोघ्नंकोष्ठशोधनं॥२॥गाढल
वणं॥संभरदेशेप्रसिद्धा॥सामुद्रकंतुसामुद्रंसमुद्रलवणंशिवं॥
वशिरंसागरोत्थंचाप्यसीवंलवणाब्धिजं॥३॥सामुद्रंलघुहृद्यंच
पलितास्तदपित्तदं॥विदाहीकफवातघ्नंदीपनंरुचिकृत्परं॥बडा
गरलवण॥भाषा२॥द्रोणेयंवार्द्धेयंद्रोणीजंवारिजंचवार्द्धिभवं॥
द्रोणीलवणंद्रौणंत्रिकटुलवणंचवसुसंज्ञं॥द्रोणेयं[illegible]णके
नात्युष्णमाविदाहिच॥भेदनंस्निग्धमीषच्चशूलघ्नंचाल्पपित्तल
॥६॥दोणीचेंमीट॥दोणीयउपु॥औषरकंसार्वगुणंसार्वसंसर्व
लवणमूषरजं॥सांभारंबहुलवणंचमिश्रकंनवधा॥औषरंतु
पटु क्षारंतिक्तंवातकफापहं॥विदाहिपित्तकृद्ग्राहिमूत्रसंशो
षकारिच॥७॥कटुया॥बेरकेय॥आहउप्पु॥रोमकमौद्भिजमु
कं वसुकंवसुपंसुलवणमूषरजंपांसवसौषरमैरिणसार्वसा
र्वसहंरुद्रैः॥८॥रोमकंतीक्ष्णमत्युष्णंपटुतिक्तंचदीपनं॥दाहशो
षकरंग्राहिपित्तकोपकरंपरं॥वाणेसुरवलेमीठ॥बयलुगट्टेयउ
प्पु॥एवंनवलवणाः॥अजमोदाखराह्वाचमस्तमोदाचमर्कटी॥
मोदागंधादलाहस्तिकारवीगंधपत्रिका॥१०॥माधूरीशिखिमोदा
चमोदाढ्यावह्निदीपिका॥ब्रह्मकोशीविशालीचहृद्यगंधोग्रगंधि
का॥११॥मोदिनीफलमुख्याचविंशत्याख्यासुवाचका॥अजमो
दाकटुरुष्णारूक्षाकफवातहारिणीरुचिकृत्त॥स्थलाध्मानारोच
कजठरामयनाशनीचैव॥१२॥अजमोदा॥भाषा२॥रेणुकाकपि
लाकांतानंदिनीमहिलाद्विजा॥राजपुत्रीहिमारेणुःपांडुपुत्रीह
रेणुका॥१३॥सुपर्णीशिशिराशांताकौंतीवृत्ताचधर्मिणी॥कपि
लोलाहेमवतीपांडुपत्नीचविंशतिः॥१४॥रेणुकातुकटुःशीताख
र्जूकंडूतिहारिणी॥तृष्णादाहविषघ्नीचमुखवैमल्यकारिणी॥१५॥

रेणुका॥भाषा२॥बोलरक्तामहामुंडंसुरसंपिंडकंविषं॥निर्लो
हंबर्बरंपिंडंसौरभंरक्तगंधकं॥१६॥रसाभुंगंमहागंधंविश्र
श्रमुभगंधकं॥विश्वगंधंगंधरसंव्रणारिःस्मृतिसंज्ञकं॥१७॥बो
लंतुकटुतिक्तोष्णंकषायंरक्तदोषनुत्॥कफपित्तामयान्हंति
प्रदरादिरुजापहा॥१८॥बोलभाषा॥२॥कर्चूरोद्राविडःकार्श्यो
दुर्लभोगंधमूलकः॥वेधमुखोगंधसारोजटिलश्चाष्टनामकः॥
॥१९॥कर्चूरःकटुतिक्तोष्णःकफकासविनाशनः॥मुखवैशद्य
जननोगलगंडादिदोषनुत्॥२०॥कचोरा॥भाषा२॥पाठांबष्ठां
बष्टिकास्यात्प्राचीनापापचेलिका॥पाठिकास्थापिनीचैवश्रे
यसीवृद्धिकर्णिका॥२१॥एकाष्ठीलाकुचैलीचदीपनीवरतिक्त
का॥तिक्तापूषावृहत्तिक्तादीपनीत्रिशिरावृकी॥२२॥मालवी
चवरादेवीवृत्तपर्णीद्विदङ्मिता॥पाठातिक्तागुरूष्णाचवात
पित्तज्वरापहा॥२३॥भग्नसंधानकृत्पित्तदाहातीसारशूलहृत्
॥पाठा॥भाषा२॥वृक्षाम्लमम्लशाकंस्याच्चुक्राम्लंतित्तिडीफलं॥
शाकाम्लमम्लपूरंचपूराम्लंरक्तपूरकं॥२५॥चूडाम्लबीजाम्ल
फलाम्लकंस्यादम्लादिवृक्षाम्लफलंरसाम्लं॥श्रेष्ठाम्लमत्यम्ल
मथाम्लबीजंफलंचचुक्रादिनगेंद्रसंख्या॥२६॥वृक्षाम्लमम्लं
कटुकंकषायंसोष्णंकफार्शोघ्नमुदीरयंति॥तृष्णासमीरोद
रहृद्गदादिगुल्मातिसारव्रणदोषनाशि॥२७॥तित्तिडीक॥अ
म्लाम्लवेतसोवेधीरसाम्लोवीरवेतसः॥वेतसाम्लश्चाम्लसारः
शतवेधीचवेधकः॥२८॥भीमश्चभेदनोभेदीराजाम्लश्चाम्लभे
दनः॥अम्लांकुशोरक्तसारःफलाम्लश्चाम्लनायकः॥२९॥सह
स्रवेधीवीराम्लोगुल्मकेतुर्धराक्षिधा॥शंखमांसादिद्रावीस्याद्वि
धाचैवाम्लवेतसः॥३०॥आम्लवेतसमत्यम्लंकषायोष्णंचवात
जित्॥कफार्शःश्रमगुल्माघ्नमरोचकहरंपरं॥३१॥अम्लवेतस॥
भोटदेशेप्रसिद्धा॥कटुकाजननीतिक्तारोहिणीतिक्तरोहिणी
॥चक्रांगीसस्यभिन्नाचबकुलासकुलादनी॥३२॥सादनीशत
पर्वास्याचक्रांगीमत्स्यभेदिनी॥अशोकरोहिणीकृष्णाकृष्णभे

द्रामहौषधी॥३३॥कट्वीजनीकांडरुहाकटुंभ्रकटुरोहिणी॥केदा रकटुकारिष्टाप्यामघ्नी पंचविंशतिः॥३४॥कटुकातिकटुस्तिक्ता शीतपित्तास्रदोषजित्॥बलासारोचकंश्वासज्वरहृद्रेचनीच सा॥३५॥केदारकटुकी॥भाषा२॥अतिविषाश्वेतकंदाविश्वाशृ गीचभंगुरा॥विरूपाश्यामकंदाचविषरूपामहौषधी॥३६॥वि षाप्रतिविषाचांद्राविषाश्वेतवचास्मृता॥अरुणोपविषाचैवज्ञेया सप्तदशाह्वया॥कटूष्णातिविषातिक्ताकफपित्तज्वरापहा॥आमा तीसारकासघ्नीविषच्छर्दिविनाशनी॥३८॥अतिविषा॥भाषा२॥ त्रिविधातिविषाज्ञेयाशुक्लाकृष्णातथारुणा॥रसवीर्यविपाकेषु निर्विशेषगुणाचसा॥३९॥मुस्ताभद्रावारिदांभोदमेघाजीमूता ब्दोनीरदोभ्रंघनश्च॥गांगेयंस्याद्भद्रमुस्तावराहीगुंजाग्रंथिभद्र कासीकसेरु॥४०॥क्रोडेष्टाकुरुविंदाख्यासुगंधिर्ग्रंथिलाहि मा॥वन्याराजकसेरुश्चकच्छोत्थापंचविंशतिः॥४१॥भद्रमुस्ता कषायाचतिक्ताशीताचपाचनी॥पित्तज्वरकफघ्नीचज्ञेयासंग्र हणीचसा॥४२॥भद्रमुस्ता॥भद्रकाशीप्रसिद्धा॥भाषा२॥अप रानागरमुस्तानागरोत्थानागरादिघनसंज्ञाचंक्रानादवीचूडा लापीडमुस्ताच॥४३॥शिशिराचवर्षधांशीककुरुहाचानुकेस रोच्चाटा॥सापूर्णकोष्ठसंज्ञाकलापिनीसागरेंदुमिता॥४४॥ति क्तानागरमुस्ताकटुःकषायाचशीतलाकफनुत्॥पित्तज्वराति साररुचितृष्णादाहनाशनीश्रमहृत्॥४५॥नागरमुस्ता॥नाग रदेशेप्रसिद्धा॥यष्टीमधुर्मधुर्यष्टीमधुवल्लीमधुस्रवा॥मधुकंम धुकंयष्टीयष्ट्याह्वंवसुसंमितं॥४६॥मधुरंयष्टिमधुकंकिंचित्ति क्तंचशीतलं॥चक्षुष्यंपित्तहृद्रक्तशोषतृष्णाव्रणापहं॥यष्टीमधु॥भाषा॥२॥अन्यक्लीतनमुक्तंक्लीतनीयकंमधुकं॥मधुवल्लीचम धूलीमधुरनाममधुरसानिरसा॥शोषापहाचसौम्यास्थलजाजल जाचसद्द्विधाभूत्ता॥सामान्येनमतेयंद्वादशसंज्ञाबहुज्ञधिया॥४९ क्लीतनंमधुकंरुच्यंबल्यंवृष्यंव्रणापहं॥शीतलंगुरुचक्षुष्यंअम्ल पित्तापहंपरं॥५०॥वल्लियष्टिमधु॥भाषा॥२॥भार्गीगर्दभिपाकश्च

फांजीचांगारवल्लरी॥ बर्षाब्राह्मणयष्टिश्च बर्बरोभृंगजावसा ५१
पद्मायष्टिश्च भारंगीवातारिः कासजित्परं॥ सुरूपासमरेष्टा च श
क्रमाता च षोडश॥५२॥ भांर्गीतु कटुतिक्तोष्णाकासश्वासविना
शनी॥ शोफव्रणक्रिमिघ्नश्चदाहज्वरनिवारिणी॥ भारंगी॥ किर्हं
देगु॥ मूलंपुष्करमूलंचपुष्करंपद्मपत्रकं॥ पद्मपुष्करजंबीजंपौ
ष्करंपुष्कराह्वयं॥५४॥ काश्मीरंब्रह्मतीर्थंचश्वासारिर्मूलपुष्करं॥
ज्ञेयंपंचदशाह्वंचपुष्कराद्यंजटाशिके॥५५॥ पुष्करंकटुतिक्तोष्णं
कफवातज्वरापहं॥ श्वासारोचककासघ्नंशोफघ्नंपांडुनाशनं ५६
पुष्करमूल॥ भाषा॥ २॥ पुष्करेप्रसिद्ध॥ शृंगीकुलीरशृंगीस्यात्
पोषाचवनमूर्द्धजा॥ चंद्राकर्कटशृंगीचमहाघोषाचशृंगिका॥
॥५७॥ कालिकाचेंदुखंडाचलतांगीचविषाणिका॥ चक्राचशि
खरंचैवकर्कटाह्वा त्रिपंचधा॥५८॥ तिक्ताकर्कटशृंगीतुगुरुरु
ष्णानिलापहा॥ हिक्कातीसारकासघ्नीश्वासपित्तास्रनाशनी ५९
काकडासिंगी॥ कर्काटशृंगी॥ दंतीशीघ्रास्येनघंटानिकुंभीनाग
स्फोतादंतिनीचोपचित्रा॥ भद्रारूक्षारोचनीचानुकूलानिःश
ल्यास्याद्रूक्षदंताविशल्या॥६०॥ मधुपुष्पैरंडफलाभद्राण्यैरंड
पत्रिका॥ उदुंबरदलाचैवतरुणीचाणुरेवनी॥६१॥ विशोधनी
चकुंभीचज्ञेयाचाग्निकराह्वया॥ दंतीकटूष्णाशूलामत्वग्दोषश
मनीचसा॥६२॥ अर्शोव्रणाश्मरीशल्यशोधनीदीपनीपरा॥ दंति
॥ दंति॥ अन्यादंतीकेशरुहाविषभद्राजयावहा॥६३॥ आवर्त्तकी
वरांगीचजयाह्वाभद्रदंतिका॥६४॥ अन्यादंतीकटूष्णाचरेचनीक्रि
मिहापरा॥ शूलकुष्ठामदोषघ्नीतुंदामयविनाशनी॥६५॥ दुसरीदं
ती॥ एरंडनेदंति॥ रेचकोजयपालश्चसारकत्तिंत्रिफलं॥ दंतीबी
जंमूलद्राबीजंज्ञेयंस्याद्वीजरेचनी॥६६॥ कुंभीबीजंकुंतिनीबीजसंज्ञं
घंटाबीजंदंतिनीबीजमुक्तं॥ बीजांतास्यंशोधनीचक्रदंत्योर्वेदेह्वा
स्यंतन्निकुंभ्याश्चबीजं॥६७॥ जयपालःकटुरुष्णःक्रिमिहारीविरे
चकः॥ दीपनःकफवातघ्नोजठरामयशोधनः॥ जेपाल॥ भाषा २॥ उ
क्तात्रिरन्यालविकामसूरावाश्यामार्धचंद्राविदलासुषेणी॥ कालिंदिका

सैवतुकालमेषीकालीत्रिवेलाचनिचंद्रसंज्ञा॥६९॥त्रिवृत्तिक्ताकटू
ष्णाचक्रिमिश्लेष्मोदरार्त्तिजित्॥कुष्ठकंडूव्रणान्हंतिप्रशस्ताचत्रि
रेचने॥७०॥तियड॥तिगडे॥रक्तान्यापिचकालिंदीत्रिपुटाताम्रपुष्पि
का॥कुलवर्णामसूरीचाप्यमृताकासनाशिका॥७१॥रक्तात्रिवृद्व्र
सतिक्ताकटूष्णारेचनीचसा॥ग्रहणीमलविष्टंभहारिणीहितकारि
णी॥७२॥लोहितीतियड॥केंष्यनेपतियडे॥त्वचंत्वग्वल्कलंभृंगंव
रांगंमुखशोधनं॥सकलंसैकलंवन्यंसुरसंरामवल्लभं॥७३॥उत्क
टंबहुगंधंचविज्जलंचवनप्रियं॥लटपर्णंगंधवल्कंवरंसीतवसु
स्मिती॥७४॥त्वचंतुकटुकंशीतंकफकासविनाशनं॥शुक्लामशम
नंचैवकंठशुद्धिकरंलघु॥७५॥तज॥भाषा २॥पत्रंतमालपत्रंचप
त्रकंछदनंदलं॥पलाशंमंशुकंवासस्तापसंसुकुमारकं॥७६॥व
स्त्रंतमालकंरामंगोपनंवसनंतथा॥तमालंसुरभिगंधंज्ञेयंसप्तद
शाह्वयं॥७७॥पत्रकंलघुतिक्तोष्णंकफवातविषापहं॥वस्तिकंडू
तिदोषघ्नंसुखमस्तकशोधनं॥७८॥पत्रक॥भाषा २॥किंजल्कंकन
काह्वंचकेसरंनागकेसरं॥चापेयंनागकिंजल्कंनागीयंकाचनंतथा
॥७९॥सुवर्णहेमकिंजल्कंरुक्मंहेमंचपिंजरं॥फणिपन्नगपारादि
केसरंपंचभूह्वयं॥८०॥नागकेसरमल्पोष्णंलघुतिक्तंकफापहं॥व
स्तिवातामयघ्नंचकंठशीर्षरुजापहं॥८१॥नागकेसर॥भाषा २॥त
वक्षीरंपयःक्षीरंयवजंगवयोद्भवं॥अन्यद्गोधूमजंचान्यत्पि[illegible]
तंडुलोद्भवं॥८२॥अन्यच्चतालसंभूतंतालक्षीरादिनामकं॥वनगो
क्षीरजंश्रेष्ठंअभावेन्यदुदीरितं॥तवक्षीरंतुमधुरंशिशिरंदाहपि
त्तनुत्॥क्षयकासकफश्वासनाशनंचास्रदोषनुत्॥तवक्षीर॥भाषा
॥२॥तालीसपत्रंतालीसंपत्राख्यंवसुकोदरं॥धात्रीपत्रंचार्कवेधं
करिपत्रंघनच्छदं॥८५॥नीलंनीलांबरंतालंतालीपत्रंतलाह्वयं॥
तालीसपत्रकस्येतिनामान्याहुश्चतुर्दश॥८६॥तालीसपत्रंतिक्तो
ष्णंमधुरंकफवातनुत्॥कासहिक्काक्षयश्वासछर्दिदोषविनाश
कृत्॥८७॥तालीपत्र॥भाषा २॥स्याद्वंशरोचनावांशीतुंगक्षीरीतु
गाशुभा॥त्वक्क्षीरीवंशगाशुभ्रावंशक्षीरीचवैणवी॥त्वक्सारकार्म

रीश्वेतावंशकर्पूररोचना॥तुंगारोचनिकापिंगानवेंदुर्वंशशर्करा
॥८८॥स्याद्वंशरोचनारूक्षाकषायामधुराहिमा॥रक्तशुद्धिकरी
तापपित्तोद्रेकहराशुभा॥वंशरोचना॥भाषा॥२॥तवक्षीरेयवक्षीरे
क्षीरेजातंगुणोत्तरं॥वंशक्षीरीसमंप्रोक्तंतद्भावेन्यवस्तुजं॥९०॥
गवयक्षीरजंक्षीरंसुस्निग्धंशीतलंलघु॥सुगंधिद्रावकंशुभ्रमन्य
त्स्वल्पगुणंस्मृतं॥९१॥मंजिष्ठाहरिणीरक्तागौरीयोजनवल्लिका॥
समंगाविकसापद्मारोहिणीकालमेषिका॥९२॥मंडीचित्रलता
चित्राचित्रांगीजलनीचसा॥मंडूकपर्णीविजयावजूषारक्तयष्टि
का॥९३॥क्षत्रिणीचैवरागाढ्याभंडारीकोलभांडिका॥अरुणाज्व
रहंत्रीचछद्मानागकुमारिका॥९४॥भंडारलतिकाचैवरागांगीव
स्त्रभूषणा॥सैकत्रिंशाह्वयाप्रोक्तामंजिष्ठाचभिषग्वरैः॥९५॥मंजि
ष्ठामधुरास्वादेकषायोष्णागुरुस्तथा॥व्रणमेहज्वरश्लेष्मविषने
त्रामयापहा॥९६॥मंजिष्ठानामगुण॥भाषा॥२॥बोलस्त्वयोजनी
कौचिभाहिलीचचतुर्विधा॥मंजिष्ठाचैवसाप्रोक्ताविलोमेचोत्तमो
त्तमा॥९७॥हरिद्राहरिद्रंजनीस्वर्णवर्णासुवर्णाशिवावर्णिनीदीर्घ
रागा॥हरिद्रीचपित्तावरांगीचगौरीजनिष्टाचरावर्णदात्रीपवित्रा
॥९८॥हरितारजनीनाम्नीविषघ्नीवरवर्णिनी॥पिंगलावर्णिनी
चैवमंगल्यामंगलाचसा॥९९॥लक्ष्मीभद्राशिफाशोफाशोभनाशु
भगाह्वया॥श्यामाजयंतिकाह्वेचत्रिंशनामविलासिनी॥२००हरिद्रा
कटुतिक्तोष्णाकफवातास्त्रकुष्ठनुत्॥मेहकंडूव्रणान्हंतिदेहव
र्णीविधायिनी॥१॥हलदि॥अरसिन॥अन्यादारुहरिद्राचदार्वी
पीतद्रुपीतिका॥कालेयकंपीतदारुस्थिररागाचकामिनी॥२॥क
टंकटेरीपर्जन्यापीतादारुनिशास्मृता॥कालीयकंकामवतीदा
रुपीताचपंचच॥३॥स्यात्कर्कटकिनीज्ञेयाप्रोक्तासप्तदशाह्व
या॥तिक्तादारुहरिद्रातुकटूष्णाव्रणमेहनुत्॥४॥कंडूविस
र्पत्वग्दोषविषकर्णाक्षिदोषहा॥दारुहरिद्रांमरनरिसिन॥
लाक्षाखदिरकारक्तारंगमातापलंकषा॥५॥जंतुश्चक्रिमिहा
चैवद्रुमव्याधिरलक्तकः॥६॥पलाशीमद्गुपीतेरीमलंतुकागंधमा

दनी॥नीलाद्रवरसाचैवपित्तारिमुनिभूह्वयः॥६॥लाक्षातिक्तक
षायास्यात्श्लेष्मपित्तार्त्तिदोषनुत्॥विषरक्तप्रशमनीविषमज्व
रनाशनी॥७॥लाख॥अरग्नु॥अलक्तकोजंतुरसोरोगोनिर्भर्त्स
नस्तथा॥जननीजंतुकारीचसंधर्षाचक्रमर्दिनी॥८॥अलक्त
कःसुतिक्तोष्णःकफवातभयापहः॥कंठरुक्कामनोरुच्योव्रण
दोषार्त्तिनाशनः॥९॥अलता॥अलतगे॥महाउर॥लोध्रोभोध्रो
भिल्लतरुर्भिल्लकःकांडकीलकः॥तिरीटोलोध्रकोवृक्षःशंबरो
हस्तिरोध्रकः॥१०॥तिलकःकंडहीनश्चशार्वरोहेमपुष्पकः॥
भिल्लीशाबरकश्चैवज्ञेयःपंचदशाह्वयः॥११॥क्रमुकःपट्टिका
रोध्रोकल्करोध्रोबृहद्दलः॥जीर्णबुध्नोबृहद्वल्कोजीर्णपत्रो
क्षिभेषजः॥शाबरःश्वेतरोध्रश्चमालबोबहलत्वचः॥पट्टिला
क्षाप्रसादश्चवाल्करोबाणभूह्वयः॥१३॥रोध्रद्वयंकषायंस्या
त्शीतंवातकफास्रनुत्चक्षुष्यंविषहृत्तत्रविशिष्टोवल्करो
ध्रकः॥१४॥लोध॥भाषा॥२॥धातकीवह्निपुष्पीचताम्रपुष्पी
चदाहनी॥अग्निज्वालासुभिक्षाचपार्वतीबहुपुष्पिका॥१५॥
कुमुदासाधुपुष्पीचकुंजरामद्यवासिनी॥गुच्छसंघातपुष्पां
ताज्ञेयासाबोधपुष्पिणी॥१६॥तीव्रज्वालावह्निशिखामद्यपु
ष्पाचविंशतिः॥धातकीकटुरुष्णाचमदकृद्विषनाशनी॥१७॥
प्रवाहिकातिसारघ्नीविसर्पव्रणनाशनी॥धायिफूल॥भाषा
॥२॥समुद्रनामप्रथमंपश्चात्फलमुदाहरेत्॥१८॥समुद्रफ
लमित्यादिनामवाच्यंभिषग्वरैः॥फलंसमुद्रस्यकटूष्णकारि
वातापहंभूतनिरोधकारि॥त्रिदोषदावानलदोषहारिकफा
मयंभ्रांतिविरोधकारि॥२०॥समुद्रफल॥भाषा॥२॥निर्विषा
पविषाचैवविविषाविषहापरा॥विषहंत्रीविषभवाह्यविषावि
षवैरिणी॥२१॥निर्विषातुकटुःशीताकफवातास्रदोषनुत्॥अने
कविषदोषघ्नीव्रणसंरोपणीचसा॥२२॥निर्विषा॥भाषा॥२॥के
दारेउत्पत्ति॥विषमाहेयममृतंगरलंदारदंगरं॥कालकूटंकाल
कूटेहरिद्रंरक्तशृंगकं॥२३॥नीलेचगरदंक्ष्वेडोधारंहालाहलं

हरं॥मरं हलाहलं शृंगी तु गरं चैकविंशतिः॥सामान्य विषना
म॥अमृतं स्याद्वत्सनाभो विषमुग्रं महौषधं॥गरलं मरणं नागः
स्तोककं प्राणहारकं॥२५॥गरलं स्थावरादि स्यात्प्रोक्तं चैकादशा
ह्वयं॥वत्सनाभो ति मधुरः सोष्णो वातकफापहः॥२६॥कंठरुक्
सन्निपातघ्नः पित्तसंतापकारकः॥वत्सनाभ विष॥भाषा २॥
स्थावरे विषजातीनां श्रेष्ठो नागोग्रशृंगकौ॥नागो देहकरे श्रेष्ठो
लोहे चैवोग्रशृंगकः॥विषस्याष्टादशभिधाश्चतुर्वर्गाश्च यत्पृथ
क्॥नदत्र नोक्तमस्माभिर्ग्रंथगौरवभीरुभिः॥२९॥सटी सठी
पलाशश्च षड्ग्रंथाम्लनिशा वधूः॥सुगंधमूला गंधाली शटिका
च पलाशिका॥३०॥सुभद्रा च तृणी दूर्वा गंधाढ्या पलाशिका॥सो
म्या हिमोद्भवा गंधा वधूर्नागेंदुसंमिता॥३१॥सटी सतिक्ताम्लर
सा लघूष्णा रुचिप्रदा च ज्वरहारिणी च॥कफाश्रकंडूव्रणदोष
हंत्री वक्त्रामयध्वंसकरी च सोक्ता॥३२॥आंबेहलदि॥हलिअर
सिन॥कोंकणे प्रसिद्धा॥अन्या तु गंधपत्त्रा स्यात्स्थूला स्यान्निकदं
तका॥वनजा सटिका वन्या स्तवसी र्येकपत्त्रिका॥३३॥गंधपीना
पलाशं तागंधाढ्या गंधपत्त्रिका॥दीर्घपत्त्रा गंधनिशा वेदभूह्वासु
पाकिनी॥३४॥गंधपत्त्रा कटुस्वादुस्तीक्ष्णोष्णा कफवातजित्॥का
सकृद्दिज्वरान्हंति पित्तकोपकरोति च॥३॥सारी भेद॥पलानाम॥
मालवे प्रसिद्धा॥भाषा २॥समुद्रफेनं फेनश्च वाधीफेनं पयोधिजं
॥सुफेनमद्विडिंडीरं सामुद्रं सप्तनामकं॥३६॥समुद्रफेनं शिशिरं
कषायं नेत्ररोगनुत्॥कफकंठामयघ्नश्च रुचिकृत्कर्णरोगहृत॥३७
समुद्रफेन॥कडलनागले॥अफेनं खस्वसरसो निफेनं चाहिफे
नकं॥अफेनं सन्निपातघ्नं वृष्यं बल्यं च मोहदं॥३८॥अफेन॥भाषा
॥२॥मालवे प्रसिद्धा॥चतुर्विधमफेनं स्यात्तु जारणं मारणं तथा॥धा
रणं सारणं चैव क्रमाद्वक्ष्ये तु लक्षणं॥३९॥श्वेतं च जारणं प्रोक्तं कृष्ण
वर्णं च मारणं॥धारणं पीतवर्णं तु कर्बुरं सारणं तथा॥४०॥जारणं जा
रयेत्न्नं मारणं मृत्युदायकं॥धारणं च वयस्तंभं मारणं मलसारणं
॥अफेनलक्षणानि॥टंकणं टंकणक्षारो रंगक्षारो रसाधिकः॥लोह

द्रावीचरघ्नश्चसुभगोरंगदश्चसः॥४२॥वर्त्तुलंकणकक्षारंमलिनं
धातुवल्लभं॥त्रयोदशाह्वयश्चात्रकथितंतुभिषग्वरैः॥४३॥कथि
तष्टंकणक्षारःकटूष्णःकफनाशनः॥स्थावरादिविषघ्नश्चकास
श्वासापहारकः॥४४॥टंकणखारु॥द्वितीयंकृणंश्वेतंश्वेतकंश्वेत
टंकणं॥लोहशुद्धिकरंशुद्धिमालतीतीरसंभवं॥शिवंचद्रावकंप्रो
क्तंशितक्षारंदशाभिधं॥सुश्वेतंटंकणंस्निग्धंकटूष्णंकफवातनुत्
॥४६॥आमक्षयापहंस्थूलंसविषकासमलापहं॥पांढराटंकण॥
बिलियटंकणु॥संकुरुडोग्रंथिफलोविकटोवस्त्रभूषणः॥कुरुं
डःकर्बुरफलंसंकुरुडश्चसप्तधा॥४८॥संकुरुडोकषायश्चरुचिक
द्दीपनःपरः॥श्लेष्मवातापहारीचवस्त्ररंजनकोलघु॥४९॥संकुरु
ड॥भाषा॥२॥गौर्जरेप्रसिद्धा॥हिमावलीचहद्धाश्रीकुष्ठघ्नोगारकु
ष्ठकः॥अंगारग्रंथिकोग्रंथिग्रंथिलोवसुसंज्ञकः॥५०॥हिमावली
सरातिक्ताप्लीहगुल्मोदरापहा॥क्रिमिकुष्ठगुदात्युग्रःखर्जूकंडूनि
हारिणी॥५१॥हिमावलीभाषा॥२॥हस्तिमदोगजमदोगजदानंम
दस्तथा॥कुंभमदोदंतिमदोदानंद्वीपिमदोष्टधा॥५२॥स्निग्धो
हस्तिमदस्तिक्तोकोपोपस्मारनाशनः॥विषहृत्कुष्ठकंडूनि
व्रणदंडविसर्पनुत्॥५३॥हस्तिमदा॥भाषा॥२॥स्वर्जिक्षारस्व
र्जिकश्चक्षारस्वर्जीसुखाजिकः॥सुवर्चिकःसुवर्चीचसुखव
र्चीवसूपमः॥५४॥स्वर्जिकःकटुरुष्णश्चतीक्ष्णोवातकफा
र्त्तिनुत्॥गुल्माध्मानक्रिमीन्हंतिव्रणजाठरदोषनुत्॥५५॥सा
जीखारु॥लवणारंलवणोत्थंलवणासुरजंचलं॥वर्णमेदश्च
जलजंलवणक्षारंच्नवणंच॥५६॥लोणारक्षारमत्युष्णंतीक्ष्णं
पित्तप्रवृद्धिदं॥क्षारंलवणमीषच्चवातगुल्मादिदोषनुत्॥५७॥
लोणारखारु॥भाषा२॥वज्रकंवज्रकक्षारंक्षारश्रेष्ठंविदारकं॥
सारंचंदनसारंचधूमोत्थंधूमजंगजा॥५८॥वज्रकंक्षारमत्युष्णं
तीक्ष्णंक्षारंवरेचनं॥गुल्मोदराजिविष्टंभशूलप्रशमनंसरं॥वज्र
क्षार॥मालवेप्रसिद्धा॥यवक्षारःक्षतःपाक्योयवजोयवसूचकः॥
यवसूकोयवाह्वश्चयवापत्यंयवाग्रजः॥यवक्षारःकटूष्णश्चकफ

वातोदरार्त्तिनुत्॥आमशूलाश्मरीकृच्छ्रविषदोषहरःसरः
॥यवक्षार॥भाषा॥२॥सर्वक्षारबहुक्षारःसमूहक्षारकस्तथा
॥क्षोमक्षारोमहाक्षारोमालारिक्षारमेलकः॥६२॥सर्वक्षारम
तिक्षारंचक्षुष्यंवस्तिशोधनं॥गुदावर्त्तःक्रिमिघ्नश्चमलवस्त्र
विशोधनं॥सवुखारु॥भाषा॥२॥मायाफलमार्द्रफलंश्चमार्दु
काछिद्रफलंमाइचपंचनामकं॥मायाफलंवातहरंकटूष्णकं
शैथिल्यसंकोचककेशकार्ष्ण्यदं॥६४॥मायाफल॥माजूफल
॥इत्तुनामाद्रव्यसंभारनामाग्राम्यव्याख्यातद्गुणाख्यानपूर्वं॥
वर्गेवीर्यध्वस्तरोगोपसर्गंबुध्वावैद्योविश्ववैद्यत्वमेयात्॥साफ
ल्यायकिलैत्ययानिजनुषःकांतारदूरांतरात्वोजःपात्रविचारणा
यविपणेर्मध्यंसमभ्यासते॥तर्षमाश्रयभूमिरेषभणितःपण्येष
धानांबुधैर्बर्गोद्रव्यगुणानिधाननिपुणैःपण्यादिवर्गात्मना॥यः
सौम्यानशठाशयेनकुलटाह्रीत्यागमानांजनैर्दुर्ग्राह्यंमहिमान
माप्नुतदृतेस्तंजन्मिषांदुर्गतीः॥वर्गःपिप्पलिकादिरेषनहरेस्त
स्येहशास्यात्मनेनामग्रामशिखामणेःखलुकृतेःषष्ठःप्रतिष्ठागमा
त्॥इतिवैद्यराजमंडलीमौलिमाणिक्यमंडनश्रीमदीश्वरपंडि
ततनुजात्यपनीरमणचरणारविंदासैरम्लालसराजहंसश्री
काश्मीराद्यवंशाचार्यपरंपरान्वयप्रतिष्ठांगरिष्ठश्रीनरहरि
पंडितविरचितेनिघंटुराजापरपर्यायनामधेयव त्यभिधानचू
डामणौपण्यवर्गापरनामपिपल्यादिवर्गःषष्ठः॥अथमूलकादि
वर्गः॥मूलकंपंचधाप्रोक्तंचतुर्द्धासिगुरुच्यते॥वंशोद्विर्वेत्रमा
कंदीहरिद्रावन्यजास्तथा॥१॥शृंगाटोभ्रमरकल्लोवन्यार्द्रकम
थापरं॥रसोनोद्विविधःप्रोक्तःपलांडुश्चद्विधामतः॥२॥विंश
त्येकोत्तरंमूलंसूरणंद्वंद्वमुच्यते॥अलूकाःसप्तकंचाथप्रोक्ताश्चा
रण्यकंदकाः॥३॥महिषीमस्तिकोलौचवाराहीविश्वधारिणी
॥द्विधाचनाकुलीमालाविदारीद्वयशाल्मली॥४॥चंडालस्तैलकं
दश्चत्रिपर्णीपुंकरस्तथा॥मुसलीद्विविधाचाथसुद्रसुंकुस्तथैव
च॥५॥रक्तनागकराह्वाचपत्रशाकमथोच्यते॥तालुकंचुक्रकं

विल्लीत्रिविधंशिग्रुपत्रकं॥६॥पालक्यंराजशाकिन्यौचतुर्थीयो
वृकीकमात्॥कुणंजरःकुसुंभारम्भःशताह्वापत्रतंडुली॥७॥रा
जिकाह्वयंचांगेरीचोलिकात्रिविधामता॥जीवशाकस्तथागौ
रसुवर्णाख्यःपुनर्नवः॥८॥वसुकःपंजिकादिश्चमिश्रकोंक
कराह्वयः॥अतःपरंचकूष्मांडीकुंभतुंबीअलाबुकः॥९॥भूतुंबि
काकलिंगश्चद्विधाकोशातकीतथा॥पटोलीमधुराद्याचमृगा
क्षीदधिपुष्पिका॥१०॥ निष्पावीइयवार्त्ताकीगंडरीषड्डुजस्त
था॥कर्कटीत्रपसेर्वारुवालुकाचीणकर्कटी॥११॥चिर्भिटाद
रुशांदूलीकुडुहुंचीसुनिषण्णो॥वेदभेदात्क्रमान्मूलकंदपत्र
फलात्मकाः॥१२॥शाकवर्गेत्रकथ्यंतेमनोहरगुणाश्रयाः॥
एवंचतुर्विधंद्रव्यंबाणखचंद्रसंयुतं॥१३॥मूलकंनीलकंठंच
मूलाह्वंदीर्घमूलकं॥मूक्षारंकंदमूलंस्याद्धस्तिदंतासितंतथा
॥१४॥शंखमूलंहरित्पर्णंरुचिरंदीर्घकंदकं॥कुंजरक्षारमूले
चमूलस्येनेत्रसोदश॥१५॥मूलकंतीक्ष्णमुष्णंचकटूष्णंग्राहि
दीपनं॥दुर्नामगुल्महृद्रोगवातघ्नंरुचिदंगुरु॥१६॥सामान्यमू
लानि॥साधारणमूलंगि॥चाणाख्यमूलकंचान्यच्चागेयंविष्णु
गुप्तकं॥स्थूलमूलंमहाकंदंकोटिल्यंमरुसंभवं॥शालामर्कट
कंमिश्रंज्ञेयंचैवनवाभिधं॥चाणाक्यमूलकंसोष्णंकटुकंरु
च्यदीपनं॥कफवातक्रिमीन्गुल्मंनाशयेद्ग्राहकंगुरुः॥थोरमू
ला॥दोडमूलंगि॥गंजनंशिखिमूलंचयवनेष्टंचवर्तुलं॥ग्रंथि
मूलंशिखाकंदंकंदंडिंडीरमोदकं॥गंजनंकटुरुष्णंचकफवा
तरुजापहं॥रुच्यंचदीपनंहृद्यंदुर्गंधंगुल्मनाशनं॥सेठीमूल॥
चंडिकेयमूलंगि॥पिंडमूलंगजीडंचपिंडिकंपिंडमूलकं॥पिंड
मूलंकटूष्णंचगुल्मवातादिदोषनुत्॥वाटलामूला॥वटमूलंगि
॥अथबालामूलगुण॥कोष्णंतीक्ष्णंचतिक्तंमधुरकटुरसंमूत्रदो
षापहारिश्वासार्शःकासगुल्मक्षयनयनरुजानाभिशूलामयघ्नं॥
कल्यंबल्यंचरुच्यमलविकृतिहरंमूलकंबालकंस्यादुष्णंजीर्णंच
शोषप्रदमुदितमिदंदाहपित्तास्रदाहि॥२०॥अपिच॥आमसंग्रा

ह्निरुच्यंकफपवनहरंपक्कमेतत्कटूष्णंभुक्तःप्राभक्षितंचसपदि
वितनुतेपित्तदाहप्रकोपं॥भुक्त्यासार्धंतुजग्धंहितगतिबलकृ
हृसवारेणतत्स्नेह्यक्तंहृद्रोगमूलप्रशमनमुदितंमूलरुग्दाहिमू
लं॥२३॥मूलकविशेषगुणाः॥गार्जरंपिंगमूलंचपीनकंचसुमूल
कं॥स्वादुमूलंसुपीनंचनारंगंपीतमूलकं॥२४॥गार्जरंमधुरंरुच्यं
किंचित्कटुकफापहं॥आध्मानक्रिमिशूलघ्नंदाहपित्ततृषाप
हं॥२५॥गाजरमूल॥गर्ज्जरि॥इतिमूलकानि॥शिग्रुर्हरितशा
कश्चशाकःपत्रःसुपत्रकः॥उपदंशःक्षामदंशोज्ञेयःकोमलपत्र
कः॥बहुमूलोदंशमूलस्तीक्ष्णमूलोदशाह्वयः॥शिग्रुश्चकटुति
क्तोष्णस्तीक्ष्णोवातकफापहः॥मुखजाड्यहरोरुच्योदीपनोव्र
णदोषनुत्॥पीतसेगुवा॥अरिसिनवणदूविनतुगि॥सुनगा॥
शोभांजनोनीलशिग्रुस्तीक्ष्णगंधोजनप्रभुः॥सुखमोदःकृष्णशि
ग्रुश्चसुष्वोरुचिरंजनः॥२९॥शोभांजनस्तीक्ष्णकटुःस्वादूष्णःपि
च्छिलस्तथा॥जंतुवातार्तिशूलघ्नश्चसुष्वोरोचनःपरः॥कालासेगु
वा॥करियनुगि॥श्वेतशिग्रुःसुतीक्ष्णःस्यात्सुखभंगःसिताह्व
यः॥सुमूलःश्वेतमरिचोरोचनोमधुशिग्रुकः॥३०॥श्वेतशिग्रुःक
टुस्तीक्ष्णःशोफानलनिकृंतनः॥अंगव्यथाहरोरुच्योदीपनोमु
खजाड्यनुत्॥पांडरासेगुवा॥बिलियनुगि॥रक्तकारक्तशिग्रुः
स्यान्मधुरोबहुलच्छदः॥सुगंधकेसरोसिंहोमृगारिश्चप्रकीर्त्तितः
॥रक्तशिग्रुर्महावीर्योमधुरश्चरसायनः॥शोफाध्मानशमीरार्तिपि
त्तश्लेष्मापसारकः॥३३॥रक्तसेगुवा॥कंपनेयनुगि॥वंशोयवफ
लोवेणुःकर्मारस्तृणसेरुकः॥मस्करःशतपर्वाचकंटालुःकंटकीत
था॥महाबलोदृढग्रंथिर्दृढपत्रोधनुर्द्रुमः॥धनुष्योदृढकांडश्च
विज्ञेयोबाणभूमितः॥३५॥अन्यस्तुरंध्रवंशःस्यात्त्वक्सारःकीचका
ह्वयः॥मस्करोवादनीयश्चसुषिराख्यःषडाह्वयः॥३६॥वंशौत्वम्लौ
कषायौचकिंचित्तिक्तौचशीतलौ॥मूत्रकृच्छ्रप्रमेहार्शःपित्तदाहा
स्रनाशनौ॥३७॥सामान्यदोन्हीवेलूनामगुण॥यरडुबिदिरु॥वि
शेषोरंध्रवंशस्तुदीपनोजीर्णनाशनः॥रुचिकृत्पाचनोहृद्यःशूल

घ्नोगुल्मनाशनः॥वंशाग्रंतुकरीवंशाकुरश्चयवफलांकुरः॥तस्य
ग्रंथिस्तुपरुःपर्वतथाकांडसंधिश्च॥३९॥करीरंकटुतिक्ताम्लं
कषायंलघुशीतलं॥पित्तास्रदाहकृच्छ्रघ्नंरुचिकृत्पर्वनिर्गुणं
॥वासे॥विदिरकलिल॥वेत्रोवेतोयोगिदंडःसुदंडोमृदुपर्व
कः॥वेत्रंपंचविधःशैत्यकषायोभूतपित्तहत्॥वेत॥वेत्त॥मा
कंदीबहुमूलाचमादनीगंधमूलिका॥एकाविशदमूलीच
स्यामलाचतथापरा॥४२॥माकंदीकटुकातिक्तामधुरादीपनी
परा॥रुच्याल्पवातकृत्पथ्यानवर्षासुसिताधिका॥४३॥मायि
णि॥मागिणि॥शोलीवनहरिद्रास्यात्वनारिष्टयवशोलिका॥
शोलिकाकटुगोल्याचरुच्यातिक्ताचदीपनी॥४४॥साली॥अडि
विषका॥अरिसिन॥कोंकणेप्रसिद्धा॥शृंगाटकःशृंगरुहाज
लवल्लीजलाश्रया॥शृंगकंदःशृंगमूलोविषाणीसप्तनामकः॥
॥४५॥शृंगाटकःशोणितपित्तहारीलघुःसरोवृष्यतमोविशेषा
त्॥त्रिदोषतापत्वमशोफहारीरुचिप्रदोमोहनदार्ढ्यहेतुः४६
सिंघाडे॥भाषा॥२॥भृंगाह्वाभ्रमराह्वाचभ्रमराच्छल्लीभ्रमरभृं
गमूलिका॥भृंगच्छल्लीकटूष्णास्यात्तिक्तादीपनरोचनी॥४७
॥भवरमालि॥उप्पुशाक॥षेऊतुकटुकाम्लश्चरुचिकृद्बल्यदी
पनः॥४८॥पेऊ॥केट्टाल्ल॥रसोनोलशुनोरिष्टोम्लेच्छकंदो
महौषधं॥भूतघ्नश्चोग्रगंधश्चलशुनःशितपूर्वकः॥४९॥रस
नोम्लरसोनस्यात्कटूष्णःकफवातनुत्॥अरुचिक्रिमिहृद्रो
गशोफघ्नश्चरसायनः॥५०॥पांढरालसण॥बिलियबेलुल्लि
॥रसोनोन्योमहाकंदोगृंजनोदीर्घपत्रकः॥पृथुपत्रःस्थूलकंदो
यवनेष्टोबलेहितः॥५१॥गृंजनस्यमधुरंकटुकंदनालमप्युप
दिशंतिकषायं॥पत्ररंचपशुशंतिचतिक्तंसूतयोलवणमस्थि
वदंति॥५२॥लोहिवावोलुलसण॥केंपिनबेलुल्लि॥अन्यच्च॥
रसोनउष्णःकटुपिच्छिलश्चस्निग्धोगुरुस्वादुरसोतिबल्यः५३
वृष्यश्चमेधास्वरवर्णचक्षुर्भग्नास्थिसंधानकरःसुतीक्ष्णः॥
॥५४॥तथाच॥हृद्रोगजीर्णज्वरकुक्षिशूलविबंधगुल्मारुचि

कृच्छ्रशोफान्॥दुर्नामकुष्ठानिलसादजंतुःकफामयान्हंतिमहा
रसोनः॥लशुनद्वयस्यविशेषगुणाः॥पालांडुस्तीक्ष्णकंदश्चउ
ष्णोचमुखदूषणः॥५४॥द्विजप्रियःकृमिघ्नश्चदीपनोमुखगंधकः
॥५५॥बहुपत्रोविस्रगंधोरोचनोरुद्रसंज्ञकः॥श्वेतकंदश्चतत्रै
कोहारिद्रोन्यइतिद्विधा॥५६॥पलांडुःकटुकोबल्यःकफपित्त
हरोगुरुः॥वृष्यश्चरोचनोस्निग्धोवांतिदोषविनाशनः॥अन्योरा
जपलांडुःस्यात्यवनेष्टोनृपाह्वयः॥राजप्रियोमहाकंदोदीर्घप
त्रश्चरोचकः॥५८॥नृपेष्टोनृपकंदश्चमहाकंदोनृपप्रियः॥रक्त
कंदश्चराजेष्टोनामान्यत्रत्रयोदश॥५९॥पलांडुर्नृपपूर्वःस्या
च्छिशिरःपित्तनाशनः॥कफहृद्दीपनश्चैवबहुनिद्राकरस्तथा
॥६०॥लोहिवीऊलि॥केंपिनउल्लि॥रायउल्लि॥नखाच॥वक्ष्यते
नृपपलांडुलक्षणंक्षारतीक्ष्णमधुरोरुचिकृन्मदः॥कंठशोषश
मनोतिदीपनःश्लेष्मपित्तशमनोतिबृंहणः॥६१॥इतिमूलशा
लिनि॥अथकंदाः॥कंडूलःसूरणःकंदीसुकंदीस्थूलकंदकः॥
दुर्नामारिःसुवृत्तश्चवातारिःकंदसूरणः॥६२॥अर्शोघ्नस्तीव्रकं
दश्चकंदार्हःकंदवर्द्धनः॥बहुकंदोरुच्यकंदःसूरकंदस्तुषोड
श॥६३॥सूरणःकटुकरुच्यदीपनःपाचनःकृमिकफानिला
पहः॥श्वासकासवमनार्शसांहरःशूलगुल्मशमनोप्रदीपकृ
त्॥६४॥सुरणु॥सूरण॥सितसूरणस्तुवन्योवनकंदोरण्यसू
रणोवनजः॥सश्वेतसूरणाख्योवनकंदोलूलश्चसप्ताख्यः६५
श्वेतसूरणकोरुच्यःकटूष्णःकृमिनाशनः॥गुल्मशूलादिदो
षघ्नःसचारोचकहारकः॥६६॥पांढरासूरणु॥बिलियसूरण
॥मुखालुर्मंडपारोहोदीर्घकंदस्तुकंदकः॥स्थूलकंदोमहाकंदः
स्वादुकंदश्चसप्तधा॥६७॥मुखालुकःस्यान्मधुरःशिशिरःपित्तना
शनः॥रुचिकृद्वातकृच्चैवदाहशोषतृषापहः॥६८॥मुखालुःकंदः
॥कंदग्रंथीरोमशोरोमकंदस्तरोमालुस्यासोपित्तांबूलपत्रोनामकं
दःपिंडकोयंदशाह्वयः॥६९॥पिंडालुर्मधुरःशीतोमूत्रकृच्छ्रमयाप
हः॥दाहशोषप्रमेहघ्नोवृष्यसंतर्पणोगुरुः॥७०॥पेंडालु॥बिलियहें

डल॥अन्यस्तुरक्तपिंडालुरक्तालूरक्तपिंडकः॥लोहितोरक्तकंद
श्चलोहितालुःषडाह्वयः॥७१॥रक्तपिंडालुकःशीतोमधुराम्लश्रमा
पहः॥पित्तदाहापहोवृष्योबलपुष्टिकरोगुरुः॥७२॥रक्तालु॥केंपिन
हेंडल॥कासालुःकासकंदश्चकंदालुःश्वलुकश्चसः॥आलुर्विशाल
पत्रश्चपत्रालुश्चेतिसप्तधा॥७३॥कासालुरुग्रकंडूतिविषश्लेष्माम
यापहः॥अरोचकहरःस्वादुपथ्योदीपनकारकः॥७४॥कासालु॥
कोंकणेप्रसिद्धा॥फोंडालुर्लोहितालुश्चरक्तपत्रोमृदुच्छदः॥फोंडा
लुःश्लेष्मवातघ्नःकटूष्णोदीपनीयकः॥७५॥फोंडालु॥वोवगेणसु॥
कोंकणेप्रसिद्धा॥पाणियालुर्जलालुस्यादनूपालुरवालुकः॥पानी
यालुस्त्रिदोषघ्नःसंतर्पणकरःपरः॥७६॥पाणियालु॥नीरुगेणसु
॥नीलालुरसिकालुस्यात्कृष्णालुःश्यामलालुकः॥नीलालुर्मधुरः
शीतःपित्तदाहश्रमापहः॥७७॥नीलालु॥करियगणेसु॥अथम
हाकंदाः॥शुआलुर्महिषकंदोलुलायकंदश्चशुक्लकंदश्च॥सर्पाख्यो
वनवासीविषकंदोनीलकंदोन्यः॥७८॥कटूष्णोमहिषिकंदःक
फवातामयापहः॥मुखजाड्यहरोरुच्योमहासिद्धिकरःसितः॥
महिषीकंदः॥यम्मेगडे॥अनुपेप्रसिद्धा॥हस्तिकंदोहस्तिपत्रः
स्थूलकंदोतिकंदकः॥बृहत्पत्रोतिपत्रश्चहस्तिकर्णस्तुकर्णकः॥
॥८०॥त्वग्दोषारिःकुष्ठहंतागिरिवासिनगाश्रयः॥गजकंदोनाग
कंदोज्ञेयोवैसप्तनामकः॥हस्तिकंदःकटूष्णःस्यात्कफवातामया
पहः॥त्वग्दोषश्चमहाकुष्ठविषवैसर्पनाशकः॥८२॥हस्तिकंदः
॥मल्लिरक्कसियगड्डे॥कोंकणेप्रसिद्धा॥कोलकंदःक्रिमिघ्नश्चपं
जलोवल्लपंजलः॥पुटालुःसुपुटश्चैवपुटकंदश्चसप्तधा॥८३॥को
लकंदःकटुश्चोष्णःक्रिमिदोषविनाशनः॥वांतिविच्छर्दिशमनो
विषदोषनिवारणः॥कोलकंदः॥संपुटगेड्डु॥स्याद्वाराहीसूकरी
क्रोडकन्यागृष्टिर्विष्वक्सेनकांतावराही॥कौमारीस्याद्ब्रह्मपत्री
त्रिनेत्रीक्रौडीकन्यागृष्टिकामाधवेष्टा॥८५॥सूकरकंदःक्रोडोव
नवाशीकुष्ठनाशनोवन्यः॥अमृतश्चमहावीर्योमहौषधिःशबरकं
दश्च॥८६॥वराहकंदोवीरश्चब्राह्मकंदःसकंदकः॥वृद्धिदोव्याधि

हंसाचवसुनेत्रमिताह्वयः॥८७॥वराहीतिक्तकटुकाविषपित्तक
फापहा॥कुष्ठमेहक्रिमिहरावृष्यबल्यारसायनी॥वाराहीकंद॥
हंदिगेडृ॥समस्तस्थूलपर्वतेउत्पत्तिः॥विष्णुकंदोविष्णुगुप्तः
सुपुष्टोबहुसंपुटः॥जलवासाबृहत्कंदोदीर्घवृत्तोहरिप्रियः॥८९
॥विष्णुकंदस्तुमधुरःशिशिरःपित्तनाशनः॥दाहशोफहरोरु
च्योसंतर्पणकरःपरः॥९०॥विष्णुकंदः॥कोंकणेप्रसिद्धा॥भाषा
॥२॥धरणीधारणीयाचवीरपत्नीसुकंदकः॥कंदालुर्वनकंदश्च
कंदाढ्योदंडकंदकः॥९१॥मधुरोधारणीकंदःकफपित्तमयाप
हः॥वक्त्रदोषप्रशमनःकुष्ठकंडूतिनाशनः॥९२॥धारणीकंद
॥नेलगड्डे॥अनुपेप्रसिद्धा॥नाकुलीसर्पगंधाचसुगंधारक्त
पत्रिका॥ईश्वरीनागगंधाचाप्यहिभुक्सरसातथा॥सर्पा
दनीव्यालगंधाज्ञेयाचेतिदशाह्वया॥अन्यामहासुगंधाचसु
वहागंधनाकुली॥९४॥सर्पाक्षीफणिहंत्रीचनकुलाढ्याहिभु
क्सा॥विषमर्दनिकाचाहिमर्दनीविषमर्दिनी॥महाहिगंधा
हिलताज्ञेयास्याद्द्वादशाह्वया॥९५॥नाकुलीयुगलंतिक्तंकटू
ष्णंचत्रिदोषजित्॥अनेकविषविध्वंसिकिंचिच्छ्रेष्ठंद्वितीयकं
॥नाकुलीद्वय॥विषसुंगरीद्वय॥अथमालकंदःस्याद्बलकंद
श्चपंक्तिकंदश्च॥त्रिशिखिदलाग्रंथिदलाकंदलनाकीर्त्तिता
षोढा॥९७॥मालकंदःसुतीक्ष्णःस्यान्गंडमालाविनाशकः॥
दीपनोगुल्महारीचवातश्लेष्मापकर्षकृत्॥९८॥दावणियगड्ड॥
करियगोलि॥विदारिकास्वादुकंदासिताशुक्लाशृगालिका॥
विदारीवृष्यकंदाचबिडालीवृष्यवल्लिका॥९९॥भूकुष्मांडीस्वा
दुलतागजेष्टावारिवल्लभा॥ज्ञेयाकंदफलाचेतिमनुसंख्याह्वया
मता॥१००॥विदारीमधुराशीतागुरुःस्निग्धास्रपित्तजित्॥ज्ञेया
चकफकृत्पुष्टिबल्यावीर्यविवर्द्धनी॥१॥भूयिकोंहलें॥नेलकुं
बल॥अन्याक्षीरविदारीस्यादिक्षुगंधेक्षुवल्लरी॥इक्षुवल्लीक्षीर
कंदःक्षीरवल्लीपयस्विनी॥क्षीरशुक्लाक्षीरलतापयःकंदापयो
लता॥पयोविदारिकाचेतिविज्ञेयाद्वादशाह्वया॥ज्ञेयाक्षीरविदा

रीचमधुराम्लाकषायका॥ तिक्ताचपित्तशूलघ्नीमूत्रमेहामयाप
हा॥४॥ क्षीरकंदोद्विधाप्रोक्तोविनालस्तुसनालकः॥ विनोलोरो
गहर्त्तास्याद्दयस्तंभीसनालकः॥ विनालोरोगहर्त्तास्याद्दयस्तं
भीसनालकः॥५॥ क्षीरकंद॥ भाषा॥ २॥ शाल्मलीकंदकश्चाथ
विज्जुलोचनवासकः॥ वनवासामलघ्नश्चमल्लहंतापडाहूयः
॥ मधुरःशाल्मलीकंदोमलसंग्रहरोधजित्॥ शिशिरःपित्तदा
हार्त्तिशोषसंतापशासनः॥ ६॥ सावरीकंदः॥ भाषा॥ २॥ भागीर
थीतीरेप्रसिद्धा॥ प्रोक्तश्चंडालकंदःस्यादेकपत्रोद्विपत्रकः॥ त्रि
पत्रोथचतुःपत्रपंचपत्रश्चभेदतः॥ चंडालकंदोमधुरःकफपि
त्तास्रदोषजित्॥ विषभूतादिदोषघ्नोविज्ञेयश्चरसायनः॥ ८॥
चंडालकंद॥ मादगेगड्डे॥ अथतैलकंदउक्तोद्रावककंदस्तिलां
कितः॥ दलश्चकेरवीरकंदसंज्ञोज्ञेयस्तिलचित्रपत्रकोबाणेः॥
॥ ९॥ लोहद्रावीतैलकंदःकटूष्णोवातपस्मारहारीविषारिः॥ शो
फघ्नस्याद्बंधकारीरसस्यद्रागेवासौदेहसिद्धिंविधत्ते॥ १०॥ तै
लकंदः॥ सूजिमुर्दिगगड्डे॥ अश्वारिपत्रसंकाशोतिलविंदुसम
न्वितः॥ सक्षिप्ताधस्थभूमिश्चतिलकंदोतिविस्तृतः॥ ११॥ त्रिप
र्णिकावृहत्पत्राछिन्नग्रंथिनिकाचसा॥ कंदालःकंदबहलाप्य
म्लवल्लीविमारुहा॥ १२॥ त्रिपर्णीमधुराशीताश्वासकासविना
शनी॥ पित्तप्रकोपशमनीविषव्रणहरापरा॥ १३॥ त्तिलपर्णि
॥ मूरंगल॥ कोंकणानूपेप्रसिद्धा॥ लक्ष्मणापुत्रकंदाचपुत्रदाना
गिनीतथा॥ नागाह्वानागपत्नीचतुलिनीमस्तिकाचसा॥ १४॥ अ
स्त्रविदुच्छदाचैवसुकंदादशधाह्वया॥ लक्ष्मणामधुराशीतास्त्री
वंध्यत्वविनाशनी॥ रसायनकरीवल्यात्रिदोषशमनीपरा॥ ल
क्ष्मणाकंदा॥ पुरुषगड्डे॥ हस्तपर्यायपूर्वस्तुजोडिवैद्यवरैःस्मृ
तः॥ करतोडिरितिरव्यातोरसवद्धादिवश्यकृत्॥ हाथजोडि॥
मुसलीतालमुलीचसुवहातालपत्रिका॥ गोधापदीहेमपुष्पीभू
तालीदीर्घकंदिका॥ १६॥ मुसलीमधुराशीतावृष्यापुष्टिबलप्र
दा॥ पिच्छिलाकफदापित्तदाहश्रमहरापरा॥ १७॥ मुसलीस्याद्धि

धाप्रोक्ताश्वेतावापरसंज्ञका॥श्वेतास्वल्पगुणोपेताअपराचर
सायनी॥मुसलीकंद॥भाषा॥२॥देलग॥गुच्छाहूकंदस्तबका
हूकंदकोगुलच्छकंदश्चविघंटिकाभिधा॥गुलुच्छकंदोमधुरः
सुशीतलोवृष्यप्रदस्तर्पणदाहनाशनः॥२०॥कुलीहालु॥मुकुलि
यगड्डे॥अथपत्रशाका॥वास्तुकंवास्तुवस्तूकंवस्तुकंहिमलोचिका
॥शाकराजोराजशाकश्चक्रवर्तिश्चकीर्तितः॥२१॥वास्तुकंतुमधुरं
सुशीतलंक्षारमीषदमलंत्रिदोषजित्॥रोचनंज्वरहरंमहार्शसां
नाशनश्चमलमूत्रशुद्धिकृत्॥२२॥चाकवतु॥चक्रवर्ती॥चुक्रंतुचुक्र
वास्तुकंलिकुचंचाम्लवास्तुकं॥दलाम्लमम्लशाकाख्यमम्लादिहि
लमोचिका॥२३॥चुक्रंस्यादम्लपत्रंतुलघूष्णंवातगुल्मनुत्॥रुचि
कृद्दीपनंपथ्यंईषत्पित्तकरंपरं॥चुका॥वडिलि॥आंबवती॥हुलि
चक्रोत॥पलाशलोहिताचिल्लीचिल्लिकाचिल्लिकाचसा॥मृदुपत्री
क्षारदलाचीरपत्रातुवास्तुकी॥चिल्लीवास्तुकतुल्याचसक्षाराश्ले
ष्मपित्तनुत्॥प्रमेहमूत्रकृच्छ्रघ्नीपथ्याचरुचिकारिणी॥चिल्ली॥
चिल्लिका॥श्वेतचिल्लीतुबस्तूकीसुपथ्याश्वेतचिल्लिका॥सितचिल्लु
पचिल्लीचज्वरघ्नीक्षुद्रवास्तुकी॥२७॥श्वेतचिल्लीसुमधुराक्षाराच
शिशिराचसा॥त्रिदोषशमनीपथ्याज्वरदोषविनाशनी॥२८॥बा
थुवा॥बिलियचिल्लिके॥भागीरथीतीरेप्रसिद्धा॥अन्याशुनकचि
ल्लीस्यात्कुचिल्लीश्वासचिल्लिका॥श्वचिल्लीकटुतीक्ष्णाचकंडूतिव्र
णहारिणी॥सूणेचिल्लि॥नायचिल्लिके॥शिगुपत्रभवंशाकंरुच्यं
वातकफापहं॥कटूष्णंदीपनंपथ्यंक्रिमिघ्नंपाचनंपरं॥३०॥सेगु
पत्र॥नुग्गियपल्ले॥पालक्यंरुपलक्यायांमधुरास्तुरपत्रिका॥सुप
त्रास्निग्धपत्राचग्रामीणाग्राम्यवल्लभा॥३१॥पालक्यमीषत्कटुकं
मधुरंपथ्यशीतलं॥रक्तपित्तहरंग्राहिज्ञेयंसंतर्पणंपरं॥पालक्य
शाक॥भाषा२॥चित्रकूटदेशेप्रसिद्धा॥राजाभिधानपूर्वातुनगा
ह्वात्रयरेणवा॥राजाद्रिःस्याद्राजगिरिःज्ञातव्याराजशाकिनी॥३३॥
राजशाकिनिकारुच्यापित्तघ्नीशीतलाचसा॥सैवातिशीतलारुच्या
विज्ञेयास्थूलशाकिनी॥३४॥राजगिरि॥डोलगोदोनि॥सरडु॥उपो

दकीकलंबीजपिच्छिलापिच्छिलकृदा॥मोहिनीमदशाकश्चवि
शालावल्युपोदकी॥३५॥उपोदकीकषायोष्णाकटुकामधुराच
सा॥निद्रालस्यकरीरुच्याविष्टंभश्लेष्मकारिणी॥३६॥माडवी
रुदवेलि॥हेबूलसले॥उपोदकीपरासुद्रासूक्ष्मपत्रानुमंड
पी॥रसवीर्यविपाकेषुसदृशीपूर्वयास्वयं॥३७॥साहिवेलि॥
करियवलिबसले॥उपोदकीतृतीयाचवन्यजावनजाहूया
॥वन्यजोपोदकीतिक्ताकटूष्णारोचनीचसा॥रानवेलि॥का
बसले॥मूलपोतीसुद्रवल्लीपोतिकासुद्रपोतिका॥सुपोपोद
कनाम्नीचवल्लिःशाकटपोतिका॥३९॥मूलपोतीत्रिदोषघ्नीरु
च्याबल्यालघुश्चसा॥बलपुष्टिकरारुच्याजठराबलदीपनी॥४०
॥मालविबलि॥नोंटदबसले॥कुणंजरस्त्रिदोषघ्नोमधुरोरुच्य
दीपकः॥ईषत्कषायसंग्राहीपित्तश्लेष्महरोलघु॥४१॥कुणंज
रः॥गोरजेयपलेय॥कौसुंभशाकंमधुरंकटूष्णंविण्मूत्रदोषाप
हरंमदघ्नं॥दृष्टिप्रसादंकुरुतेविशेषाद्रुचिप्रदंदीप्तिकरंचवह्नेः
॥४२॥कुसुंभ॥कसुंबेयपल्ले॥शतपुष्पादलंसोष्णंमधुरंगुल्मशू
लजित्॥वातघ्नंदीपनंपथ्यंपित्तकृद्रुचिदायकं॥४३॥सेउप॥स
ब्बशिगे॥तंडुलीयदलंहिममर्शः पित्तरक्तविषकासविनाशि॥
ग्राहकंचमधुरंचविपाकोवाहशोषशमनंरुचिदायि॥४४॥तं
डुलीपत्र॥किरुकुसाले॥कटूष्णंराजिकापत्रंक्रिमिवातकफाप
हं॥कंठामयहरंस्वादुवह्निदीपनकारकं॥४५॥मज्जरीपत्र॥सा
सवेयतोप्पलु॥सार्षपपत्रमत्युष्णंरक्तपित्तप्रकोपनुत्॥विवा
हिकटुकंस्वादुशुक्लहृद्रुच्विदायकं॥४६॥सिरसोपत्र॥बिलिय
सासवेय॥ताप्पलु॥चांगेरीशाकमत्युष्णंकटुरोचनपाचनं॥दी
पनंकफवातार्शसंग्रहण्यतिसारजित्॥४७॥आंबवती॥पुलं
चुणिसे॥घोलीचघोलिकाघोलिकलटुष्कंभकालुकं॥साधारण
घोलीनाम॥सेत्रजंलवणंरुच्यंअम्लंवातकफापहं॥सेतीचीघो
लि॥केप्पगोलि॥आरामघोलिकाचाम्लरूक्षारुच्यानिलापहा
॥पित्तश्लेष्मकरीचान्यासूक्ष्मजीर्णज्वरापहा॥४९॥मालावीघो

लि॥ सान्हीपोलि॥ तोंडगोलि॥ किरुगोलि॥ जीवंतोरक्तनालश्च नाम्नपत्रप्रनाशकः॥ शाकवीरस्तुमधुरोजीवशाकश्चमेधकः॥ ॥५१॥ जीवशाकःसुमधुरोबृंहणोवस्तिशोधनः॥ दीपनःपाचनो बल्योवृष्यपित्तापहारकः॥५१॥ जीवशाक॥ मालवेप्रसिद्धा॥ गौर सुवर्णस्वर्णसुगंधिकंभूमिजंचवारिजंच॥ ह्रस्वंचगंधशाकंकटु शृंगारंचवर्णशाकांकः॥५२॥ गौरसुवर्णंशिशिरंकफपित्तज्वरा पहं॥ पथ्यंदाहारुचिभ्रांतिरक्तश्रमहरंपरं॥५३॥ गौरसुवर्णिशा क॥ चित्रकूटदेशेप्रसिद्धा॥ वर्षाभूवसुकौपर्णकफमांद्यानिलाप हे॥ शाकेरूक्षनरोगुल्मप्लीहमूलापहारके॥५४॥ घेटुल॥ वसो ॥बेल्लडकिलु॥ राणजिले॥ फंजिकाजीवनीपथ्यातर्कारीचुचुकःश थकु॥ वातामयहरग्राहीदीपनंरुचिदायकं॥ फंजाजिपंचशाका पंजाजिपंचकंभेडाकुंपाजस्लिपुटस्तथा॥ इत्यादिवनपत्राणिशाक मेकप्रयोजितं॥५६॥ दीपनंपाचनंरुच्यंबलवर्णविधायकं॥ त्रिदोष शमनंपथ्यंग्राहिवृष्यंसुखावहं॥ आंभोरे॥ बेरकेयपल्लेय॥ इतिपत्र शाकः॥ अथफलशाकाः॥ कर्कोटकाचकूष्मांडीकंभाडीतुबृहत्फ ला॥ सुफलास्यात्कुंभफलानागपुष्पफलामुनिः॥५७॥ मूत्राघातह रंप्रमेहशमनंकृछ्राश्मरीछेदनंविण्मूत्रग्लपनंतृषार्त्तिशमनंजी र्णांगपुष्टिप्रदं॥ वृष्यंस्वादुतरंत्वरोचकहरंबल्यंचपित्तापहंकूष्मांडं प्रवरंवदंतिभिषजोवल्लीफलानांपुनः॥५८॥ कोहले॥ कर्डउबल कायि॥ गोरसतुंबिगोरसीनवालांबुघटाभिधा॥ कुंभालाबुर्घटा लांबुःकुंभतुंबीचसप्तधा॥६०॥ कुंभकुंबीसुमधुराशिशिरापित्तहा रिणी॥ गुरुसंतर्पणीरुच्यावीर्यपुष्टिबलप्रदा॥६१॥ गोरखतुंबी॥ गोरखदुद्दिके॥ दुग्धतुंबी॥ क्षीरतुंबीदुग्धतुंबीदीर्घवृत्तफलाभिधा ॥इक्ष्वाकुःक्षत्रियवरादीर्घबीजामहाफला॥६२॥ क्षीरिणीदुग्धबी जाचदंतबीजापयस्विनी॥ महावल्लीज्वलांबुश्चश्रमघ्नीग्रामभूमि ला॥६३॥ तुंबीसुमधुरास्निग्धापित्तघ्नीगर्भपोषकृत्॥ वृष्यावातप्र दाचैवबलपुष्टिविवर्द्धनी॥६४॥ हालुगुंबलु॥ भूतुंबीनागतुंबीच शक्राचापसमुद्भवा॥ वल्मीकसंभवादेवीदिव्यतुंबीषडाह्वया॥६५॥

भूतुंबीकटुकोष्णाचसन्निपातापहारिणी॥दंतार्गलंदंतरोधंधनु
र्वातादिदोषनुत्॥६६॥भूतुंबि॥नेलसारे॥मांसलफलःकलिंग
श्चित्रफलश्चित्रवल्लिकश्चित्रः॥मधुरफलोवृत्तफलोघृणाफलो
मांसलोनवधा॥६७॥कलिंगोमधुरःशीतपित्तदाहश्रमापहः
॥वृष्यःसंतर्पणोबल्योवीर्यपुष्टिविवर्द्धनः॥६८॥कलिंग॥कौं
डें॥कोशातकीस्वादुफलासुपुष्पाकर्कोटकीस्याद्पिपीतपुष्पा
॥धाराफलादीर्घफलासुकोशाधामार्गवस्थानवसंज्ञकोयं॥६९॥
धाराकोशातकीस्निग्धामधुराकफपित्तनुत्॥ईषद्वातकरीपथ्या
रुचिकृद्बलवीर्यदा॥७०॥दोडका॥धारवीरे॥तरोई॥हस्तिकोशा
तकीत्वन्याबृहत्कोशातकीतथा॥महाकोशातकीवृत्ताग्राम्यकोशा
तकीशरा॥७१॥हस्तिकोशातकीस्निग्धामधुराध्मानवातकृत्॥
वृष्याक्रिमिकरीचैवव्रणसंरोपणीचसा॥७२॥पारिसदोडका॥अ
रह्शीरे॥ज्ञेयास्वादुपटोलीचपटोलीमंडलीचसा॥पटोलीमधुरादि
स्यात्प्रोक्तादीर्घपटोलिका॥७३॥शिघ्रिपर्णीस्वादुपूर्वैःपर्यायैश्च
पटोलिका॥पटोलीस्वादुपित्तघ्नीरुचिकृज्ज्वरनाशनी॥बलपुष्टि
करीपथ्याज्ञेयादीपनपाचनी॥७४॥स्वादुपटोल॥सिंहपडवल॥
पटोलपत्रंपित्तघ्नंनालंतस्यकफापहं॥फलंत्रिदोषशमनंमूलंचा
स्यविरेचनं॥७५॥पटोलश्चतुरंगगुणः॥दधिपुष्पीखट्वांगीखट्वा
पर्यंकपादिकाकूपा॥खट्वापादीवंध्याकाकांकोलपालिकान
वधा॥७६॥दधिपुष्पीकटुमधुराशिशिरासंतापपित्तदोषघ्नी
॥वातामयदोषकरीगुरुस्तथारोचकघ्नीच॥७७॥कुहिरी॥कू
गरि॥अशिशिंबीखड्गशिंबीशिंबिनीनिशशिंबिका॥स्थूलशिं
बीमहाशिंबीबृहच्छिंबिस्तुशिंबिका॥७९॥अशिशिंबीतुमधुरा
कषायाश्लेष्मपित्तजित्॥व्रणदोषापहंत्रीचशीतलारुचिदीप
नी॥८०॥खंडसंबा॥सेबे॥करकाकरवल्लीचचीरीपत्रःकरिल्ल
का॥सूक्ष्मवल्लीकंटफलापीतपुष्पांबुवल्लिका॥८१॥कारवल्ली
सुतिक्तोष्णादीपनीकफवातजित्॥अरोचकहराचैवरक्तदोष
करीचसा॥८२॥कारवल्ली॥हागल॥कर्कोटकीस्वादुफलामनो

स्राचमनस्विनी॥बोधनावंध्यकर्कोटीदेवीकंडफलापिच॥८३॥
कर्कोटकीकटूष्णाचतिक्ताविषविनाशनी॥वातघ्नीपित्तहृच्चैव
दीपनीरुचिकारिणी॥८४॥कांदोली॥मडुवागाल॥अथभवति
मधुरबिंबीमधुबिंबीस्वादुतुंडिकातुंडी॥रक्तफलारुचिरफला
सोष्णफलापीलुपर्णीच॥बिंबीतुमधुराशीतापित्तश्वासकफाप
हा॥अस्रज्वरहरारस्याकासजिद्धृहबिंबिका॥८६॥तोंडुली॥सी
हिरोडे॥निष्पावीग्रामजादिश्याफलिनीनखपूर्विका॥मंडपी
फलिकाशिंबीज्ञेयागुच्छफलाचसा॥८७॥विशालफलिकाचै
वनिष्पाविदिषिवातथा॥अन्यांगुलिफलाचैवनखनिष्पाविका
स्मृता॥८८॥रुडूवर्ण॥तदूवरे॥वृत्तनिष्पाविकाग्राम्यानखगु
च्छफलाशरा॥निष्पावौद्वौहरिच्छुभ्रौकषायौमधुरौरसौ॥८९॥
कंठशुद्धिकरौमेध्यौदीपन्यौरुचिकारकौ॥संग्राहिसमवीर्यस्या
द्दोषघ्नंछद्वितीयकं॥९०॥द्वेवणीचावीर्यपाकं॥एरडुअवरेयगु
ण॥वार्त्ताकीकंठवृंताकीकंटालुःकंटपत्रिका॥निद्रालुर्मांसलफ
लावृंताकीचमहोटिका॥९१॥चित्रफलाकंटकिनीमहतीकट्फ
लाचसा॥मिश्रवर्णफलानीलाफलारक्तफलातथा॥शाकश्रेष्ठावृ
त्तफलानृपप्रियफलस्मृतिः॥९२॥वार्त्ताकीकटुकारुच्यामधुरा
पित्तनाशनी॥बलपुष्टिकरीहृद्यागुरुवातेषुनिंदिता॥९३॥वांगे
॥बदने॥डंगरिडींगरिश्चैवदीर्घवारुश्चडंगरी॥डंगारीनागश्मु
डीच्चगजदंतफलामुनिः॥९४॥डंगरीशीतलारुच्यावातपित्तास्र
दोषजित्॥शोषहृत्तर्पणीगौल्याजाड्यहामूत्ररोधनुत्॥डांगर॥
डंगर॥बालडांगरिकंफलंसुमधुरंशीतंचपित्तापहंतृष्णादाहनि
बर्हणंचरुचिकृत्संतर्पणंपुष्टिदं॥वीर्योन्मेषकरंबलप्रदमिदंभ्रां
तिश्रमध्वंसनंपक्वंचेत्कुरुतेतदेवमधुरंतृड्दाहरक्तंगुरु॥९६॥बा
लपक्वडंगरगुण॥अथषड्भुजामधुफलाषड्रेखावृत्तकर्कटीतिक्ता
॥तिक्तफलामधुपाकावृत्तैर्वारुश्चषण्मुखानवधा॥९७॥तिक्तंबा
ल्येतदनुमधुरंकिंचिदम्लंचपाकेनिष्पक्वंचेत्तदमृतसमंतर्पणेपुष्टि
दापि॥तृष्णास्रश्रमविशमनंमूत्रवृद्धिंचधत्तेपित्तोन्मादापहरकफ

दं षाडुजंवीर्यकारि॥९८॥षड्डुजकाकडी॥षड्डुजसैंाते॥मालवेप्र
सिद्धा॥अथकर्कटी॥कटुदलाछर्दापनिकाचपीनसामूत्रफला॥
त्रपुसीचहस्तिपर्णीलोमशकांडाचमूत्रला॥बहुकंद॥९९॥कर्कटी
मधुराशीतात्वतिक्ताकफपित्तजित्॥रक्तदोषकरापक्वेमूत्ररोधा
र्तिनाशनी॥१००॥किंच॥मूत्रावरोधशमनंबहुमूत्रकारिकृच्छ्राश्म
रीप्रशमनंविनिहंतिपित्तं॥वांतिघ्नमश्रमबहुदाहनिवारिरुच्यं
श्लेष्मापहंलघुचकर्कटिकाफलंस्यात्॥१॥काकडि॥मूलसैंाते॥
त्रपुसीपीनपुष्पीचकंटालुस्त्रपुसकर्कटी॥बहुफलाकोशफला
सातुंदिलफलामुनिः॥२॥स्यात्त्रपुसीफलंरुच्यंमधुरंशिशिरंगु
रुः॥भ्रमपित्तविदाहार्तिवांतिहृद्बहुमूत्रदं॥तौसीकर्कटी॥त
सैंयकायि॥कोंकणेप्रसिद्धा॥एर्वारुःकर्कटीप्रोक्ताव्यालप
त्रीचलोमशा॥स्थूलतोयफलाचैवहस्तिदंतफलामुनिः॥
॥एर्वारुकंपित्तहरंसुशीतलंमूत्रामयघ्नंमधुरंरुचिप्रदं॥सं
तापमूर्छापहरंचतृप्तिदंवातप्रकोपायघनंतुसेवितं॥५॥मा
लाचेंवालुक॥एडसेने॥अथवालुकीबहुफलास्निग्धफ
लाक्षेत्रकर्कटीक्षेत्ररुहामधुरफलाशारदिकाक्षुद्रेर्वारुश्च
पीनपुष्पकः॥६॥वालुकीमधुराशीताध्मानहृद्याश्रमापहा
॥पित्तप्रशमनीरुच्याकुरुतेकासपीनसौ॥७॥वालुकी॥के
यसैंाते॥स्याच्चिभिरासुचित्राचित्रफलाक्षेत्रचिर्भिटापांडुफ
ला॥पथ्यावरोचनफलाचिर्भिटिकाकर्कचिर्भिटाग्रहसंख्या
॥८॥बाल्येतिक्ताचिर्भिटाकिंचिदम्लागौल्योपेतादीपनीसा
चपाके॥शुष्कारूक्षाश्लेष्मवातारुचिघ्नीजाड्यघ्नीसारोच
नीदीपनीच॥बेलसेंधा॥अरमेक्के॥मृगाक्षीशतपुष्पाचमृगे
र्वारुमृगादनी॥चित्रवल्लीबहुफलाकपिलाक्षीमृगेक्षणा १०
चित्रचित्रफलापथ्याविचित्रमृगचिर्भिटा॥मरुजाकुंभसीदेवी
कक्कुलालघुचिर्भिटा॥सेंदिनीचमहादेवीज्ञेयाचैकोनविंशतिः
॥११॥मृगाक्षीकटुकातिक्तापाकेम्लावातनाशनी॥पित्तकृत्सी
नसहरादीपनीरुचिकृत्परा॥१२॥सेंदिनी॥बालकमेक्के॥बा

लुकानिचसर्वाणिदुर्जराणिगुरूणिच॥मंदानलंप्रकुर्वंतिवात
रक्तहराणिच॥१४॥स्याद्वालुकीशरदिविषजदोषकर्त्रीहेमं
तजातुखलुपित्तहराचरुच्या॥क्षिप्रंकरोतिखलुपीनसमर्थप
क्वा पक्वात्वतीवमधुराकफकारिणीच॥१५॥चीणाकर्कटि
कारुच्याबीजकर्कटिकातथा॥सुदीर्घाराजिलफलाबाणेः
कुलककर्कटी॥१६॥क्षीणाकर्कटिकारुच्याशिशिरापित्तना
शनी॥मधुरात्तृट्विदाहघ्नादाहशोषापहारिणी॥१७॥पडव
लासारिखंवालु॥पडवडसैंने॥चित्रकूटदेशेप्रसिद्धा॥शशां
दुलीबहुफलानंदुलीक्षेत्रसंभवा॥क्षुद्राम्लालोमशफलाधूम्र
वृंतफलाचसा॥१८॥शशांदुलीतिक्तकटुस्त्रकोमलाकटुम्लयु
क्ताजरठाकफावहा॥पाकेतुसाम्लमधुराविदाहकृत्कफस्त्र
मुष्णारुचिकृच्चदीपनी॥१९॥सासांदुलि॥मिनिके॥कुडुहुं
चीश्रीफलिकाप्रतिपत्रफलाचसा॥सुभवीकारवीचैवप्रोक्ता
बहुफलानथा॥२०॥क्षुद्रकारलिकाप्रोक्ताज्ञेयाकंदलता त
था॥क्षुद्रादिकारवल्लीचसाप्रोक्ताचनवाह्वया॥२१॥कुडुहुंची
कटुरुष्णातिरुचिकारिणीचदीपनदा॥रक्तानिलदोषकरी
पथ्यासाचफलेचोक्ता॥२२॥कारलीकंदमर्शोघ्नंमलरोधविशो
धनं॥योनिनिर्गतदोषघ्नंगर्भस्रावविषापहं॥कुडुहुंची॥का
रसे॥इतिमूलकंदफलपत्रसुंदरक्रमनाम तद्गुणनिरूपणो
ल्वणं॥अवलोक्यवर्गमिममर्थवित्तमगदप्रयुक्तिमवबुध्यतां
बुधः॥२४॥मंदाग्निमरोचिकिनंयेपिशिलामाशयंतिनिजश
क्त्या॥तेषांशाकनामायमाश्रभूःशाकवर्गइतिकथितः॥२५॥
लब्ध्वान्योन्यसहायवैद्यककुलाच्छंकाकलंकापनुदस्नेक्याव
नरोयमित्यविरतंसंतःप्रशंसंतियं॥तस्यश्रीनृहरेःकृतावविशि
तोयेमूलकादिर्महान्वर्गोसावभिधानकोशपरिषच्चूडामणौ
सप्तमः॥इतिवैद्यराजमुकुटमंडलीमाणिक्यमणिमंडनश्री
मदीश्वरपंडितात्मजरजनीरमायपरखंडचूडामणिचरणांबु
जन्मनिर्मलमोदास्वादसमदमधुपितनिरवंजरीकश्रीका

श्रीराघवंशाचार्यपरंपरान्वयप्रधानश्रीनरहरिपंडितविरचि
तेनिघंटुराजापरनाम्न्यभिधानचूडामणौशाकवर्गपरपर्याय
नाममूलादिवर्गःसप्तमः॥अथशाल्मलादिवर्गः॥शाल्मलिस्त
स्यनिर्यासोरोहितेरुकवीरुकः॥पारिभद्रोथखदिराप्यहूरिः
खादिरस्मृतः॥१॥शमीद्वयंचबर्बूरद्वितयादरिमेदकः॥पखों
डेंगुदिकाप्रोक्तानिष्पत्रीचस्नुहीद्विधा॥कंथारिकात्रिधैरंडो
घोटावल्लिकरंजकः॥कारिकामदनस्तीणिबिल्वांतरतरद्वि
का॥३॥श्रीवल्लीकुंजिकाचैवरामकांडस्तथापरः॥चार्याच
नालौद्विशरौमुंजश्चाशोद्विधाकुशः॥४॥बल्बजःकतृणोचा
थनलोदूर्वाचतुर्विधा॥कुंदुरोभूतृणोज्ञेयोऊसलोइक्षुदर्भ
कः॥५॥ गोमूत्रशिल्पिमीश्रेणीगर्मोटीमज्जरास्तथा॥गिरिभू
र्वेशपत्रीचमंथानःपल्लिवाहकः॥६॥पट्टःतृणशुकोज्ञेयःत्रिप
र्ण्यधात्रिगुंडकाः॥कासेरुश्चणिकाप्रोक्तागुडालाशूलिका
तथा॥७॥परिपेलंहिंजुलंचसेवालंचकरंकधा॥शाल्मलि
श्चिरजीवीस्यात्पिच्छिलोरक्तपुष्पकः॥कुकुटीमूलवृक्षश्चमो
चाख्यःकटुकद्रुमः॥८॥रक्तफलोरम्यपुष्पोबहुवीर्यायमद्रुमः
॥दीर्घद्रुमःस्थूलफलोदीर्घायुस्थितिभिर्मतः॥९॥शाल्मलीपि
च्छिलोवृष्योबल्योमधुरशीतलः॥कषायश्चलघुःस्निग्धःशुक्रश्ले
ष्मविवर्द्धनः॥१०॥तद्रसस्तद्गुणोग्राहीकषायःकफनाशनः॥पु
ष्पंतच्चविनिर्दिष्टंफलंतस्यापितद्द्वयं॥११॥सांवरि॥यवलवदम
र॥मोचरसोमोचस्रुत्मोचश्चावश्चमोचनिर्यासः॥पिच्छलसारसु
रसःशाल्मलिवेष्टश्चमोचसारश्च॥१२॥मोचारसस्तुकषायःकफ
वातहरोरसायनोयोगात्॥बलपुष्टिवर्णवीर्यप्रज्ञायुर्देहसिद्धिदो
ग्राही॥१३॥सावरिचाडीकु॥रोहितकोरोहितकश्चरोहितकुशाल्म
लिदाडिमपुष्पसंज्ञकः॥सदाप्रसूनःसचकूटशाल्मलिर्विरोचनः
शल्मलिकोनवाहूयः॥सप्ताहूःश्वेतरोहितःसितपुष्पःसिताहूयः॥
शितांगःशुक्लरोहितोलक्ष्मीवान्जनवल्लभः॥१५॥रोहितकोकटु
स्निग्धौकषायौचसुशीतलौ॥क्रिमिदोषव्रणप्लीहरक्तनेत्रमयाप

हो॥१६॥दोनिरोहिडे॥परड्मलुमुत्तलु॥एकवीरोमहावीरःस
कृद्वीरःसुवीरकः॥एकादिवीर्यपर्यायैर्वीरश्चैनषड्विधाह्वयः॥१७
॥एकवीरोमहत्यष्ठःकटुकस्तोदवातनुत्॥चल्लुकीकदिपुष्टादि
शूलप्रश्वाभिघातनुत्॥एकवीरः॥गंडुबिक्के॥अथभवतिपारि
भद्रोमंदारःपारिजातकोनिंबतरुः॥रक्तकुसुमःक्रिमिघ्नोबहुपु
ष्पोरक्तकेसरोवसवः॥१९॥पारिभद्रःकटूष्णःस्यात्कफवातनि
कृंतनः॥अरोचकहरःपथ्योदीपनश्चानिकीर्तितः॥२०॥पांगरा॥
हरिवाल॥खदिरोबालपत्रश्चखाड्यपत्रीक्षितीक्षमा॥सुशल्यो
वक्रकंठश्चयज्ञांगोदंतधावनः॥२१॥गायत्रीजिह्वशल्यश्चकदी
सारद्रुमस्तथा॥कुष्ठारिबहुसारश्चमेध्यःसप्तदशाह्वयः॥२२॥ख
दिरस्तुरसोतिक्तःशीतःपित्तकफापहः॥पाचनःकुष्ठकासास्रःशो
फकंडूव्रणापहः॥साधारणखदिरः॥खदिरःश्वेतसारोन्यःका
र्मुकःकुब्जकंटकः॥सोमसारोनेमिवृक्षःसोमवल्कःपथिद्रुमः
॥२४॥श्वेतस्तुखदिरस्तिक्तःकषायःकटुरुष्णकः॥कंडूतिर्भू
तकुष्ठघ्नःकफवातव्रणापहः॥२५॥पांडरास्वेरु॥बिलियतन्ति
॥सरक्तोरक्तसारश्चसुसारस्ताम्रकंटकः॥सप्रोक्तोबहुशल्य
श्चयाज्ञिकःकुष्ठतोदनः॥२६॥धूपद्रुमोश्वखदिरोप्यरुश्चदश
धास्मृतः॥कटूष्णोरक्तखदिरःकषायोगुरुतिक्तकः॥आमवा
तास्रवातघ्नोव्रणभूतज्वरापहः॥२७॥रक्तखदिरः॥केंपिनखैर
॥विट्खदिरःकांभोजीकालस्कंधश्चगोरटोमरुजः॥पत्रतरुर्ब
हुसारःसंसारःखादिरोग्रहेर्महासारः॥२८॥विट्खदिरःकटुरु
ष्णस्तिक्तोरक्तव्रणोत्थदोषहरः॥कंडूतिर्विषविसर्पःज्वरकुष्ठो
न्मादभूतघ्नः॥२९॥क्षुद्रखदिरः॥किरुगौर॥आरिसंदातिकाद
लाज्ञेयाखदिरपत्रिका॥आरिक्कषायकटुकातिक्तारक्तार्तिपित्त
नुत्॥३०॥आरि॥सीगुरि॥खादिरस्काद्दिरोभूतनत्सारोरगदः
स्मृतः॥ज्ञेयःखदिरसारश्चतथारंगषडाह्वयः॥कटुकःखदिरः
सारस्तिक्तोष्णःकफवातहृत्॥व्रणकंठामयघ्नश्चरुचिकृद्दीप
नःपरः॥४१॥काथ॥शमीशातातुंगाकनरीपुफलाकेशामयनी

शिवेशानीलक्ष्मीस्तपनतनुजेष्टाशुभकरी॥हविर्गंधामेध्यादुरि
तशमनीशंकुफलिकासुभद्रामंगल्यासुरभिरथशापापशम
नी॥४१॥भद्रवंशंकरोज्ञेयःकेशहंत्रीशिवाफला॥सुपत्रासुखदा
चैवज्ञेयापंचदशाह्वया॥शमीरूक्षाकषायाचरक्तपित्तातिसार
जित्॥तत्फलंतुगुडस्वादुरूक्षोष्णंकेशनाशनं॥शमी॥बनि॥द्वि
तीयातुशमीशांताशुभाभद्रापराजिता॥जयाचविजयाचैवपूर्वो
क्तगुणसंयुता॥सैरी॥कावन्नि॥बर्बुरोयुगलाख्यश्चकंटालुस्ती
क्ष्णकंटकः॥गोशृंगपक्तिबीजश्चदीर्घकंटःकफांतकः॥दृढबीज
श्वासभक्षोज्ञेयश्चेतिदशाह्वयः॥बर्बुरस्तुकषायोष्णःकफकास
मयापहः॥आमरक्तातिसारघ्नःपित्तदाहार्शनाशनः॥बाबुल॥
जालबर्बुरकास्त्वन्याच्छत्राकःस्थूलकंटकः॥सूक्ष्मशाखस्तनु
च्छायोरंध्रकंटःषडाह्वयः॥जालबर्बुरकोरूक्षोवातामयविनाश
कृत्॥पित्तकृच्चकषायोष्णःकफहृद्दाहकारकः॥४२॥पुलई॥जा
लि॥अरिमेदोरिमेदश्चगोधास्कंदोरिमेदकः॥अहिमेदोहिमा
रश्चपूतिमेदोहिमेदकः॥अरिमेदःकषायोष्णस्तिक्तोभूतवि
नाशकः॥शोफातिसारकासघ्नोविषवैसर्पनाशनः॥गांधियाहि
वरु॥करर्वेलु॥परखोडःपंचकृत्पंचवर्द्धनःपंचरसकः॥हस्ती
जनविधोशस्तःकटुजीर्णज्वरापहः॥परखोड॥इंगुदीहिंगुपत्र
श्चविषकंटोनिलांतकः॥गौरस्तूक्तःसुपत्रश्चमूलारिस्तापसद्रु
मः॥तीक्ष्णकंटस्तैलफलःपूतिगंधोविगंधकः॥ज्ञेयःकोष्ठफल
श्चैववह्नींदुगुणिताह्वयः॥४३॥इंगुदीमदनगंधिःस्यात्कटूष्णो
फेनिलोलघुः॥रसायनीहंतुजंतुवातामयकफव्रणान्॥हिंगुल॥
निष्पत्रकोकरीरश्चकरीरग्रंथिलस्तथा॥क्षक्करोगूढपत्रश्चकर
कस्तीक्ष्णकंटकः॥करीरमाध्मानकरंकषायंकटूष्णमेतत्कफ
कारिभूरि॥श्वासानिलारोचकसर्वशूलविदर्तिखर्जूव्रणदोषहा
रि॥नेपती॥निष्पतिगे॥स्नुहीसुधामहावृक्षःक्षीरीनिस्त्रिंशपत्रि
का॥शाखाकंठश्चगुंडारम्यःसेहुंडोवज्रकंटकः॥५०॥बहुशाखो
वज्रवृक्षोवातारीक्षीरकांडकः॥नद्रोण्यागुनखाश्चैवनेत्रारिर्दंड

वृक्षकः॥५१॥समंतदुग्धोगंडीरोज्ञेयःस्नुक्केतिविंशतिः॥स्नुहीरु
क्षाःपित्तदाहकुष्ठवातप्रमेहनुत्॥क्षीरंवातविषाध्मानगुल्मोदर
हरंपरं॥५२॥स्नुहीरन्यस्त्रिधारःस्यात्तिलोधारास्नुहीश्च सः॥पूर्वो
क्तगुणवानेषविशेषाद्रससिद्धिदः॥५३॥त्रिधारा॥निवडिंगु॥कं
थारीकथरीकंथादुर्धर्षातीक्ष्णकंटका॥तीक्ष्णगंधाक्रूरगंधादुःप्र
वेशाष्टकाभिधा॥५४॥कंथारीकटुतिक्तोष्णाकफवातनिकृंतनी॥
शोफघ्नीदीपनीरुच्यारक्तग्रंथिरुजापहा॥५६॥कांथारी॥कांनरु
॥श्वेतेरंडसितेरंडचित्रोगंधर्वहस्तकः॥आमंडस्तरुणःशुक्लोवा
तारिर्दीर्घदंडकः॥५७॥पंचांगुलोवर्द्धमानउक्तोद्वादशसंज्ञकः॥
रक्तैरंडोपरोव्याघ्रोहस्तिकर्णोरुबुस्तथा॥५८॥उरुबूकोनागक
र्णःधुर्वरुत्ताम्रपत्रकः॥करपर्णोयाचनकःस्निग्धोव्याघ्रनलस्त
था॥तत्करश्चित्रबीजश्चह्रस्वैरंडस्त्रिपंचधा॥श्वेतैरंडःसकटुक
रसास्तिक्तउष्णःकफार्तिध्वंसदांतज्वरहरमरुत्कासहारीवसा
हः॥रक्तैरंडश्चयत्रुपचनःशांतिरक्तार्तिपांडुभ्रांतिश्वासज्वरकफहरो
रोचकघ्नोलघुश्च॥५९॥दोनिएरंड॥स्वडुअंडलके॥स्थूलैरंडोमहैरंडो
महापंचांगुलादिकः॥स्थूलैरंडोगुणाढ्यःस्याद्रसवीर्यविपक्तिषु
॥थोरएरंडु॥घोंटावदरिकाघोटीगोलिकाशत्रुकंटकः॥कर्कंटः।
चतुरंगीचतुरगाह्वाष्टधास्मृता॥घोटिकाकटुकोष्णाचमधुरावात
नाशनी॥व्रणकंडूतिकुष्ठाचदोषश्चयथुहारिणी॥घोंटी॥गोइंथि
॥लताकरंजोदुःस्पर्शोवीरास्योवज्रबीजकः॥धनदाक्षःकंटफलः
कुबेराक्षश्चसप्तधा॥लताकरंजपत्रंतुकटूष्णंकफवातनुत्॥तद्वी
जंदीपनंपथ्यंशूलगुल्मव्यथापहं॥६४॥सागरगोटा॥गडुगु॥का
रीतुकरिकाकार्यागिरिजाकटुपत्रिका॥तन्वैकाकंटकारीस्यादन्या
स्वाकर्षकारिका॥कारीकषायमधुराद्विविधापित्तनाशनी॥दीपनी
ग्राहणीरुच्याकंठशोधकरीगुरुः॥करी॥कारे॥मदनःशल्यकेड
यैःपिंडीधाराफलस्तथा॥तरारकरहारश्चराटःपिंडीतकःस्मृतः॥
॥६६॥कंटालोविषमुष्टिश्चकर्दनोविषपुष्पकः॥घंटालोमयणो
हर्षोघोंटस्योवनिरोधनः॥ग्रंथिफलोगोलफलोमदनाह्वश्चविंश

तिः॥मदनः कटुतिक्तोष्णः कफवातव्रणापहः॥शोफदोषापहश्चै
ववमनेच प्रशस्यते॥६७॥मेणाहल॥गेल॥बोनगरे॥रणय॥वा
राहोन्यः कृष्णवर्णोमहापिंडीतकोमहान्॥स्निग्धपिंडीतकश्चा
न्यः स्थूलवृत्तफलंतथा॥अथमन्योदनौश्रेष्ठौकटुतिक्तरसान्वि
तौ॥छर्दनौकफहृद्रोगपक्वामाशयशोधनौ॥थोरमेणाहण
दोनि॥दोड्डबोनरगरे एरडु॥बिल्वांतरोवीरवृक्षः सुधाकुस
लसंज्ञकः॥दीर्घमूलोवीरवृक्षः रुक्तारिश्चषडाह्वयः॥बिल्वां
तरः कटूष्णश्चकफघ्नः संधिशूलनुत्॥वह्निदीप्तिकरः पथ्यो
वातामयविनाशनः॥बेंतरु॥७०॥डउ॥तरटीनारटीतीव्राख
र्जुरारक्तबीजका॥तरटीतिक्तमधुरागुरुर्बल्याकफापहा॥त
रडि॥रेउंडे॥श्रीवल्लीशिववल्लीचकंटवल्लीचसप्तधा॥अम्ला
कटुफलाश्चस्यादुरारोहाचसाष्टधा॥७९॥श्रीवल्लीकटुकाम्ला
चवातशोफकफापहा॥तत्फलंतैललेपघ्नंअत्यम्लंरुचिकृत्प
रं॥श्रीवल्ली॥सीगेयवल्लि॥अन्यानिकुंजिकाम्लास्यात्कुंजिका
कुंजवल्लरी॥निकुंजिकाबुधैरुक्ताश्रीवल्लीसदृशीगुणे॥८१॥
निकुंजिके॥निरोयवल्लि॥इतिकंटकवृक्षाः॥अपर्वदंडोदीर्घश्च
रामबाणोनृपप्रियः॥रामकांडोरामशरोरामस्येषुश्चसप्तधा॥रा
मकांडजमूलंस्याद्दोषदुष्णंरुचिप्रदं॥रसेचाम्लकषायश्चपि
त्तकृत्कफवातहृत्॥रामसपु॥सरगोलु॥मालवेप्रसिद्धा॥याव
नाप्योजमद्विजेहृढत्वग्वारिसंभवः॥यावनालनिभश्चैवखरप
त्रः षडाह्वयः॥८४॥यावनालशरन्मूलमीषन्मधुररुच्यकं॥शी
तेपित्ततृषापघ्नंपशूनामबलप्रदं॥जोन्हीली॥गलग्गु॥शरोबा
णइषुः कांडउत्कटःश्चापकर्बुरः॥इक्षुरक्षुरिकापत्रोविशिख
श्चदशाभिधः॥८५॥स्थूलान्यश्चस्थूलशरोमहास्थूलःसयावकः
सुखास्य्यः॥इक्षुरकः क्षुरपत्रोबहुमूलोदीर्घमूलकोमुनिभिः॥
॥८६॥शरद्वयंस्यान्मधुरंसतिक्तंकोष्णंकफभ्रांतिमदापहारि॥ब
लंचवीर्यंचकरोतिनित्यंनिषेवितंवातकरश्चकिंचित्॥शरन॥अं
बलिनगणे॥मालवेप्रसिद्धा॥मुञ्जोमौंजीतृणाख्यःस्याद्ब्रह्मण्य

स्त्रोजनाह्वयः॥वानीरजोमुंजनकःशरीदर्भाह्वयश्चसः॥दूरमू
लोदृढतृणोदृढमूलोबहुप्रजः॥रंजनःशन्तुतगश्चस्याच्चतुर्देश
संज्ञकः॥९॥मुंजस्तुमधुरःशीतःकफपित्तजदोषजित्॥ग्रहरक्षा
सुदीप्तासुपावनोभूतनाशनः॥१०॥मुंजतृणः॥भाषाह्वयं॥भागी
रथीतीरेप्रसिद्ध॥कासःकांडेक्षुरिर्ज्वारिःकाकेक्षुर्वायसेक्षुकः॥
इक्षुरश्चेक्षुकांडश्चशारदःसितपुष्पकः॥११॥नादेयोदर्भपत्रश्च
लेखनीकांडकांडकः॥कंठालंकारकश्चैवज्ञेयःपंचदशाह्वयः॥
॥१२॥काशश्चशिशिरोगौल्योरुच्यःकृत्पित्तदाहनुत्॥दर्पणोब
लकृद्वृष्यआमशोषक्षयापहः॥१३॥काउंसु॥काजलु॥अन्योशी
रोमिशिर्गुंडाभश्चालोनीरजःशरः॥निशिर्मधुरशीतःस्यात्पित्त
दाहक्षयापहः॥१४॥लाहानकाउंसु॥किरियकागकु॥सितद
र्भोह्रस्वकुंभोपूतोयज्ञियपत्रकः॥वज्रोब्रह्मपवित्रश्चतीक्ष्णोय
ज्ञस्यभूषणः॥१५॥सूचीमुखःपुण्यतृणोवह्निपूततृणोद्विषः॥
इक्षुमूलंहिमंरुच्यंमधुरंपित्तनाशनं॥१६॥रक्तज्वरतृषाश्वा
सकामलादोषशोषकृत्॥१७॥पांढरीकुशी॥बिलियबुहकुशि॥
कुशोन्यःशरपत्रश्चहरिदर्भःपृथुच्छदः॥खारीचरूक्षदर्भश्चदी
र्घपत्रःपवित्रकः॥१८॥दर्भौद्वौचगुणेतुल्यौतथापिचसितोधि
कः॥यदिश्वेतकुशाभावेत्वपरंयोजयेत्भिषक्॥कुचदर्भु॥उहू
कुशि॥बल्वजादृढपत्रीचतृणाक्ष्यस्तृणबल्वजः॥मौंजीपत्रादृ
ढतृणापानीयाश्रीदृढक्षुरा॥२०॥बल्वजामधुराशीतापित्तदाह
तृषापहा॥वातप्रकोपनीरुच्याकंठशुद्धिकरीपरा॥मोलु॥मो
दे॥कुतृणंकुत्तृणंभूतिभूतिकंरोहिषंतृणं॥श्यामकंधामकंपूति
सुद्रलंदवरंधकं॥कुतृणंदशनामाख्यंकटुतिक्तकफापहं॥श
स्त्रशल्यादिदोषघ्नंबालग्रहविनाशनं॥लाहानुरोहिसु॥किरु
गंजणि॥अन्यद्रोहिषकंदीर्घंदृढकांडोदृढच्छदं॥रागिष्ठंदीर्घना
लश्चतिक्तसारश्चकुत्सितं॥दीर्घरोहिषकंतिक्तंकटूष्णंकफवा
तजित्॥भूतग्रहविषघ्नश्चव्रणक्षतविरोपणं॥वाहुरोहिसु॥हि
रियगंजिणि॥नलोनाडोनलश्चैवकसिरंध्रोयकीचकः॥वंशांत

रश्चधमनः शून्यमध्यो विभीषणः॥ छिद्रांतो मृदुपत्रश्च रंध्रपत्रो मृदुच्छदः॥ नालवंशः पोगलः स्यात् इत्येषाह्लिपंचधा॥ नलः शीतकषायश्च मधुरो रुचिकारकः॥ रक्तपित्तप्रशमनो दीपनो वीर्यवृद्धिदः॥ देवनलु॥ देवनाल॥ अन्यो महानलो वन्यो देवनालो नलोत्तमः॥ स्थूलनालः स्थूलदंडः सुरनालः सुरद्रुमः॥ देवनालोतिमधुरो वृष्यईषत्कषायकः॥ नलः स्यादधिके वीर्ये शस्यते रसकर्मणि॥ थोरुदेवनलु॥ हिरियदेवनाल॥ स्यान्नीलदूर्वा हरितं च शताभवी श्यामा च शंताशतपर्विकामृता॥ पूताशत ग्रंथिरनुष्णवल्लिका शिवाशिवेष्टापि च मंगला जया॥ सुभगाभूतहंत्री च शतमूला महौषधी॥ अमृता विजया गौरि शांता स्यादेकविंशतिः॥ नीलदूर्वा तु मधुरा तिक्ता शिशिररोचनी॥ रक्तपित्तातिसारघ्नी कफवातज्वरापहा॥ नीली हरियाली॥ हसुगरुके॥ स्याद्गोलोमी श्वेतदूर्वा सिताख्या चंडा भद्रा भार्गवी दुर्वरा च॥ गौरी विघ्नेशानकांताप्यनंता ह्येतानादिम्नाश्वेतकांडप्रचंडा॥ सहस्रवीर्या च सहस्रकांडा सहस्रपर्वा सुरवल्लभा च॥ सुता सुपर्वा च सितच्छदा च स्वच्छा च कच्छांतरुहाब्धिहस्तो॥ श्वेतदूर्वाति शिशिरा मधुरा वांतिपित्तजित्॥ आमातीसारकासघ्नी रुच्या दाहतृषापहा॥ पांढरीहरियाली॥ बिलियकरुके॥ माला दूर्वा वल्लिदूर्वा माला ग्रंथिला ग्रंथिदूर्वा॥ मूलाग्रंथिर्वेल्लनी ग्रंथिमूला रोहत्पूर्वा पर्ववेल्लिकाख्या॥ ३७॥ वल्लिदूर्वा सुमधुरा तिक्ता च शिशिरा च सा॥ पित्तदोषप्रशमनी कफवांतितृषापहा॥ ३८॥ वेलिहरियाल्ली॥ वल्लिगरुके॥ गंडाली स्याद्गंडदूर्वा तिनीव्रा मत्स्याक्षी स्याद्वारुणी मीननेत्रा॥ श्यामग्रंथिर्ग्रंथिलग्रंथिपर्णी सूचीपत्रा श्यामकांडा जलस्था॥ शकुलाक्षी कलाख्या च विज्ञा पंचदशाह्वया॥ गंडदूर्वा तु मधुरा वातपित्तज्वरापहा॥ शिशिरा द्वंद्वदोषघ्नी भ्रमतृष्णाश्रमापहा॥ गांढीहरियाली॥ मीनगत्ते॥ दूर्वाः कषाया मधुराश्च शीताः पित्ततृषारोचकवांतिहंत्र्यः॥ सदाहमूर्छाग्रहभूतशांतिश्लेष्मश्रमध्वंसनतृप्तिदाश्च॥ साधारणदूर्वागुण॥ कुंदुरुष्कंदुरोरुंडी दीर्घपत्रः खरच्छदः॥ रसाभः क्षेत्रसंभूतः सुतृष्णो मृगवल्लभः॥ गौल्यकंदरमूलं च शीतं पित्ता

त्तिसारत्तृन्॥प्रशस्तंगोधनानांचबलपुष्टिविवर्द्धनं॥कुंदुरु॥कणि
गे॥भूतृणोरोहिणोभूतिभूतिकोथकुटुंबकः॥मालातृणःसमालं
चक्रुत्रोतिछत्रकस्तथा॥गुह्यबीजःसुगंधश्चगुलालःपूत्तविग्र
हः॥बधिरश्चानिगंधश्चभृंगरोहःपारेंडुकः॥भूतृणंकटुतिक्तंच
वातसंतापनाशनं॥हंतिभूतग्रहावेशान्विषदोषांश्चदारुणान्
॥सुगंधिरोहिसु॥परिमलदगंजणि॥अंध्रदेशेप्रसिद्धा॥सुगंध
भूस्तृणधान्यःसुरसःसुरभिस्तथा॥गंधतृणसुगंधश्चमुखवासः
षडाह्वयः॥गंधतृणंसुगंधिःस्याद्दीपतिक्तंरसायनं॥स्निग्धंमधु
रशीतंचकफपित्तश्रमापहं॥सुगंधितृण॥भाषाह्वयं॥ऊषलो
भूरिपत्रश्चसुतृणश्चतृणोत्तमः॥ऊखलोबलदोरुच्यःपशूनांस
र्वदाहितः॥घोडसरु॥हेघोरसु॥इक्षुदर्भासुदर्भाचपत्रालुस्तृ
णपत्रिका॥इक्षुदर्भासुमधुरास्निग्धाईषत्कषायका॥कफपित्त
हरारुच्यालघुःसंतर्पणीस्मृता॥आम्बालु॥कागवित्तभेद॥गोमू
त्रिकारक्ततृणाक्षेत्रजाकृष्णभूमिजा॥गोमूत्रिकातुमधुरावृष्या
गोदुग्धदायिनी॥तांबडु॥गोढवि॥शिल्पिकाशिल्पिनीशीना
क्षेत्रजाचमृदुच्छदा॥शिल्पिकामधुराशीनानद्वीजंबलवृष्यदं॥
लाहनसिंपि॥किरियसिंपिगे॥निश्रेणिकाश्रेणिकानीरसोना
वनवल्लरी॥निश्रेणिकानीरसोष्णापशूनामबलप्रदा॥निरोषि
॥कोंकणेप्रसिद्धा॥गर्मोटिकासुनीलाचजरडीचजलाश्रया॥
जरडीमधुराशीतासारणीदाहहारिणी॥रक्तदोषहरारुच्या
पशूनांदुग्धदायिनी॥जरडि॥हक्कुलेयहुल्ल॥मज्जरःपवनः
प्रोक्तःसुतृणःस्निग्धपत्रकः॥मृदुग्रंथिश्चमधुरोधेनुदुग्धकर
श्वसः॥पवना॥नले॥तृणारव्यंचपर्वतृणंपत्राढ्यंचमृगप्रियं॥
बलिपुष्टिकरंरुच्यंपशूनांसर्वदाहितं॥संडे॥सेड॥वंशपत्री
वंशदलाजीरिकाजीर्णपत्रिका॥वंशपत्रीसुमधुराशिशिरापि
त्तनाशनी॥रक्तदोषहरारुच्यापशूनांदुग्धदायिनी॥रणुपत्रि॥
बिदिरयेले॥यथाहुल्लु॥मंथानकस्तुहरितोदृढमूलस्तृणाधिपः
॥स्निग्धोधेनुप्रियोदोग्धामधुरोबहुवीर्यकः॥मारवेलु॥मारव

ल्लि॥पल्लिवाहोदीर्घतृणः सुपत्रस्तांम्रवर्णकः॥अदृढः शाकप
त्रादिपशूनामबलप्रदः॥पोकलि॥होते॥लवणतृणंलोणतृणं
तृणाम्लपटुतृणंचमम्लकांडंच॥पटुतृणकंक्षाराम्लंकषाय
मस्तन्यश्चवृद्धिकरं॥लोणा॥लुणुबुल्लु॥पर्ण्यधः कंगुणीपत्रः प
र्ण्य ध्वापणधाचसा॥पर्ण्यधासमवीर्यास्यात्तिक्ताक्षाराचसारि
णी॥तत्कालशस्त्रघातस्यव्रणसंरोपणीपरा॥दीर्घासंध्यातथा
ह्रस्वापर्ण्यधात्रिविधास्मृता॥६५॥रसवीर्यविपाकेचमध्यमा
गुणदायिका॥पणधेनीणी॥हणजेमूरु॥गुडः सुकांडगुंडः स्या
द्दीर्घकांडस्त्रिकोणकः॥छत्रगुच्छोसिपत्रश्चनीलपत्रस्त्रिधार
कः॥६७॥वृत्तगुंडोपरोवृत्तोदीर्घनालोजलाश्रयः॥तत्रस्थूलोल
घुश्चान्यस्त्रिधायंद्वादशाभिधः॥गुंडास्तुमधुराः शीताः कफपि
त्तातिसारहा॥दाहरक्तहरास्तस्यमध्येस्थूलांतराधिकाः॥बल
हानीनि॥मूरुगेरु॥गुंडकंदः कसेरुःस्यात्सुद्रमुस्ताकसेरुका
॥सुकरेष्टः सुगंधिश्चसुगंधोगंधकंदलः॥कसेरुकः कषायोल्प
मधुरोतिरवरस्तथा॥रक्तपित्तप्रशमनः शीतोदाहश्रमापहः॥क
सेरुवा॥सेकिनगडे॥वणिकादुग्धदागोस्यात्सुनालाक्षेत्रजाहि
मा॥वृष्याबल्यातिमधुराबीजैः पशुहितातृणैः॥चणई॥चणगि
यहुलु॥गुंडासिनीतुगुंडालागुंडालागुंद्रमूलकाचिपिटा॥तृण
पत्रीजलवासाष्ठुलासुविष्टराचनवाह्वा॥७५॥गुंडासिनिक
दुःस्वादेपित्तदाहश्रमापहा॥तिक्तोष्णाचपशुघ्नीचव्रणदोष
निबर्हणी॥आंपु॥मूलीनमूलपत्रीस्यादशाखाधूमधूलिका॥
जलाश्रयामृदुलतापिबिलामहिषीप्रिया॥मूलीतुपिच्छिलाको
ष्णागुरुर्गोल्याबलप्रदा॥पित्तदाहहरारुच्यादुग्धवृद्धिप्रदायि
का॥मूली॥सोगले॥पेरिपेल्लंप्लवंधान्यंगोपुटंस्यात्पुटंनटं॥
सीनपुष्पंदासपुरंगोनर्दंजीर्णबुध्नकं॥पेरिपेल्लंकटूष्णंचकफ
मारुतनाशनं॥व्रणदाहामशूलघ्नंरक्तदोषहरंपरं॥जलमंडबि
॥बलिगडउ॥हिज्जलोघनदीकांतोजलजोदीर्घपत्रकः॥नदी
जोनिचुलोरक्तः कार्मुकः कथिनश्चसः॥हिज्जलः कटुरुष्णाश्चप

वित्रोभूतनाशनः॥वातामयहरोनानाग्रहसंचारदोषजित्॥प
र्पलु॥तोरेगणगिले॥सेवालंजलनीलीस्यात्शैवलंजलजंच त
त्॥सेवालंशीतलंस्निग्धंसंतापव्रणनाशनं॥सेवाल॥हांवसे॥
इत्थंनानाकंटकिविटपिप्रस्तावव्याख्यातैरंडादिकतृणविस्तार
रूपं॥वर्गंविद्वान्वैद्यकथितप्रावीण्यंज्ञेयापण्यारण्यकगुणसी
याद्वैद्यः॥८४॥दुर्वारांविकृतिंच—सेवनविदांभिदंतियेभूयसा
दुर्वाहाश्चहठेनकंटकितयासूक्ष्माश्चयेकेचन॥तेषामेषमहा
गमांतरभुवामारण्यकानांकिलक्रूरातंकभयार्त्तनिर्दलितकरो
वर्गः सतांसंमतः॥८५॥द्विजानांयोराजाजयतिरचयन्नोष
धिगणंघ्नतापंनृणांअमृतकरतांधारयतिच॥अमुष्यायंव
र्गोनृहरिकृतिनःकांक्षतिकृतौस्थितिःशाल्मल्यादिर्वसुभिरभि
धाशेखरमणौ॥८६॥इतिवैद्यराजराजमुकुटमंडलीमाणिक्य
मणिमंडनायितश्रीमदीश्वरपंडितात्मजश्रीमदुमारमणचरण
नलिनाराधनराजहंसश्रीकाश्मीराद्यवंशाचार्यपरंपरान्वयल
ब्धाधिकारश्रीनरसिंहपंडितविरचितेनिघंटुराजापरनामधेय
वत्यभिधानचूडामणावरण्यवर्गोपनामशाल्मल्यादिरष्टमोव
र्गः॥अथप्रभद्रादिवर्गः॥प्रभद्रःपंचधाप्रोक्तःकाश्मर्योलघुपूर्व
कः॥द्विरग्निमंथःश्योनाकोद्वितीयंचाजशृंगिका॥१॥काश्मर्यश्च
तकश्चाथकर्णिकारद्वयंतथा॥वृश्चिकालीचकुटजःस्नुहीजंचशि
रीषकः॥२॥करंजाःषड्विधाःकोडोनीलःसर्जाश्चकर्णकौ॥तालः
श्रीतालहिंतालमडास्तूलस्तमालकाः॥३॥चतुर्विधःकदंबोथबा
नीरःकुंभवेतसः॥धवश्चधन्वनोभूर्जस्तिनिसश्चततोर्जुनः॥हरि
द्रधाधसारखोटोशाकोथोशिंशुपारुलयः॥आसनत्र्यंचवरुणःपु
त्रश्चजीवपिंडकाः॥कारस्करोथकटभीक्षपकोदेवसर्षपः॥दुद्रु
र्विकंकतश्चैत्तिशरारिगणिकाःक्रमात्॥अथनिगदितःप्रभद्रःपि
चुमंदःपारिभद्रकोनिंबः॥काकफलःकीरेष्टोनोनारिष्टश्चतोभद्रः
॥७॥धमनोविशीर्णपर्णोयवनेष्टश्चिनसारसःसितः॥वरतिक्तोरि
ष्टफलोज्येष्ठमालकश्चहिंगुनिर्यासः॥८॥कर्दितस्यान्निधमनो

ज्ञेयो नाम्नां तु विंशतिः॥ प्रभद्रकः प्रभवति शीत तिक्तकः कफव्रणक्रिमिवमि शोफशांतये॥ बलासभिहृत्तु विषपित्तदोषजित् विशेषतो हृदयविदाहशांतिकृत्॥ निंबु॥ बेउ॥ महानिंबो मदो द्रेकः कार्मुकः केशमुष्टिकः॥ का काजेरम्यकः क्षीरो महातिक्तो हिमद्रुमः॥ महानिंबस्तु शिशिरः कषायः कटुतिक्तकः॥ अस्त्रदाहबलासघ्नो विषमज्वरनाशनः॥ महानिंबु॥ कैडर्यो न्यो महानिंबो रामणो रमणस्तथा॥ गिरिनिंबो महारिष्टः शुक्रशालो लकाह्वयः॥ कैडर्यः कटुकस्तिक्तः कषायः शीतलो लघुः॥ संतापशोषकुष्ठास्त्रक्रिमिभूतविषापहः॥ फलितमहानिंबु॥ कयाहे बेउ॥ भूनिंबो वार्यतिक्तस्यात् कैरातो रामसेनकः॥ कैरात तिक्तको हैमकांडस्तिक्तः किरातकः॥ भूनिंबो बानलस्तिक्तः कफपित्तज्वरापहः॥ व्रणसंरोपणः पथ्यः कुष्ठकंडूतिशोफजित्॥ भूनिंबु॥ नेलबेउ चु॥ नेपालनिंबो नैपालस्तृणनिंबो ज्वरांतकः॥ नाडीतिक्तोर्धतिक्तस्यरिं द्रारिः सन्निपातरिपुः॥ नेपालनिंबो शीतोष्णो योगवाही लघुस्तथा॥ तिक्तोतिकफपित्तास्र शोफतृष्णाज्वरापहः॥ नेपालनिंबु॥ चिरायिता॥ चिराइते॥ कट्फलः कृष्णगर्भश्च सोमवल्क प्रचेतसी॥ भद्रावती महाकुंभी कैडर्यो रामसेनकः॥ २०॥ कुमुदा उग्रगंधश्च भद्रारंजनकस्तथा॥ कुंभी च लघुकाश्मर्यः श्रीपर्णी च त्रिपंचधा॥ २१॥ कट्फलः कटुरुष्णश्च कासश्वासज्वरापहः॥ उग्रदाहहरो रुच्यो मुखरोगशमप्रदः॥ २२॥ कायफलः॥ किरुसिवनि॥ अग्निमंथो ग्निमथनः तर्कारी वैजयंतिका॥ वह्निमंथो रणीकेतुः श्रीपर्णी कर्णिका जया॥ नादेयी विजयानंता नदी या वत्र योदश॥ तर्कारी कटुरुष्णा च तिक्तानिलकफापहा॥ शोफश्लेष्माग्निमांद्यार्शो विबंधामाश्च नाशनी॥ २४॥ नरुबल॥ क्षुद्राग्निमंथस्तपना विजया गणिकारिका॥ अरणिर्लघुमंथश्च तेजोवृक्षस्तत्त्वचां॥ अग्निमंथद्वयं चैव तुल्यं वीर्यरसादिषु॥ तत्प्रयोगानुसारेण योजयेत्स मनीषया॥ टाकलि॥ तल्लि॥ श्योनाकः शुकनासश्च कट्वंगो यकटंभरः॥ मयूरजंघो पत्लुकः प्रियजः कुटन्नटः॥ स्योनाकः पृथुशिंबो न्ये॥

भल्लकोदीर्घवृंतकः॥पीनवृंतश्चटेंटूकः भूतसारोमुनिद्रुमः॥ निः
सारः फल्गुवृंताकः पूतिपात्रावसंतकः॥कटूकर्षणः पीतांगोजं
बूकः पीतपादकः॥वातारिः पीनकः शोणः कुनटश्चविरोचनः॥
भ्रमरेष्टोबहिर्जंघोनेत्रनेत्रमिताभिधः॥श्योनाकयुगलंतिक्तं
शीतलंचत्रिदोषजित्॥पित्तश्लेष्मातिसारघ्नंसंनिपातज्वरापहं
॥टेंटू॥शोणाशोडिलमर॥टेंटूफलंकटूष्णंचकफवातहरंलघु॥
दीपनंपाचनंहृद्यंरुचिकृल्लवणाम्लकं॥अजशृंगीमेषशृंगीवर्ति
कासर्पदंष्ट्रिका॥चक्षुष्यातिक्तदृग्याचपुत्रश्रेणिविषाणिका॥
अजशृंगीकटुस्तिक्ताकफार्शः शूलशोफजित्॥चक्षुष्याश्वासहृ
द्रोगविषकासार्तिकुष्ठजित्॥अजशृंगीफलंतिक्तंकटूष्णंकफवा
तजित्॥जठरानलकृत्हृद्यंरुचिदंलवणाम्लकं॥मेषसेंग॥उरि
यमर॥स्यात्काश्मर्यः काश्मरीकृष्णवृंताहारीभद्रासर्वतोभद्रि
काच॥श्रीपर्णीस्यात्सीधपर्णीसुभद्राकंभारीसाकट्फलाभद्र
पर्णी॥कुमुदाचगोपभद्राविदारिणीक्षीरिणीमहाभद्रा॥म
धुपर्णीस्वभद्राकृष्णाश्वेताचरोहिणीगृष्टिः॥स्थूलत्वचामधु
मतीसुफलासमेदिनीमहाकुमुदा॥सुदृढत्वचाचकथिताविंश
याविंशतिर्नाम्नाकाश्मरीकटुकातिक्तागुरूष्णाकफशोफनुत्
॥त्रिदोषविषदाहार्तिज्वरतृष्णास्रदोषजित्॥सीवनी॥भाषाह्व
य॥अश्मंतकश्चवाकुश्चकुद्दालाचाम्लपत्रकः॥श्लक्ष्णत्वक्पीलु
पत्रश्चस्यात्तोयमलपत्रकः॥अश्मंतकश्चेंदुशफरीशिलांतश्चां
बुटः स्मृतः॥पाषाणांतकइत्युक्तोवह्निचंद्रमिताह्वयः॥अश्मंतकः
स्यान्मधुरः कषायः सुशीतलः पित्तहरः प्रमेहजित्॥विदाहतृष्णा
विषमज्वरापहोविषार्त्तिविच्छर्दिहरश्चभूतजित्॥आबुटा॥अश्म
र॥अथभवतिकर्णिकारोराजतरुः प्रग्रहश्चकृतमालः॥सुफलश्च
परिव्याधोव्याधिरिपुः पंक्तिबीजकोवसुसंख्यः॥कर्णिकारोरसेति
क्तः कटूष्णः कफशूलहृत्॥उदरक्रिमिमेहघ्नोव्रणगुल्मनिवारणः
लघुबाहवा॥किरुगक्के॥आरग्वधोन्योमंथानोरोचनश्चतुरंगुलः॥
४ ॥रेवतोदीर्घफलोव्याधिघातोनृपद्रुमः॥हेमपुष्पोराजतरुः कं

डूघ्नश्च ज्वरांतकः॥अरुजः स्वर्णपुष्पश्च स्वर्णद्रुः कुष्ठसूदनः॥कर्णी
भरणकः प्रोक्तो महाराजद्रुमस्मृतः॥कर्णिकारो महादिस्यात्प्रोक्त
श्चैकोनविंशतिः॥आरग्वधो निमधुरः शीतः शूलापहारकः॥ज्वर
कंडूकुष्ठमेहकफविष्टंभनाशनः॥बडिलुवाहवा॥हेगके॥वृश्चि
काली विषाणी च विषघ्नी नेत्ररोगहा॥उष्ट्रिकाप्यलिपर्णी च दक्षि
णावर्तकी तथा॥कलिकाप्यागमावर्ता देवलांगुलिका तथा॥क
रभाभूतद्रुग्धा च कर्कशृंगा च मरा च सा॥स्वर्णपूंसायुग्मफला तथा
क्षीरविषाणिका॥प्रोक्ता भासुरपुष्पा च वसुचंद्रसमाहूया॥वृश्चि
काली कटुस्तिक्ता सोष्णा हृद्रूक्ष शुद्धिकृत्॥रक्तपित्तहरा बल्या
विबंधारोचकापहा॥वृश्चकाली॥हलिगिलु॥कुटजः कुटजः को
हीवत्सको गिरिमल्लिका॥कलिंगो मल्लिकापुष्पः प्रावृष्यः शक्रपा
दपः॥१॥वरतिक्तो यवफलः संग्राही पांडुरद्रुमः॥प्रावृषेण्यो महा
गंधः स्यात्पंचदशाभिधः॥कुटजः कटु तिक्तोष्णः कषायश्चातिसार
जित्॥तत्रासितश्च पित्तघ्नस्त्वङ्दोषार्शोनिकृंतनः॥कूडा॥कोडसि
गेयमरत्नु॥इंद्रयवास्तु शक्राह्वा शक्रबीजानि वृत्सकः॥तथा वत्स
कबीजानि भद्रका कुटजाफलं॥ज्ञेया इंद्रवचा चैव बीजांता कुटजा
भिधा तथा कलिंगबीजानि पर्यायैर्दशधाहूया॥३॥इंद्रयवा कटु
स्तिक्ता शीता कफवातरक्तपित्तहरा॥दाहातीसारशमनी नाना
ज्वरदोषशूलमूलघ्नी॥४॥इंद्रजव॥कोडसिगेयबीज॥शीरीषः
शतपुष्पश्च भंडीको मृदुपुष्पकः॥शुकेष्टो बर्हपुष्पश्च विषहंता
सुपुष्पकः॥५॥उद्दानकः शुकतरुर्ज्ञेयो लोमशपुष्पकः॥कपीत
नः फलिंगश्च श्यामलः शंखिनीफलः॥६॥मधुपुष्पस्तथा वृत्तपु
ष्पः सप्तदशाहूयः॥शिरीषः कटुकः शीतो विषवातहरः परः॥पा
माचकुष्ठकंडूनि त्वग्दोषस्य विनाशनः॥७॥सिरसु॥करंजो नक्त
मालश्च पूतीकश्चिरबिल्वकः॥पूतिपर्णो वृद्धफलो रोचनश्च प्र
कीर्यकः॥करंजः कटुरुष्णश्च सुष्णो वातनाशनः॥तस्य स्नेहो ति
स्निग्धश्च वातघ्नः स्थिरदीप्तिदः॥९॥करंज॥अन्यो घृतकरंजः स्या
त्प्रकीर्यो घृतपर्णकः॥स्निग्धपत्रस्तपस्वी च विषारिश्च विरोचनः

घृतकरंजः कटूष्णो वातहृद्व्रणनाशनः॥ सर्वत्वग्दोषशमनो विषस्पर्शविनाशनः॥११॥ करंजभेदु॥ तपसियमरतु॥ ज्ञेयो महाकरंजोऽन्यः षड्ग्रंथो हस्तिवारिणी॥ उदकीर्णो विषघ्नी च काकघ्नी मदहस्तिनी॥ अंगारवल्ली शार्ङ्गीष्टा मधुसत्त्वा च मायिनी॥ हस्तिरोहणकश्चैव ज्ञेयो हस्तिकरंजकः॥ सुमनः काकभांडी च मदमत्तश्च षोडश॥ महाकरंजस्तीक्ष्णोष्णः कटुको विषनाशनः॥ कंडूविचर्चिकाकुष्ठत्वग्दोषव्रणनाशनः॥ वडिलकरंज॥ हिरियहुलुगिलु॥ प्रकीर्णो रंजनी पुष्पः सुमनाः पूतिकर्णिकः॥ पूतिकरंजः कैडर्यः कलिमालश्च सप्तधा॥ पूतीकरंज॥ वारुव॥ हुलिगिलु॥ अन्यो गुच्छकरंजः स्निग्धदलो गुच्छपुष्पको नंदी॥ गुच्छी च मातनंदीसानंदो दंतधावनो वसवः॥ करंजभेदु॥ हुलिगिलभेदउ॥ करंजो कटुतिक्तोष्णो विषवातार्तिकृंतनः॥ कंडूविचर्चिकाकुष्ठस्पर्शत्वग्दोषनाशनः॥ रीठाकरंजकस्त्वन्यो गुच्छलो गुच्छपुष्पकः॥ रीठा गुच्छफलोऽरिष्टो मंगल्यः कुंभबीजकः॥ प्रकीर्यः सोमकल्कश्च फेनिलो रुद्रसंज्ञकः॥ रीठाकरंजस्तिक्तोष्णः कटुः स्निग्धश्च वातजित्॥ कफघ्नः कुष्ठकंडूतिविषविस्फोटनाशनः॥ रीठा॥ अरिठाल॥ इति करंजाः॥ अंकोलको ठरो रेची गूढपत्रो निकोचकः॥ गुप्तस्नेहः पीतसारो मदनो गूढमल्लिका॥ पीतस्तास्रफलो ज्ञेयो दीर्घकालो गुणाढ्यकः॥ कोलः कोलंबकर्णश्च गंधपुष्पश्च रोचनः॥ विज्ञानतैलगर्भश्च स्मृतिसंख्याभिधास्मृतः॥ अंकोलः कटुकः स्निग्धो विषलूतादिदोषनुत्॥ कफानिलहरः सूतःशुद्धिकृद्रेचनीयकः॥ अंकोल॥ अंकुले॥ नीलस्तु नीलवृक्षो वातारिः शोफनाशनो नरनामा॥ नरवृक्षश्च नस्यालुर्द्विगजेंद्रमितसंज्ञः॥ नीलवृक्षस्तु कटुकः कषायोष्णो लघुस्तथा॥ वातामयप्रशमनो नानाश्वयथुनाशनः॥ नीलवृक्षः॥ कोंकुणमलवेप्रसिद्धः॥ सर्जः सर्जरसः सालः कलः कुलटजोद्भवः वल्लीवृक्षश्चीरपर्णो रालकार्शोजकर्णकः॥ वस्तकर्णः कषायी च ललनो

४ गंधवृक्षकः॥ संशश्च स्वालनिर्यासो ऽतिमसारः सुरेषकः॥ शू

रोगिवल्लभश्चैव यक्षधूपः स सिद्धकः॥१॥ सर्जस्तु कटुतिक्तो
ष्णो हिमः स्निग्धातिसारजित्॥ पित्तास्रदोषकुष्ठघ्नः कंडूवि
स्फोटवातजित्॥ साजडा॥ सज्जरदमर॥ जरणद्रुमोश्वकर्ण
स्तार्क्ष्यप्रसवस्य सस्यसंवरणः॥ धन्यश्च दीर्घपर्णः कुशिकतरुः
कौशिकश्चापि॥ ३॥ अश्वकर्णः कटुस्तिक्तः स्निग्धः पित्तास्रनाश
नः॥ उरोविस्फोटकंडुघ्नः शिरादोषार्त्तिकृंतनः॥ श्री वासर्ज्जस्सः
॥ दमरनभेद॥ तालस्तालद्रुमः पत्री दीर्घस्कंधो ध्वजद्रुमः॥ तृण
राजो मधुरसो मदाढ्यो दीर्घपादपः॥ चिरायुस्तरुराजश्च गज
भक्षो दृढच्छदः॥ दीर्घपत्रो गुरुपत्रोप्यासवद्रुश्च षोडश॥ ६॥ ता
लश्च मधुरः शीतपित्तदाहश्रमापहः॥ सरश्च कफपित्तघ्नो मदकृ
द्दाहशोषनुत्॥ खरताल॥ आंध्रदेशे प्रसिद्धः॥ श्रीतालो मधुताल
श्च लक्ष्मीतालो मृदुच्छदः॥ विशालपत्रो लेखाहो मषीलेखदल
स्तथा॥ शिरालपत्रकश्चैव याम्याभूतोनवाहूयः॥ श्रीतालो मधु
रोत्यंतमीषच्चैव कषायकः॥ पित्तजित्कफकारी च वातमीषत्प्रको
पयेत्॥ श्रीताल॥ मलियालदेशे प्रसिद्धः॥ हिंतालः स्थूलताल
श्च वल्कपत्रो बृहद्दलः॥ गर्भस्रावी लता तालो भीषणो बहुकंट
कः॥ स्थिरपत्रो द्विधालेख्यः शिरापत्रः स्थिरांघ्रिपः॥ अम्लसा
रो बृहत्तालः स्याच्चतुर्दशधाभिधः॥ हिंतालो मधुराम्लश्च कफकृ
त्पित्तदाहनुत्॥ श्रमतृष्णापहारी च शिशिरो वातदोषनुत्॥ हिं
तालु॥ दक्षिणे प्रसिद्धः॥ माडो माडद्रुमो दीर्घो ध्वजवृक्षो वितान
कः॥ मद्यद्रुमो मोहकारी मदद्रुरुज्जरंकृधा॥ माडस्तु शिशिरो रु
च्यः कषायः पित्तदाहकृत्॥ तृष्णापहो मदकृत्कारी श्रमहृत्श्लेष्म
कारकः॥ माडु॥ बैनो॥ कोंकणे प्रसिद्धः॥ तूलं तूदं ब्रह्मकाष्ठं ब्राह्म
णेष्टं च धूपकं॥ ब्रह्मदारु सुपुष्पं च सुरूपं नीलवृंतकं॥ क्रमुकं वि
प्रकाष्टं च मृदुसारं द्विभूमितं॥ तूलं तु मधुराम्लं स्यात् वातपित्तह
रं सरं॥ दाहप्रशमनं वृष्यं कषायं कफनाशनं॥ पारिसापिंपलु॥ वं
गरलि॥ तमालो नीलतालः स्यात्कालस्कंधस्तमालकः॥ नीलध्व
जश्च तापिच्छः कालतालो महाबलः॥ तमालो मधुरो बल्यो वृष्यः श्ले॰।

शिशिरोगुरुः॥कफपित्ततृषादाहश्रमभ्रांतिकरःपरः॥तमालु॥
कदालउ॥कंदोवोवृत्तपुष्पश्चसुरभिर्ललनाप्रियः॥कादंबर्यः सिं
धुपुष्पोमदाढ्यःकर्णपूरकः॥कदंबस्तिक्तकटुकःकषायोवातना
शनः॥शीतलःकफपित्तादिनाशनःशुक्रवर्द्धनः॥कलंबु॥कडे
वु॥धाराकदंबःप्रावृष्यःपुलकीभृंगवल्लभः॥मेघागमःप्रियो
नीपःप्रावृषेण्यःकलंबकः॥धाराकलंबु॥धारेयकडउ॥धूली
कदंबस्कमकंप्रसूनपरागपुष्पोबलभद्रसंज्ञकः॥वसंतपुष्पो
मकरंदवासोभृंगप्रियोरेणुकदंबकोष्टौ॥१॥धूलिकदंबु॥धूलि
गडउ॥भूमीकदंबोभूनिंबोभूमिजोभृंगवल्लभः॥लघुपुष्पोवृत्त
पुष्पोविषघ्नोव्रणहारकः॥भुमिकदंबु॥नेलगडवु॥त्रिकदंबाःक
टुवर्ण्याविषशोफहराहिमाः॥कषायतिक्तपित्तघ्नावीर्यवृद्धिकराः
पराः॥इतिकदंबाः॥वानीरोवृत्तपुष्पश्चशाखालोजलवेतसः॥व्या
धिघातपरिव्याधोनादेयोजलसंभवः॥वानीरस्तिक्तशिशिरोरक्षो
घ्नोव्रणशोधनः॥पित्तास्रकफदोषघ्नःसंग्राहीचकषायकः॥वंजा
लु॥बेसेयमरनु॥कुंभीरोमालुविटपीरोमशःपर्पटद्रुमः॥कुंभीक
टुःकषायोष्णोग्राहीवातकफापहः॥कुंभीवृक्ष॥कोंकणेप्रसिद्धः
॥वेतसोनिचुलोज्ञेयोवंजुलोदीर्घपत्रकः॥कलनोमंजरीनम्रःसु
षेणोगंधपुष्पकः॥वेतसःकटुकःस्वादुःशीतोभूतविनाशनः॥पि
त्तप्रकोपनोरुच्योविज्ञेयोदीपनःपरः॥रक्तपित्तोद्भवंरोगंकुष्टदो
षंचनाशयेत्॥१॥बेडिसु॥वेतसु॥बेसयभेदवु॥धवोदृढतरुर्गौरः
कषायोमधुरत्वचः॥शुक्रवृक्षःपांडुतरुर्धवलःपांडुरोनव॥धवः
कषायःकटुकःकफघ्नोनिलनाशनः॥पित्तप्रकोपनोरुच्योविज्ञे
योदीपनःपरः॥धामोडा॥सिरिवह॥धन्वनोरक्तकुसुमोधनुर्वृ
क्षोमहाबलः॥रुजासहःपिच्छलकोरूक्षःस्वादुफलश्चसः॥धन्व
नःकटुकोष्णश्चकषायःकफनाशनः॥दाहशोषकरोग्राहीकंठा
मयशमप्रदः॥धामणु॥उदुवे॥भूर्जोवल्कद्रुमोभूर्जःसुचर्माभूर्ज
पत्रकः॥चित्रत्वग्विंदुपत्रश्चरक्षापत्रोविचित्रकः॥भूतघ्नोमृदुप
त्रश्चशैलेंद्रस्थोहिमभूमिजः॥२॥भूर्जःकटुकषायोष्णोभूतरक्षक

रः परः॥ त्रिदोषशमनः पथ्यो दुष्टकौटिल्यनाशनः॥३॥ भूर्जपत्रवृक्षः॥ हिमाचले प्रसिद्धः॥ तिनिसः स्यंदनश्चक्रीशतांगः शकटो रथः॥ रथिका भस्मगर्भश्च मेषीजलधरो दश॥१॥ तिनिसस्तु कषायोष्णः कफरक्तातिसारजित्॥ आह्लको दाहजननो वातामयहरः परः॥ स्यंदन भाषाह्वयं॥ अनूपे प्रसिद्धः॥ अर्जुनः संबरः पार्थः चित्रयोधी धनंजयः॥ वैरांतकः किरीटी च गांडीवी शिवमल्लकः॥ सव्यसाचीनदीसर्जः कर्णारिः कुरुवीरकः॥ कौंतेयइंद्रसूनुश्च वीरद्रुः कृष्णसारथिः॥ पृथाजः फाल्गुनो धन्वी ककुभश्चैकविंशतिः॥ अर्जुनस्तु कषायोष्णः कफघ्नो व्रणशोधनः॥ पित्तश्रमतृषार्त्तिघ्नो मारुतामयकोपनः॥ अर्जुन॥ तोरेमत्ति॥ हरिद्रुः पीतदारुः स्यात्पित्तकाष्ठश्च पीतकः॥ कदंबकः सुपुष्पश्च सुराह्वः पीतकद्रुमः॥ हरिद्रुः शीतलस्तिक्तो मंगल्यः पित्तवांतिजित्॥ अंगकांतिकरो बल्यो नानात्वग्दोषनाशनः॥ हलदिवा॥ बिलिलु॥ दग्धा दग्धरुहा प्रोक्ता दधिकाचस्थलेरुहा॥ रोमशा कर्करदला भस्मरोहा सुदुग्धिका॥ दग्धाकटुकषायोष्णा कफवातनिकृंतनी॥ पित्तप्रकोपनी चैव जठरानलदीपनी॥ कुरुह्ली नाम॥ कोंकणे प्रसिद्धा॥ शाखोटः स्याद्भूतवृक्षो गवाक्षी यूकावासो भूर्जपत्रश्च पीतः॥ कौशिक्यो जक्षीरनाशश्च सूकृस्तिक्तोष्णोयं पित्तकृद्भूतहारी॥ साहोड॥ आषोडमरनु॥ शाकः क्रकचपत्रः स्यात् खरपत्रोतिपत्रकः॥ मह्रीसहश्च श्रेष्ठकाष्ठः स्थिरसाचगृहद्रुमः॥ शाकस्तु सारसः प्रोक्तः पित्तदाहश्रमापहः॥ कफघ्नं मधुरं रुच्यं कषायं शाकवल्कलं॥ सोये॥ नेग्गु॥ शिंशपा तु महाश्यामा कृष्णसारा वधूमिका॥ तीक्ष्णसारा च धीरा च कपिला कृष्णशिंशपा॥ श्यामादिशिंशपा तिक्ता कटूष्णा कफवातनुत्॥ नष्टाजीर्णहरा दीप्या शोफातीसारहारिणी॥ कालासिंसपा॥ करीयइबीडु॥ शिंशपान्या श्वेतपत्रा शिता ह्लादिश्च शिंशपा॥ श्वेतादिशिंशपा तिक्ता शिशिरा पित्तदाहनुत्॥ पांढरासि॰ पा॥ बिलियइबीडु॥ कपिलाशिंशपा चान्या पीता कपिलशिंशपा॥ सारिणी कपिलाक्षी च भस्मगर्त्ता कुशिंशपा॥ कपिलाशिंशपा तिक्ता शीतवी॥

यीश्रमापहा॥वातपित्तज्वरघ्नी च छर्दिहिक्काविनाशनी॥पिवला
सिंसपा॥होंवदबीड॥शिंशपान्नितयं वर्ण्यं हिमशोफविसर्पजित्
॥पित्तदाहप्रशमनं बल्यं रुचिकरं परं॥साधारणशिंशपात्रयगु
ण॥अनसस्तु महासर्जः सौरिर्बंधूकपुष्पकः॥प्रियकोबीजवृक्ष
श्च नीलकः प्रियशालकः॥असनः कटुरुष्णश्च तिक्तो वातार्तिदो
षनुत्॥सारं कोगलदोषघ्नो रक्तमंडलनाशनः॥वडिलुबिया॥वा
रुपु॥हिरियहोत्तेयमरनु॥द्वितीयो नीलबीजः स्यान्नीलपत्रः सु
नीलकः॥नीलद्रुमो नीलसारो नीलनिर्यासकोरसैः॥लोहिवांबी
या॥केपिन्नहोने॥बीजवृक्षो कटुः शीतौ कषायौ कुष्ठनाशनौ॥सा
रकौ कंडुदद्रुघ्नौ श्रेष्ठं तत्रासितं तयोः॥इति बीजवृक्षाः॥वरुणः श्वे
तवृक्षश्च तिक्तशाकः कुमारकः॥श्वेतद्रुमः साधुवृक्षः तमालो मारु
तापहः॥वरुणः कटुरुष्णाश्च रक्तदोषहरः परः॥शीर्षवातहरः स्नि
ग्धो दीप्यो विद्रधिवातजित्॥वरुणः॥म्हरवसले॥पुत्रजीवः पवि
त्रश्च गर्भदः सुतजीवकः॥कुटजीवोपत्यजीवः सिद्धिदोपत्यजी
वकः॥पुत्रजीवो हिमो वृष्यः श्लेष्मदो गर्भजीवदः॥चक्षुष्यः पित्त
शमनो दाहतृष्णानिवारणः॥पुत्रजीवभाषा॥२॥कोलापुरे प्रसि
द्धः॥यहापिंडीतरु प्रोक्तः श्वेतपिंडीतकश्च सः॥करहाटः क्षुर
श्च वशल्लकोशनरुः सरः॥पिंडीतरुः कषायोष्णः स्निग्दोषशम
नोपि च॥चर्मरोगापहश्चैव विशेषाद्रक्तदोषजित्॥पेंडिरा॥३८
त्यमाडुवमरत्रु॥कारस्करस्तु किंपाको विषतिंदुर्विषद्रुमः॥गर
द्रुमो रम्यफलः कुपाकः कालकूटकः॥१॥कारस्करः कटूष्णश्च ति
क्तः कुष्ठविनाशनः॥ वातामयास्रकंडूतिकफामार्शव्रणापहः॥
काजिरा॥कांजिवार॥कटभी नाभिका शौंडी पाटली किणिही तथा॥
मधुरेणुः सुदूशामा कैडर्यः श्यामलानवा॥कालीकिणही॥करियकि
लगो॥शिनादिकटभी श्वेता किणिही गिरिकर्णिका॥शिरीषपत्रा का
लिंदी शतपादी विषघ्निका॥महाश्वेता महाशौंडी महादिकटभी द
शा॥पांढरीकिणही॥विलियवेल्लाल॥कटभी चेत्कटूष्णा गुल्मविशो
पानशूलदोषघ्नी॥वातकफाजीर्णहृ[illegible]नत्रगुणयु

का॥ दोन्हीकिणहीगुण॥ स्रडुकिणिगेवेलाल॥ सुवकः सुवकस्ती
ष्णः क्रूरो भूतांकुशस्तवः॥ राजाद्वैजनसंज्ञश्च भूतद्रावीग्रहाह्वयः॥
भूतांकुशस्तीव्रगंधः कषायोष्णः कटुस्तथा॥ भूतग्रहादिदोषघ्नः क
फवातनिकृंतनः॥ भूतांकुशः॥ देवसर्षपकश्चासोबदरोरक्तमू
लकः॥ सुरसर्षपकश्चैंद्रुस्तथा सूक्ष्मदलस्मृतः॥ सर्षपोनिर्जरादिः
स्यात्कुरंगांघ्रिनवाभिधः॥ देवसर्षपनामातुकटूष्णः कफनाशनः
॥ जंतुदोषहरोरुच्योवक्त्रामयविशोधनः॥ देवशिरस॥ देवसिरस
भेद॥ लकुचोलिकुचः शालः कषायीदृढवल्कलः॥ दद्रूकार्शश्चश
रश्चस्थूलस्कंधोनवाह्वयः॥ लकुचः स्वरसेतिक्तः कषायोष्णोलघु
स्तथा॥ कफदोषहरोदाहीमलसंग्रहदायकः॥ आंजणु॥ विकंकतो
व्याघ्रपादोग्रंथिलः स्वादुकंटकः॥ कंटपादोबहुफलोगोपघोटास्रु
वद्रुमः॥ मृदुफलोदंतकाष्ठोयज्ञीयोब्रह्मपादपः॥ पिंडरोहिणकः
पूतः किंकिणीचत्रिसप्तधा॥ विकंकतोम्लमधुरः पाकेतिमधुरोलघुः
॥ दीपनः कामलास्रघ्नः पाचनः पित्तनाशनः॥ गुलघोंटी॥ हलमाणि
का॥ इत्थंवन्यमहीरुहाह्वयगुणाभिख्यानमुख्यानयाभंग्याभंगुरि
ताभिधानरमहाभोगश्रियाभास्वरं॥ वैद्योवैद्यतुवर्गमेनमखिलंवि
ज्ञानवैज्ञानिकंप्रज्ञालोकविजृंभणेनसहसास्वैरंगदानांगणं॥ ये
दृश्यंतिनृणांगदान्गुरुतरानाक्रम्यवीर्यासिनायेस्थित्वापिवनेगु
णेनसरुजांस्वेनावनंतन्वते॥ तेषामेषमहानसीममहिमावन्यात्म
नांवासभूरुक्षाणांभणितोभिषग्भिरसमोयोत्रस्ववर्गाख्यया॥ यःका
श्मीरकुलोज्वलांबुजवनीहंसोपिसंसेवतेनित्योल्लासितनीलकंठ
मनसः प्रीत्याद्यभग्नश्रिया॥ तस्यायंनवमः कृतौनरहरेर्वर्गः प्रभद्रा
दिकोभद्रात्मन्यभिधानशेखरशिखाचूडामणौसंस्थितः॥ इतिश्री
वैद्यकराजमंडलीभालीमाणिक्यमंडनश्रीमदीश्वरपंडिततनुजा
तकात्यायनीरमणचरणारविंदसौख्यजालसराजहंसश्रीकाश्मी
राद्यवंशाचार्यश्रीनरहरिपंडितविरचितेराजनिघंटुपर्यायःप्रभद्रा
दिवर्गोनवमः समाप्तः॥ अथकरवीरादिवर्गः॥ चतुर्धाकरवीरोथध
त्तूरस्त्रितयंतथा॥ कोविदारोथ्थिरर्कः स्यान्मेरुः किंशुकस्तथा॥ पुन्ना

गस्तिलकोगस्त्यः पाटल्यौचद्विधास्मृते॥ अशोकश्चंपकोधन्वीकेत कीद्विविधातथा॥ सिंदूरीचतथाजातीमुद्गरःशतपत्रिका॥ मल्लिका चचतुर्धास्याद्वासंतीनवमल्लिका॥ अतिमुक्तोद्विधायूथीकुब्जकोमु चुकुंदकः॥ करुणीमाधवीचाथगणकारीचकुंदकः॥ बकबकेविकबं धूकास्त्रीसंधिश्चजयातथा॥ प्रोक्ताभ्रमरमारीचतरुण्यम्लानकस्त था॥ किंकरातोथबालाख्योझिंटिकाचोष्ट्रकांडिका॥ नगरंदमनद्वं द्वंतुलसीमरुवोद्विधा॥ अर्जकाश्चचतुर्वर्गापत्रीपाच्यौचवालकः॥ बर्बरोमंचिकापत्रप्रोक्ताश्चारामशीतलाः॥ अथकमलपुंडरीका ह्वयकोकनदानिपद्मिनीचैव॥ पद्माक्षंचमृणालंतत्कंदःकेसरश्च तथा॥ उत्पलकुमुदेकुवलयकुलिनीस्ताकवसुमित्या ॥ उत्तंस नाम्निवर्गेद्व्याण्यत्रोपदिश्यंते॥ करवीरोमहावीरोहयमारोश्व मारकः॥ हयघ्नःप्रतिहासश्चशतकुंदोश्वरोधकः ॥ हयारिर्वीर कःकुंदःशकुंदःश्वेतपुष्पकः॥ अश्वांतकस्तथाश्वघ्नोनखराह्वोश्व नाशकः॥ स्थलादिकुमुदःप्रोक्तोदिव्यपुष्पोहरप्रियः॥ गौरीपुष्पः सिद्धपुष्पस्त्रिकराह्वःप्रकीर्तितः॥ करवीरःकटुस्तीक्ष्णःकुष्ठकं डूतिनाशनः॥ व्रणार्त्तिविषविस्फोटशमनोश्वमतिप्रदः॥ करवीरु ॥ चाकणलिंगे॥ रक्तःकरवीरकोन्योरक्तप्रसवोगणेशकुसुमश्च॥ चंडीकुसुमःक्रूरोभूतद्रावीरविप्रियोमुनिभिः॥ रक्तस्तुकरवीरः स्यात्कटुस्तीक्ष्णोविशोधकः॥ त्वग्दोषव्रणकंडूतिकुष्ठहारीविषा पहः॥ रक्तकरवीर॥ कैंगणलिगे॥ पीतःकरवीरकोन्यःपीतप्रसवः सुगंधिकुसुमश्च॥ कृष्णस्तुकृष्णकुसुमश्चतुर्विधोयंगुणेतुल्यः॥ इतिकरवीरः॥ धुत्तूरःकितवोधूर्त्तउन्मत्तःकनकाह्वयः॥ शठोमातु लकःश्यामोमदनःशिवशेखरः॥ खर्जूघ्नःकाहलापुष्पःखलःकं टफलस्तथा॥ मोहनःकलभोन्मत्तःशैवश्चाष्टादशाह्वयः॥ धुत्तूरः कटुःष्णश्चकांतिकारीव्रणार्त्तिनुत॥ त्वग्दोषखर्जुकंडूतिज्वरहा रीभ्रमप्रदः॥ धत्तूर॥ मदकुणिके॥ कृष्णधुत्तूरकःसिद्धःकनकः सचिवःशिवः॥ कृष्णपुष्पोविषारातिःक्रूरधूर्त्तश्चकीर्तितः॥ काला धत्तूर॥ करियमदकुणिके॥ राजधत्तूरकस्त्वन्योराजधूर्त्तोमहाशठः॥

निस्त्रैणिपुष्पकोभ्रांतोराजस्वर्णःषडाह्वयः॥सितनीलकृष्णलो
हितपीतप्रसवाश्चसंतिधत्तूराः॥सामान्यगुणोपेतास्तेषुगुणाढ्य
स्तुकृष्णकुसुमःस्यात्॥इतिधत्तूरः॥कोविदारःकांचनारःकुद्दा
लःकनकारकः॥कांतपुष्पश्चकरकःकांतारोयमलच्छदः॥पीतपु
ष्पःसुवर्णारोगिरिजःकांचनारकः॥युग्मपत्रोमहापुष्पःस्याच्चतु
र्दशाभिधः॥कोविदारःकषायःस्यात्संग्राहीव्रणरोपणः॥दीप
नःकफवातघ्नोमूत्रकृच्छ्रनिबर्हणः॥कांचनु॥कोचाले॥कचनार
॥अर्कःक्षीरदलःपुष्टीप्रतापक्षीरकांडकः॥विक्षिरोभास्करक्षीरी
खर्जूघ्नःशिवपुष्पकः॥अंजनक्षीरपर्णीस्यात्सविताचविकीरणः॥
सूर्याह्वश्चसदापुष्पोरविरास्फोटकस्तथा॥तूलफलःशुकफलो
विंशत्येकसमाह्वयः॥अर्कस्तुकटुरुष्णश्चवातजिद्दीपनीयकः॥
शोफव्रणहरःकंडूकुष्ठक्रिमिविनाशनः॥रूई॥यक्के॥शुक्लार्क
स्तपनःश्वेतःप्रतापश्चसितार्ककः॥सपुष्पःशंकरादिस्यादलर्को
वृत्तमल्लिका॥श्वेतार्कःकटुतिक्तोष्णोमलशोधनकारकः॥मूत्रकृ
च्छ्रास्रशोफार्तिव्रणदोषविनाशनः॥पांढरीरूई॥बिलिययक्के॥
राजार्कोवसुकोलर्कोमंदारोगणरू[illegible]ः॥काष्ठीलश्चसदापुष्पो
ज्ञेयोष्टवसुसम्मितः॥राजार्कःकटुतिक्तोष्णःकफमेदोविषापहः
॥वातकुष्ठव्रणान्हंतिशोफकंडूविसर्पनुत्॥मंदारु॥मंदारयक्के॥
श्वेतमंदारकस्त्वन्यःपृथ्वीकुरवकःस्मृतः॥दीर्घपुष्पःसितालर्को
दीर्घोन्यर्कःशराह्वयः॥श्वेतमंदारकोत्युष्णस्तिक्तोमलविशोधनः॥
मूत्रकृच्छ्रव्रणान्हंतिक्रिमीनत्यंतदारुणान्॥श्वेतमंदारु॥बिलि
यमंदारनु॥इत्यर्काः॥नमेरुःसुरपुन्नागःसुरेष्टःसुरपर्णिका॥सु
रतुंगश्चपंचाह्वःपुन्नागगुणसंयुतः॥सुरपुन्नाग॥सुरबने॥पला
शःकिंशुकःपर्णोवातपोथोथयाज्ञिकः॥त्रिपर्णोवक्रपुष्पश्चपूत
द्रुर्ब्रह्मवृक्षकः॥ब्रह्मोपनेताकाष्ठद्रुःपर्यायाश्चदशस्मृताः॥पला
शस्तुकषायोष्णःक्रिमिदोषविनाशनः॥तद्बीजंपामकंडूतिदद्रुत्व
ग्दोषनाशकृत्॥तत्पुष्पंचसोष्णंचकंडूकुष्ठार्तिनाशनं॥रक्तःपी
तःसितोनीलःकुसुमैस्तुविभज्यते॥किंशुकैर्गुणसाम्येपिसितोविज्ञा

नटः स्मृतः॥ पलास॥ मुनज्जु॥ पुन्नागः पुरुषस्तुंगः पुन्नापामटलः पुमान्॥ रक्तपुष्पोरक्तरेणुररुणोयंनवाहूयः॥ पुन्नागोमधुरः शीतः सुगंधिः पित्तनाशकृत्॥ भूतविद्रावणश्चैवदेवतानांप्रसादनः॥ पुन्नागः॥ सुरहोन्नेयभेद्॥ तिलकोविशेषकः स्यान्मुखमंडनकश्चपुंड्रकः पुंड्रः॥ स्थिरपुष्पः छिन्नरुहोद्गधरुहोरेचकश्चमृतजीवी॥ तरुणीकटाक्षकामोवासंतः सुंदरोभीष्टः॥ भालविभूषणसंज्ञोविज्ञेयः पंचदशनामा॥ तिलकोमधुरः स्निग्धोवातपित्तकफापहः॥ बलपुष्टिकरोहृद्योलघुर्मेदोविवर्द्धनः॥ तिलकपुष्पविशेषः॥ तिलकत्वक्कषायोष्णा पुंस्त्वघ्नीदंतदोषनुत्॥ क्रिमिशोफव्रणानर्हंति रक्तदोषविनाशनी॥ तिलकत्वचागुण॥ अगस्त्यः शीघ्रपुष्पः स्यात् अगस्तिस्तुमुनिद्रुमः॥ व्रणारिर्दीर्घपलकोरक्तपुष्पः सुरप्रियः॥ सितपीतनीललोहितकुसुमविशेषाच्चतुर्विधोगस्तिः॥ मधुरःशिशिरस्त्रिदोषश्रमकासविनाशनश्चभूतघ्नः॥ तथाच॥ अगस्त्यंशिशिरंगोल्यंत्रिदोषघ्नंश्रमापहं॥ बलासकासवैवर्ण्यभूतघ्नंचबलापहं॥ हेतिया॥ अगसेयमरनु॥ पाटलीताम्रपुष्पीचकुंभीकारक्तपुष्पिका॥ वसंतदूतीचामोघातालीचविटवल्लभा॥ स्थिरगंधांबुवासीचकालवृंतींदुभूहूया॥ पाटलीतुरसेतिक्ताकटूष्णाकफवातजित्॥ शोफाध्मानवमिश्वासशमनीसन्निपातनुत्॥ पाडली॥ ह्रादरि॥ सितपाटलिकाचान्यासितकुंभीफलेरुहा॥ सितामोघाकुबेराक्षीसिताह्वाकाष्ठपाटला॥ पाटलीधवलाप्रोक्ताज्ञेयावसुमिताह्रूया॥ सितपाटलिकातिक्तागुरूष्णावातदोषजित्॥ वमिहिक्काकफघ्नीचश्रमशोषापहारिका॥ श्वेतपाडलि॥ विलियह्रादरि॥ अशोकः शोकनाशः स्याद्विशोकोवंजुलद्रुमः॥ मधुपुष्पोपशोकश्चकंकेलिः केलिकस्तथा॥ रक्तपल्लवकश्चित्रोविचित्रः कर्णपूरकः॥ सुभगः स्माराधिवासोदोषहारीप्रपल्लवः॥ रागीनरुर्हेमपुष्पोरामावामांघ्रिघातकः॥ पिंडीपुष्पोनटश्चैवपल्लवद्रुर्हिविंशतिः॥ अशोकः शिशिरोहृद्यः पित्तदाहश्रमापहः॥ गुल्मशूलोदराध्माननाशनः क्रिमिकारकः॥ अशोक॥ अशोके॥ चंपकः स्वर्णपुष्पश्चचांपेयः शीत

लकुट:॥सुभगोभृंगमोहीचशीतलोभ्रमरातिथि:॥सुरभिर्दीपपु
ष्पश्चस्थिरगंधोतिगंधक:॥स्थिरपुष्पोहेमपुष्प:पीतपुष्पस्तथाप
र:॥हेमाह्व:सुकुमारस्तुवनदीपोष्टभूह्वय:॥तत्कलिकागंधफली
बहुगंधागंधमोदिनीत्रेधा॥चंपककलिका॥चंपक:कटुक स्ति
क्त:शिशिरोदाहनाशन:॥कुष्ठकंडूव्रणहरोगुणाढ्योराजचंपक:
॥चांपा॥संपगे॥सुद्रादिचंपकस्त्वन्य:संज्ञेयोनागचंपक:॥फणि
चंपकनागाह्व:चंपकोवनज:शरा:॥वनचंपक:कटूष्णोवातकफ
ध्वंसनोवर्ण्य:॥चक्षुष्योव्रणरोपीवह्निस्तंभकरोतियोगगुणान्॥
नागिणि॥नागचंपगे॥बकुलस्तुसिंधुगंध:स्त्रीमुखमधुदोहश्चम
धुपुष्प:॥सुरभिर्भ्रमरानंद:स्थिरकुसुम:केसरश्चशारदिक:॥करक:
स्तिधात्रुसंज्ञोविशारदोगूढपुष्पकोधन्वी॥मदनोमद्यामोदश्चिरपुष्प
श्चेतिसप्तदशसंज्ञ:॥बकुल:शीतलोहृद्योविषदोषविनाशन:॥मधु
रश्चकषायश्चमदाढ्योहर्षदायक:॥तथाच॥वकुलकुसुमंचरुच्यंक्षी
राढ्यंसुरभिशीतलंमधुरं॥स्निग्धकषायंकथितंमलसंग्रहकार
कंचैव॥वकुलत्वचापत्रपुष्पगुणा:॥केतकीतीक्ष्णपुष्पाचविफला
धूलिपुष्पिका॥मेध्याकंटदलाचैवशिवद्विष्टानृपप्रिया॥क्रकचादी
र्घपत्राचस्थिरगंधात्रुपांसुला॥गंधपुष्पेंदुकलिकादलपुष्पात्रिपंच
धा॥स्वर्णादिकेतकीत्वन्याज्ञेयासाहेमकेतकी॥कनकप्रसवापुष्पीहे
मीक्लिन्नरुहातथा॥विष्ठारुहास्वर्णपुष्पीकामखड्गदलाचसा॥केत
कीकुसुमंवर्ण्यंकेशदौर्गंध्यनाशनं॥हेमाभामदनोन्मादवर्धनंसौख्य
कारिच॥तस्यस्तनोतिशिशिर:कटु:पित्तकफापह:॥रसायनकरोब
ल्योदेहदार्ढ्यकर:पर:॥केतकी॥केदगे॥सिंदूरीवीरपुष्पश्चतृणपुष्पी
करकट:॥सिंदूरपुष्पीशोणादिपुष्पीबाणाह्वय:स्मृत:॥सिंदूरीकटु
कातिक्ताकषायाश्लेष्मवातजित्॥शिरोर्तिशमनीभूतनाशीचंडी
प्रियाभवेत्॥सिंदूरी॥जातीसुरभिगंधास्यात्सुमनात्रुसुरप्रिया॥के
तकीसुकुमाराऽत्रुसंध्यापुष्पामनोहरा॥राजपुत्रीमनोज्ञाचमालती
तिलभाविनी॥जनेष्टाहृद्यगंधाचनामान्यस्याश्चतुर्दश॥मालतीशी
ततिक्तास्यात्कफघ्नीमुखपाकनुत्॥कुड्मलंनेत्ररोगघ्नंव्रणविस्फोट

कुष्ठनुत्॥जाई॥जाजि॥मुद्गरोगंधसारस्तुसप्तपत्रश्चकर्दमी॥वृत्त
पुष्पोतिगंधश्चगंधराजोविटप्रियः॥गेयप्रियोजनेष्टश्चमृगेष्टोरुद्र
सम्मितः॥मुद्गरोमधुरःशीतःसुरभिःसौख्यदायकः॥मनोजमधुपा
नंदकारीपित्तप्रकोपहृत्॥मुद्गरःपुष्पविशेषः॥शतपत्रीतुसुमनासु
शीताशिववल्लभा॥सौम्यगंधाशतदलासुवृत्ताशतपत्रिका॥शतप
त्रीहिमातिक्ताकषायाकुष्ठनाशनी॥मुखस्फोटहरारुच्यासुरभिः
पित्तदाहनुत्॥सेवती॥सेवतिगे॥मल्लिकाभद्रवल्लीतुगौरीचवनचं
द्रिका॥शीताभीरुःप्रियासौम्यानारीष्टागिरिजासिता॥मल्लीचदम
यंतीचचंद्रिकामोदिनीमनुः॥मल्लिकाकटुतिक्तास्याच्चसुष्यामुख
पाकनुत्॥कुष्ठविस्फोटकंडूतिविषव्रणहरापरा॥वेलिमोगरा॥
वल्लिमल्लिगे॥वल्लिकामोदिनीचान्यावटपत्राकुमारिका॥सुगंधा
स्याद्वृत्तपुष्पामुक्ताभावृत्तमल्लिका॥नेत्ररोगापहंत्रीस्यात्कटूष्णा
वृत्तमल्लिका॥व्रणघ्नीगंधबहलादारयत्यास्यजान्गदान्॥बाटोग
रे॥दुंदुमल्लिगे॥वार्षिकात्रिपुटाख्यस्तासुरूपासुलभप्रिया॥श्री
वल्लीषट्पदानंदामुक्तबंधानबाभिधा॥वार्षिकाशिशिराहृद्यासुगं
धिःपित्तनाशनी॥कफवातविषस्फोटक्रिमिदोषामनाशनी॥साद
हीमोगराचाभेदु॥सादीर्घवर्त्तुलपुष्पाविशेषादनेकनिर्देशाः॥मृ
गमदवासात्वन्याकस्तूरीमल्लिकाज्ञेया॥प्रातर्विकस्वरैकासायोद्वि
दुरापिमल्लिकाकापि॥वनमल्लिकातुसास्यादास्फोटाकिंतुसम
गुणोपेताः॥इतिमल्लिका॥वासंतीप्रहसंतीवसंतजामाधवीम
हाजातिः॥शीतसहामधुबहलावसंतदूतीचनवनाम्नी॥वासं
तीशिशिराहृद्यासुरभिःश्रमहारिणी॥धम्मिल्लामोदनीमंदमद
नोन्माददायिनी॥विरवंति॥विरवंतिगे॥नवमल्लिकातिमोदा
ग्रैष्मीग्रीष्मोद्भवाचसा॥सप्तलासुकुमाराचसुरभीसूचिमल्लिका
॥सुगंधाशिखरिणीस्यान्नेवालीचेंदुभूहूया॥नवमल्लिकातिशी
त्यासुरभिःसर्वरोगहृत्॥रोमाली॥विरवंतिभेद॥सेवातिमुक्तका
ख्यापुंड्रकनाम्नीचकश्चिदुक्तान्या॥मदनीभ्रमरानंदाकामकांता
त्वपंचास्या॥अतिमुक्तःकषायःस्याच्छिशिरःश्रमनाशनः॥पित्तदा

हृज्वरोन्माद हिक्काछर्दिनिवारणः॥रायचिरवंते॥रायबेल॥यूथि
कागणिकांबष्ठामागधीबालपुष्पिका॥मोदनीबहुगंधाचभृंगानं
दागजाह्वया॥पांढरीजूई॥बिलियमोले॥अन्यायूथीसुवर्णाह्वा
सुगंधाहेमयूथिका॥युवतीष्टाव्यक्तगंधाशिखंडीनागपुष्पिका॥ह
रिणीपीतयूथीचपीतिकाकनकप्रभा॥मनोहराचगंधाढ्याप्रोक्ता
स्यान्मनुसम्मिता॥यूथिकायुगलंस्वादुशिशिरंशर्करान्वितं॥पि
त्तदाहतृषाहारिनानात्वग्दोषनाशनं॥दोन्हीजुई॥यरडुमोल्ले॥
सितपीतनीलमेचकनाम्न्यः कुसुमेनयूथिकाः कथिताः॥तिक्तहि
मपित्तकफामयज्वरघ्योव्रणादिदोषहराः॥साधारणयूथिकागु
णः॥सर्वासांयूथिकानांतुरसवीर्यादिसाम्यता॥सुरूपंतुसुगंधा
ढ्यंस्वर्णयूथ्याविशेषतः॥सोनेजूई॥इतियूथिकाः॥कुब्जकाभद्र
तरुणीवृत्तपुष्पोतिकेसरः॥महासहः कंटकाढ्यः खर्वेलिकुलसंकु
लः॥कुब्जकः सुरभिः शीतोरक्तपित्तकफापहः॥पुष्पंतुशीतलंवर्ण्यं
दाहघ्नंवातपित्तजित्॥कुब्जः पुष्पविशेषः॥कोंकणेप्रसिद्धः॥मुचु
कुंदोबहुपत्रः सुदलोहरिवल्लभः सुपुष्पश्च॥अर्घ्यार्हो लक्ष्मणकोर
कप्रसवश्चवसुनामा॥मुचुकुंदः कटुतिक्तः कफकासविनाशनश्चकं
ठदोषहरः॥त्वग्दोषशोफशमनोव्रणपामाविनाशनश्चैव॥मुचुकुं
दः॥कोंकणेप्रसिद्धः॥करुणीग्रीष्मपुष्पीस्याद्रक्तपुष्पीचवारुणी
॥राजप्रियाराजपुष्पीसूक्ष्माचब्रह्मचारिणी॥करणीकटुतिक्तोष्णा
कफमारुतनाशिनी॥आध्मानविषविछर्दिजन्तूर्ध्वश्वासहारिणी
॥करवीरुणी॥कोंकणेप्रसिद्धा॥माधवीचंद्रवल्लीचसुगंधाभ्रमरो
त्सवा॥भृंगप्रियाभद्रलताभूमिमंडपभूषणा॥माधवीकटुकातिक्ता
कषायामदगंधिका॥पित्तकासव्रणान्हंतिदाहशोकविनाशनी॥मा
धवी॥इंद्रगोचे॥गणकारीकांचनिकाकांचनपुष्पीवसंतदूतीच॥गं
धकुसुमातिमोदावासंतीमदमादिनीचैव॥गणिकारीसुरभिस्त्रि
दोषशमनीचदाहशोषहरा॥कामक्रीडाडंवरशंबरहरचापचलप्र
सरा॥गणिकारीकोंकणेप्रसिद्धा॥कुंदस्तुमकरंदश्चमहामोदोमनो
हरः॥मुक्तापुष्पः सदापुष्पस्तारपुष्पोट्टहासकः॥दमनोवनहासश्चम,

नोज्ञोरुद्रसंमतः॥कुंदोतिमधुरःशीतःकषायःकेश्यभावनः॥कफ
पित्तहरश्चैवसरोदीपनपाचनः॥कुंदे॥सुरगि॥बकःपाशुपतःशै
वःशिवापीडश्चसुव्रतः॥वसुकश्चशिवांकश्चशिवेष्टःक्रमपूरकः॥
शिवमल्लीशिवाह्लादःशंभवोरविसंमितः॥पित्तदाहकफश्वासश्र
महारीचदीपनः॥बागोले॥वगेदाहू॥केविकाकविकाकेवाभृंग
रिर्नृपवल्लभा॥भृंगमारीमहागंधाराजकन्यालिमोहनी॥केविका
मधुराशीतादाहपित्तश्रमापहा॥वातश्लेष्मरुजांहंत्रीपित्तछर्दिवि
नाशनी॥केरव॥कोंकणेप्रसिद्धा॥बंधूकोबंधुजीवःस्याद्रोष्ठपुष्पोर्क
वल्लभः॥मध्यंदिनोरक्तपुष्पोरागपुष्पोहरिप्रियः॥असितःसितपी
तलोहितपुष्पविशेषाच्चतुर्विधोबंधूकः॥ज्वरहारीविविधग्रहपिशा
चशमनःप्रसादनःसवितुःस्यात्॥बांदुजा॥बंदुवे॥त्रिसंधिःसांध्य
कुसुमासांधिवेलीसदाफला॥त्रिसंध्यकुसुमाकांतासुकुमारा
चसंधिजा॥त्रिसंधिस्त्रिविधाज्ञेयारक्ताचान्यासितासिता॥क
फकासहरारुच्यात्वग्दोषशमनीपरा॥त्रिसंधि॥त्रिसंगि॥जपा
ख्याओड्रकाख्याचरक्तपुष्पीजवाचसा॥अर्कप्रियारक्तपुष्पीप्रा
तिकाहरिवल्लभा॥जपातुकटुरुष्णास्यादिंद्रलुप्तकनाशकृत्॥वि
छर्दिजंतुजननीसूर्याराधनसाधनी॥जासवन॥दासनल॥भ्रम
रारिभृंगमारीभृंगारिर्मासपुष्पिका॥कुष्ठारीभ्रमरीचैवज्ञेयायष्टि
लतामुनिः॥तिक्ताभ्रमरमारीस्याद्वातश्लेष्मज्वरापहा॥शोफकंडू
तिकुष्ठघ्नीव्रणदोषास्थिदोषनुत्॥भ्रमरमारी॥मालवेप्रसिद्धा॥
तरुणीसहाकुमारीगंधाढ्याचारुकेसराभृंगेष्टा॥रामतरुणीतुसु
दलाबहुपत्राभृंगवल्लभाचदशाह्वा॥तरुणीशिशिरास्निग्धापित्त
दाहज्वरापहा॥मधुरामुखपाकघ्नीतृष्णाविछर्दिवारिणी॥तरणी
चेंबडे॥महतीतुराजतरणीमहासहावर्णपुष्पकोम्लानः॥अम्
लानकःसुपुष्पःसुवर्णपुष्पश्चसप्ताह्वः॥विज्ञेयाराजतरुणीकषा
याकफकारिणी॥चक्षुष्याहर्षदाहघ्नासुरभिःसुरवल्लभा॥राजत
रुणी॥हिरियचेंबडे॥अथरक्ताम्लानःस्याद्रक्तसहारम्यःसचापरि
म्लानः॥रक्त[illegible]॥रामालिंग

नकामोरागप्रसवोमधूत्सवः प्रसवः॥ सुभगोभसलानंदः स्यादिस यमिंदुचंद्रमितः॥ उष्णःकटुः कुरबको वातामयशोफनाशनोज्वर नुत्॥ आध्मानशूलकासश्वासार्तिप्रशमनोवर्ण्यः॥ वानझाड॥ ब णदगिडु॥ पीतःसकिंकिरातः पीताम्लानः कुरंटकः कनकः॥ पी नकुरवः सुपीतः सपीनकुसुमः सप्तसंज्ञकः स्यात्॥ किंकिरातः कषायोष्णस्तिक्तश्चकफवातजित्॥ दीपनः शोफकंडूतिरक्त त्वग्दोषनाशनः॥ पीवलागोरंटा॥ होंवणदगोरटे॥ नीलपुष्पा तुसादासीनीलाम्लानस्तुछादनः॥ वलाचार्त्तगलाचैवनीलपुष्पा चषड्विधा॥ आर्त्तगलाकटुस्तिक्ताकफमारुतशूलनुत्॥ कंडूकुष्ठ व्रणान्हंतिशोफत्वग्दोषनाशनी॥ कालाकोरंटा॥ करियगोरटे॥ अन्यच्च॥ कंटकुरंटोझिंटीसावन्यसहचरीतुसापीता॥ शोणीकुर वकनाम्नीकंटकिनीशोणझिंटिकाचैव॥ सान्यातुनीलझिंटीनील कुरंटश्चनीलकुसुमाच॥ बाणोबाणादासीकंटार्त्तगलाचसप्तसंज्ञा स्यात्॥ झिंटिकाकटुकातिक्तादंतामयशांतिदाश्चशूलघ्न्यः॥ वात्त कफशोफकासत्वग्दोषविनाशकारिण्यः॥ त्तिन्हिकोरंटे॥ मुरुमु ल्लगोरटेगल्लु॥ इतिकोरंटाः॥ उष्ट्रकांडीरक्तपुष्पीत्तेयाकरभकांडि का॥ रक्तालोहितपुष्पीचवर्णेपुष्पीषडाह्वया॥ उष्ट्रकांडीतुतिक्तो ष्णारुच्याहृद्रोगहारिणी॥ तद्बीजंमधुरंशीतंवृष्यंसंतर्पणंस्मृतं॥ उटांटी॥ काबण॥ तगरंकुटिलंवक्रंविनम्रंकुंचितंनतं॥ शठंचनहु षाख्यंचदद्रुहस्तंचबर्हणं॥ पिंडीतगरकंचैवपार्थिवंराजहर्षणं॥ कालानुसारकंसत्रंदीनंजिह्मंमुनिंदुधा॥ तगरंशीतलंतिक्तंदृष्टिदो षविनाशनं॥ विषार्तिशमनंपथ्यंभूतोन्मादभयापहं॥ तगर॥ नदीव स्तः॥ पिंडीतगरइतिकोंकणेप्रसिद्धः॥ इतिपुष्पाणि॥ अथदमनक स्तुदमनोवांतोगंधोत्कटोमुनिर्जटिलः॥ दंडीचपांडुरोगोब्रह्मज टापुंडरीकाश्च॥ तापसपत्रः पत्रीपवित्रकोदेवशेखरश्चैव॥ कुल पत्रश्चविनीतस्तपस्विपत्रश्चसप्तधाम्नीकं॥ दमनः शीतलतिक्तः कषायकटुकश्चदोषहरः॥ द्वंद्वत्रिदोषशमनोविषविस्फोटविका रहरणः स्यात्॥ दवणा॥ अन्यश्चवन्यदमनोवनादिनामाचदमन

पर्यायः॥वीर्यस्तंभनकारी बलदायी चामदोषहारी च॥रानद्वण
॥कादवना॥तुलसी सुभगा तीव्रा पावनी विष्णुवल्लभा॥सुरेज्या सु
रसा ज्ञेया कायस्था सुरदुंदुभी॥सुरभिर्बहुपत्री च मंजरीसा हरिप्रि
या॥अपेतराक्षसी श्यामा गौरी त्रिदशमंजरी॥भूतघ्नी पूतपत्री च रे
याचैकोनविंशतिः॥तुलसी कटुतिक्तोष्णा तुलसी श्लेष्मवातजित्॥
जंतुभूतक्रिमिहरा रुचिकृद्वातशांतिकृत्॥तुलसीसाधारणगुण॥
कृष्णा तु कृष्णतुलसी श्वेता लक्ष्मीः सिताह्वया॥तुलसी उभया च कास
वातक्रिमिवमिभूतापहारिणी पूता॥दोन्ही तुलसी॥एरंडुतुलसी॥
॥मरुवः खरपत्रस्तु गंधपत्रः फणिज्जकः॥बहुवीर्यः शीतलकः सु
राह्वश्च समीरणः॥जंबीरः प्रस्थकुसुमो ज्ञेयो मरुवकस्तथा॥आज
न्मसुरभिपत्रो मरीचश्च त्रयोदश॥मरुवः कटुतिक्तोष्णः कृमिकुष्ठ
विनाशनः॥विड्बंधाध्मानशूलघ्नो मांद्यत्वग्दोषनाशनः॥मरुवा॥
द्विधा मरुवकः प्रोक्तः श्वेतश्चैव सितेतरः॥श्वेतो भेषजकार्ये स्यादप
रः शिवपूजने॥द्विधा मरुवक॥अर्जकः क्षुद्रतुलसी क्षुद्रपर्णो मुखा
र्जकः॥उग्रगंधश्च जंबीरः कुठेरश्च कठिंजरः॥आजवला॥कगो
रले॥सितार्जकस्तु वैकुंठो वटपत्रः कुठेरकः॥जंबीरो गंधबहुलः
सुमुखः कटुपत्रकः॥पांढरा आजवला॥कृष्णार्जकः कालमालो मा
लूकः कृष्णमालुकः॥स्यात्कृष्णमल्लिका प्रोक्ता गरघ्नो वनबर्बरः॥
काला आजवला॥कवियकगोरले॥अर्जकास्त्रिकटूष्णाः स्युः क
फवातामयापहाः॥नेत्रामयहरा रुच्याः सुखप्रसवकारकाः॥त्रि
विधअर्जकगुण॥वनबर्बरिकान्या तु सुगंधिः सुप्रसन्नकः॥दोषक्ले
शी विषघ्नश्च सुमुखः सूक्ष्मपत्रकः॥निद्रालुः शोफहारी च सुवक्त्र
श्च दशाह्वयः॥वनबर्बरिका चोष्णा सुगंधा कटुका च सा॥पिशाचवां
तिभूतघ्नी घ्राणसंतर्पणी परा॥आजवलाभेद॥सुगंधिअजरा॥इत्य
र्जकाः॥गंगापत्री तु पत्री स्यात्सुगंधा गंधपत्रिका॥गंगापत्री कटूष्णा
च वातजिद्व्रणरोपणी॥गंगावती॥बहुगंधारी॥पाची मरकतपत्री ह
रितलता हरितपत्रिका पत्री॥सुरभिर्मल्लारिष्टा गारुत्मतपत्रिका चै
व॥पाची कटुर्हिमा तिक्ता कफवातामयापहा॥ग्रहभूतविका

रकारीत्वग्दोषप्रशमनीव्रणेषुहिता॥पाचि॥पच्चे॥वालकंवारिप
र्यायैरुक्तंह्रीवेरकंतथा॥केश्यंवज्रमुदीच्यंचपिंगचललनाप्रियं॥
बालंचकुंतलोशीरंकचामोदंशशींदुधा॥बालकंशीतलंतिक्तंपि
त्तवांतितृषापहं॥ज्वरकुष्ठातिसारघ्नंकेश्यंश्वित्रव्रणापनुत्॥करं
बालु॥मुंडिवाल॥बर्बरःसुमुखश्चैवगरघ्नःकृष्णबर्बरः॥सुकंद
नोगंधपत्रःपूतगंधःसुराहकः॥बर्बरःकटुकोष्णश्चसुगंधिर्वांति
नाशनः॥विसर्पविषविध्वंसीत्वग्दोषशमनस्तथा॥कालीबाब
रि॥सुरपर्णदेवपर्णवीरपर्णसुगंधिकं॥मंचिपत्रंसूक्ष्मपत्रंदे
वार्हगंधपत्रकं॥कटूष्णंसुरपर्णंचक्रिमिश्वासबलासजित्॥
दीपनंकफवातघ्नंवर्ण्यबालहितंतथा॥सुरपनि॥मंचिपत्रे॥
आरामशीतलानंदाशीतलासासुनंदनी॥रामाचैवमहानंदागं
धाढ्यारामशीतला॥आरामशीतलातिक्ताशीतलापित्तहारिणी
॥दाहशोषप्रशमनीविस्फोटव्रणरोपणी॥आरामशीतला॥इति
पत्राणि॥पाथोजंकमलंनभंचनलिनांभोजांबुजन्मांबुजंश्रीपद्मां
बुरुहाब्जपद्मजलजान्यंभोरुहंसारसं॥पंकाज्जंसरसीरुहंचकु
टकंपाथोरुहंपुष्करंवार्जंतामरसंकुशेशयकजेकंजारविंदंतथा॥
शतपत्रंबिसकुसुमंसहस्रपत्रंमहोत्पलंवारिरुहं॥सरसिजसलि
लजपंकेरुहराजीवावेदवह्निमिता॥कमलंशीतलंस्वादुरक्तपित्त
श्रमार्त्तिनुत्॥सुगंधिभ्रांतिसंतापशांतिदंतर्पणपरं॥कमल॥पुंड
रीकंश्वेतपत्रंसिताब्जंश्वेतवारिजं॥हरिनेत्रंशरत्पद्मंशारदंशंभुव
ल्लभं॥पुंडरीकंहिमंतिक्तंमधुरंपित्तनाशनं॥दाहास्रश्रमदोषघ्नं
पिपासादोषनाशनं॥पांढरेंकमल॥बिलियत्तावरे॥कोकनदमरु
णकमलंरक्तांभोजंचशोणपद्मंच॥रक्तोत्पलमरविंदंरविप्रियंरक्त
वारिजंवसवः॥कोकनदंकटुस्तिक्तंमधुरंशिशिरंचरक्तदोषहरं॥
पित्तकफवातशमनंसंतर्पणकारणंवृष्यं॥रक्तकमल॥केदावरे॥उ
त्पलंनीलकमलंनीलाब्जंनीलपंकजं॥नीलपद्मंचबाणाहूंनी
लादिकमलाभिधं॥नीलाब्जंशीतलंस्वादुसुगंधिःपित्तनाशकृ
त्॥रुच्यंरसायनेश्रेष्ठंदेहदार्ढ्यंचकेश्यतं॥नीलकमल॥करिप

तांबरे॥ईषत्श्वेतंपद्मंनलिनंचतदुक्तमीषदारक्तं॥उत्पलमापी
नीलंत्रिविधमितीदंभवेत्कमलं॥पद्मिनीनलिनीप्रोक्ताकुटंपि
न्यब्जिनीतथा॥इत्थंतत्पद्मपर्यायनाम्नाज्ञेयाप्रयोगतः॥पद्मिनी
मधुरातिक्ताकषायाशिशिरापरा॥पित्तक्रिमिशोषवांतिभ्रांतिसं
तापशांतिकृत्॥पद्मिनी॥तांबरेयभेद॥पद्मबीजंतुपद्माक्षंगालो
ढ्यंकंदलीचसा॥भेंडाक्रौंचादनीक्रौंचासामास्यात्पद्मकर्कटी॥प
द्मबीजंकटुस्वादुपित्तछर्दिकरंपरं॥दाहास्रदोषशमनंपाचनंरु
चिकारकं॥पद्माक्षःभाषाहूयं॥मृणालंपद्मनालंचमृणालीचमृणा
लिनी॥विसंचपद्मतंतुश्चबिसिनीनलिनीरुहं॥मृणालंशिशिरंति
क्तंकषायंपित्तदाहजित्॥मूत्रकृच्छ्रविकारघ्नंरक्तवांतिहरंपरं॥क
मलतंतु॥कमलदनूलु॥पद्मकंदस्तुशालूकंपद्ममूलंकटाहूयं॥
शालीनंचजलूकास्यात्वदिनूषषडाहूयं॥शालूकंकटुविष्टंभिरूक्षं
रुच्यंकफापहं॥कषायकासपित्तघ्नंतृष्णादाहनिवारणं॥कमलकं
द॥किंजल्कंमकरंदंचकेसरंपद्मकेसरं॥किंचित्पीतंपरागंवाम
धुचांपेयकंनवं॥किंजल्कंमधुरंरूक्षंकटुरास्यव्रणापहं॥शि
शिरंरुच्यपित्तघ्नंतृष्णादाहनिवारणं॥पद्मकेसरभाषाहूय॥इ
तिकमलानि॥अनूष्णंचोत्पलंचैवरात्रिपुष्पंजलाहूयं॥हिमा
ब्जंशीतजलजंनिशाफुल्लंचसप्तधा॥उत्पलंशिशिरंस्वादुपित्त
रक्तार्तिदोषनुत्॥दाहश्रमवमिभ्रांतिक्रिमिज्वरहरंपरं॥उत्प
ल॥मेदिलु॥धवलोत्पलंतुकुमुदंकल्हारंकैरवंचशीतलकं॥श
शिकांतमिंदुकमलंचंद्राब्जंचंद्रिकांबुजंचनव॥कुमुदंशीतलं
स्वादुपाकेतिक्तंकफापहं॥रक्तदोषहरंदाहश्रमपित्तप्रशांतिकृ
त्॥पांढरेंउत्पल॥बिलियनेईदिलु॥नीलोत्पलमुत्पलकंकुवल
यमिंदीवरंचकंदोत्थं॥सौगंधिकंसुगंधंकुड्मलकंचासितोत्पलंन
वधा॥नीलोत्पलमतिस्वादुशीतंसुरभिसौख्यकृत्॥पाकेतुतिक्त
मत्यंतंरक्तपित्तापहारकं॥नीलोत्पलकं॥नेईदिलु॥उत्पलिनीकै
रविणीकुमुद्वतीकुमुदिनीचचंद्रेष्टा॥कुवलयिनींदीवरिणीनीलो
त्पलिनीचविज्ञेया॥उत्पलिनीहिमातिक्ता…ग्रहारिणीचपि

त्तघ्नी॥ तापकृत्कंकासतृष्णाश्रमवमिशमनी च विज्ञेया॥ उत्पलिनी॥ उत्पलभेद॥ इति उत्पलानि॥ पुष्पद्रवः पुष्पसारः पुष्पश्चेन स्रपुष्पजः॥ पुष्पनिर्यासकश्चैव पुष्पांबुजः षडाहृयः॥ पुष्पद्रवः सुरभिः शीतकषायो गौल्यो दाहश्रमार्तिवमिमोहमुखामयघ्नः॥ तृष्णार्तिपित्तकफदोषहरः सरश्च संतर्पणश्चिरमरोचकहारकश्च॥ पंनीर॥ जातीभानि मृदु मनोज्ञमधुरामोदो मुहूर्तद्वयं द्वैगुण्येन वमल्लिकामद्करी गंधाधिका यूथिका॥ एकाहं नवमालिका महमहत् द्व्यहं त्र्यहं पंचकं तीव्रामोदमथाष्टवासरमितामोदान्विता केतकी॥ इत्थं नानाप्रथितसुमनः पत्रपद्माभिधानप्रस्थानोक्तिप्रगुणिततयातद्गुणाख्याप्रवीणं॥ वाचो युक्तिस्थिरपरिमलं वर्गमेनं पठित्वा नित्यामोदैर्मुखसरसिजं वासयित्वा सुवेद्यः॥ स्थैर्ये शैलशिलोपमान्यपिश नैरासाद्य तद्भावनां भेद्यत्वं यमिनां मनांस्यपि यया प्रख्यात गस्याश्रये॥ तेषां भूषयतां सुरादिकशिरः पत्रप्रसूनात्मनां वर्गोयं वसति र्मनांसुमनसां उत्तंस वर्गाख्यया॥ लोकानस्पर्शनयोगतः प्रसमरण्यामोदयंत्यंजसा प्रोत्फुल्लानि चयद्यशांसि विशदान्युत्तंसयंते दिशः॥ तस्यायंदशमः कृतो स्थितिमगाद्वर्गो नृसिंहेशितुः सूरींदोः करवीरकादिरभिधासंभारचूडामणौ॥ इति श्रीनिघंटुराजचूडामणौ करवीरादिवर्गो दशमः समाप्तः॥ अथ आम्रादिवर्गः॥ आम्राः पंचविधाः प्रोक्ता जंबूचैवचतुः स्मृता॥ पनसः कदली पंच नालिकेरद्वयं तथा॥ खर्जूरी पंचधा चैव चारो भल्लातरायणी॥ दाडिमं तिंदुकोचाथ अक्षोटः पीलुकं द्विधा॥ पारेवतो मधूकं तु द्विधा भव्यारुकौ क्रमात्॥ द्राक्षा त्रिधाथ कर्मारः परुषः पिप्पलो वटः॥ वटी अश्वत्थिकाम्लश्च स्तथा चोदुंबरं त्रिधा॥ तत्त्वचा वदरं चाब्धि बीजपूरं त्रिधामतं॥ आमलक्यो द्विधा चैव चिंचा चिंचारसस्तथा॥ आम्रातकोथ नारंगो निंबूजंबीरकद्वयं॥ कपित्थस्तुंबरश्चाथ रुद्राक्षो बिल्वशल्लकी॥ कनकः कर्कटश्चैव द्विधा श्लेष्मातकस्तथा॥ मुष्ककः करमर्दश्च तथा तेजफलस्तथा॥ विकंटकः शिवा सप्तप्रसः पूगोष्टधा स्मृतः॥ सप्तधा नाग

वल्लीस्याच्चूर्णवेवाष्टधास्मृतं॥ उक्ताआम्रादिके वर्गेवेदचंद्रैंदुसं
ख्यया॥ आम्रः कामशरश्चूतोरसालः कामवल्लभः॥ कामांगः सह
कारश्चकीरेष्टोमाधवद्रुमः॥ भृंगाभीष्टः सीधुरसोमधूलीकोकि
लोत्सवः॥ वसंतदूतोम्लफलोमदाढ्योमन्मथालयः॥ मध्वावा
सः सुमदनः पिकरागोनृपप्रियः॥ प्रियांबुः कोकिलावासः सप्रोक्त
स्त्रिकराह्वयः॥ आम्रः कषायाम्लरसः सुगंधिः कंठामयघ्नोग्निक
रश्चबालः॥ पित्तप्रकोपानिलरक्तदोषप्रदः पटुत्वादिरुचिप्रदश्च
॥ बालांबा॥ एलेयमाविनकायि॥ अपिच॥ बालंपित्तानिलकफ
करंतच्चबद्धास्थिताद्दकूपक्वंदोषत्रितयशमनंस्वादुपुष्टिंगुरुश्च
॥ दत्तेधातुप्रचयमधिकंतर्पणंकांतिकारिख्यातंतच्चाम्रमशमकृ
तोचूतजातंफलंस्यात्॥ आंबाफल॥ माविनफल॥ इतिसाधारण
आम्रः॥ कोशाम्रश्चघनस्कंधोवनाम्रोजंतुपादपः॥ सुक्ष्माम्रश्चेति
रक्ताम्रोलाक्षावृक्षः सुरक्तकः॥ कोशाम्रमम्लमनिलापहरंकफा
र्त्तिपित्तप्रदंगुरुविदाहविशोफकारि॥ पक्वंभवेन्मधुरमीषदपा
रमस्लंपट्वादियुक्तरुचिदीपनपुष्टिबल्यं॥ झरीआंबा॥ जूरिमाचु
॥ राजाम्रोन्योराजफलः स्मराम्रः कोकिलोत्सवः॥ मधुरः कोकिला
नंदः कामेष्टोनृपवल्लभः॥ राजांबा॥ रायमच्चु॥ अन्योमहाराजचू
तोमहाराजाम्रकस्तथा॥ स्थूलाम्रोमन्मथावासष्टंकोनीलकपित्थ
कः॥ कामायुधः कामफलोराजपुत्रोनृपात्मजः॥ महाराजफलः का
मोमहाचूताल्लयोदश॥ महाराजांबा॥ महराजमाचु॥ तस्यापिश्रे
ष्ठतोन्याम्रोरसालोवद्धपूर्वकः॥ ज्ञेयश्चकलताम्रश्चमध्वाम्रोपि
तजाम्रकः॥ वनेज्योमन्मथानंदोमदनेच्छाफलोमुनिः॥ बद्धर
सालुमहाराजआंबा॥ चक्रतलाआंबा॥ राजाम्राः कोमलाः सर्वे
कट्वम्लाः पित्तदाहदाः॥ सुपक्वाः स्वादुमाधुर्याः पुष्टिवीर्यबलप्र
दाः॥ राजाम्रेषुत्रिषुप्रोक्तंसाम्यमेवरसाधिकं॥ गुणाधिकंतुवि
ज्ञेयंपर्यायादुत्तरोत्तरं॥ किंच॥ बालंराजफलंकफास्रपवनश्वा
सार्त्तिपित्तप्रदंमध्यंतादृशमेवदोषबहुलंभूयः कषायाम्लकं॥
पक्वंचेन्मधुरंत्रिदोषशमनंतृष्णाविदाहश्रमाश्वासारोचकमोच

कं गुरु हिमं रुच्याति चूताहूयं॥ तीन्ही राजांबे गुण॥ मुरु राजमा
विन गुण॥ आम्रत्वचा कषाया च मूलं सौगंधिताहृशं॥ रुच्यं संग्रा
हि शिशिरं पुष्पं तु रुचि दीपनं॥ आम्रत्वचा गुण॥ इति आम्रः॥ जं
बूस्तु सुरभिपत्रा नीलफला श्यामला महास्कंधा॥ राजार्हा राज
फला शुकप्रिया मेघमोदिनी नववाहू॥ जंबूः कषायमधुरा श्रमपि
त्तदाहकंठार्त्तिशोषशमनी क्रिमिदोषहंत्री॥ श्वासातिसारकफ
कासविनाशनी च विष्टंभिनी भवति रोचनपाचनी च॥ जांबुक॥
नेरिलु॥ महाजंबू राजजंबूः स्वर्णमाता महाफला॥ शुकप्रिया
कोकिलेष्टा महानीला बृहत्फला॥ महाजंबूरुष्णा स्यमधुरकषा
याश्रमहरा निरस्यत्यास्यस्थं झटिति जडिमानं स्वरकरी॥ विधत्ते
विष्टंभं शमयति च शोषं वितनुते श्रमातीसारान्निःश्वसितकफका
सप्रशमनं॥ महाराय जांबु॥ दोड्ड निरलु॥ काकजंबूः काकफला
नादेई काकवल्लभा॥ भृंगेष्टा काकनीला च ध्वांक्षजंबूर्धनप्रिया॥
काकजंबूः कषायाम्ला पाके तु मधुरा गुरुः॥ दाहश्रमातिसारघ्नी वी
र्यपुष्टिबलप्रदा॥ नदीनीरजांबू॥ नीरेनेरिलु॥ अन्या च भूमिजंबू
र्ह्रस्वफला भृंगवल्लभा ह्रस्वा॥ भूजंबूर्भ्रमरेष्टा पिकभक्षा काष्ठजंबू
श्च॥ भूमिजंबूः कषाया च मधुरा श्लेष्मपित्तनुत्॥ हृद्या संग्राहि ह्र
त्कंठदोषघ्नी वीर्यपुष्टिदा॥ क्षुद्रजंबू॥ किरुनेरिलु॥ इति जंबूभेदाः॥
फनसस्तु महासर्जः फलिनः फलवृक्षकः॥ स्थूलः कंटफलश्चैव
स्यान्मूलफलदः स्मृतः॥ अपुष्पफलदः पूतफलो ह्यंकमितस्
तथा॥ पनसं मधुरं सुपिच्छिलं गुरु हृद्यं बलवीर्यवृद्धिदं॥ श्रम
दाहविशोषनाशनं रुचिकृद्ग्राहि च दुर्जरं फलं स्यात्॥ फणसुपि
कला गुण॥ हलस्सिनहण्णु॥ ईषत्कषायं मधुरं तद्बीजं वातुलं गुरुः
॥ तत्फलस्य विकारघ्नं रुच्यं त्वग्दोषनाशनं॥ फणसबीज गुण॥ ह
लसिनबीज गुण॥ बालं तु नीरसं हृद्यं मध्यपक्वं तु दीपनं॥ रुचिदं
लवणाद्युक्तं फनसस्य फलं स्मृतं॥ हिरिय फणसु॥ हेसिय हलसु
॥ कदली सुफला रंभा सुकुमारा सकृत्फला॥ मोचा गुरुफला हस्ति
विषाणी गुच्छदंतिका॥ काष्ठीरसो वनिःसारा राजेष्टा बालकप्रिया॥

ऊरुस्तंभाभानुफलावनलक्ष्मीश्चषोडश॥बालंफलंमधुरमल्प
तयाकषायंपित्तापहंशिशिररुच्यमथापिनालं॥पुष्पंतदप्यनुग्र
णंक्रिमिहारिकंदपर्णंचमूलशमकंकदलीभवंस्यात्॥अपिच॥
रंभापक्वफलंकषायमधुरंबल्यंचशीतं तथापित्तंचास्रविमर्दनं
गुरुतरंपथ्यंनमंदानले॥सद्यःशुक्रविवृद्धिदंक्लमहरंतृष्णापहं
कांतिदंदीप्ताग्नौसुखदंकफामयकरंसंतर्पणंदुर्जरं॥केल॥कद
ली॥काष्ठकदलीसुकाष्ठावनकदलीकाष्ठिकाशिलारंभा॥दारुक
दलीफलाढ्यावनमोचाचाश्मकदलीच॥स्यात्काष्ठकदलीरुच्यार
क्तपित्तहराहिमा॥गुरुर्मंदाग्निजननीदुर्जरामधुरापरा॥काष्ठके
लें॥मरबाले॥गिरिकदलीगिरिरंभापर्वतमोचाप्यरण्यकदली
च॥बहुबीजावनरंभागिरिजागजवल्लभाभिहिता॥गिरिकदली
मधुरहिमावलवीर्यविवृद्धिदायिनीरुच्या॥तृद्पित्तदाहशोषप्रश
मनकर्त्रीचदुर्जराचगुरुः॥रानकेलि॥काबाले॥अन्यासुवर्णक
दलीसुवर्णरंभाचकनकरंभाच॥पीतासुवर्णमोचाचंपकरंभासुरं
भिकासुभगा॥हेमफलास्वर्णफलाकनकस्तंभाचपीतरंभाच॥गौ
राचगौररंभाकांचनकदलीसुरप्रियाषड्भूः॥सुवर्णमोचामधुराहि
माचस्वल्पाशनेदीपनकारिणीच॥तृष्णापहादाहविमोचनीचक
फावहावृष्यकरीगुरुश्च॥सोनेकेलि॥कोंकणेप्रसिद्धा॥इतिकद
ल्यः॥नारिकेलोरसफलःसतुंगःकूर्चशेखरः॥दृढनीलोनीलतरु
र्मंगल्योच्चतरुस्तथा॥तृणराजस्कंधतरुर्दाक्षिण्यात्योदुरारुहः॥
लांगलीत्र्यंबकफलस्तथादृढफलस्थितिः॥नालिकेरोगुरुःस्नि
ग्धःशीतःपित्तविनाशनः॥अर्धपक्वस्तृषाशोषशमनोदुर्जरःप
रः॥नालिकेरसलिलंलघुबाल्येशीतलंचमधुरंदरपाके॥पित्त
पीनसतृषाश्रमदाहशांतिशोषशमनंसुखदायि॥पक्वमेतदपि
किंचिदिहोक्तंपित्तकारिरुचिदंमधुरंच॥दीपनंबलकरंगुरुवृष्यं
वीर्यवर्द्धनमिदंतुवदंति॥नारियलरसु॥नारियलरस॥खुबरंना
लिकेरस्यस्निग्धंगुरुचदुर्जरं॥दाहविष्टंभदंरुच्यंबलवीर्यविवर्द्ध
नं॥नारियलखोबरें॥मधुनालिकेरकोयोमाक्षीकफलश्चमधुफ

लोहितजफलः॥मासिकफलोमृदुफलोबहुकूर्चोह्रस्वफलश्च
सुगणितोह्नः॥मधुरंमधुनालिकेरमुक्तंशिशिरंदाहतृषार्तिपित्त
हारि॥बलपुष्टिकरंचकांतिमग्र्यंकुरुतेवीर्यविवर्द्धनंचरुच्यं॥किं
च॥मध्वीकंनालिकेरीफलमतिमधुरंदुर्जरंजंतुकारिस्निग्धंवा
तातिसारश्रमशमनमथध्वंसनंवह्निदीप्तेः॥आमश्लेष्मप्रकोपं
जनयतिकुरुतेचारुकांतिंबलंचस्थैर्यंदेहस्यधत्तेघनमदनक
लावर्द्धनंपित्तनाशं॥महूनारियलभाषाहूयं॥कोंकणेप्रसिद्धा॥ख
र्जूरीतुखरस्कंधादुष्प्रधर्षादुरारुहा॥निःश्रेणीचकषायीचयवने
ष्टाहरिप्रिया॥खर्जूरीतुकषायाचपक्वागौल्यकषायका॥पित्तघ्नी
कफदाचैवकृमिकृद्दृष्यबृंहणी॥सिंधी॥ईचिलु॥मधुखर्जूरि
त्वन्यामधुकर्कटिकाचकोककर्कटिका॥कंटकिनीमधुफलि
कामाध्वीमधुराचमधुरखर्जूरी॥मधुखर्जूरीमधुरावृष्यासं
तापपित्तशांतिकरी॥शिशिराचजंतुकरीबहुवीर्यविवर्द्धनंत
नुते॥मिष्टसंधी॥सींहईचिलु॥भूखर्जूरीभुक्तावसुधाखर्जूरि
काचभूमिखर्जूरी॥भूखर्जूरीमधुराशिशिराचविदाहपित्तह
रा॥लघुसिंधी॥किरिईचिलु॥दीप्याचपिंडखर्जूरीस्थलपिंडा
मधुश्रवा॥फलपुष्पस्वादुपिंडाहयभक्षारसाभिधा॥तथान्या
राजखर्जूरीराजपिंडानृपप्रिया॥मुनिखर्जूरिकावन्याराजेष्टा
रिपुसंमिता॥पिंडखर्जूरिकायुग्मंगौल्यंस्वादेहिमंगुरु॥पित्त
दाहार्तिश्वासघ्नंश्रमहृद्वीर्यवृद्धिदं॥पिंडखर्जूरीदोनि॥एरंडुपिं
डखर्जूरी॥अन्यच्च॥दाहघ्नीमधुराश्रपित्तशमनीतृष्णार्त्तिदोषा
पहाशीताश्वासकफश्रमोदयहरासंतर्पणीपुष्टिदा॥वह्नेर्मांद्य
करागुरुर्विषहराहृद्याचधत्तेबलंस्निग्धावीर्यविवर्द्धनीचक
थितापिंडाख्यखर्जूरिका॥पिंडखर्जूरिगुण॥इतिखर्जूरिकानि
॥चारोखदुःखरस्कंधोललनाश्चरकस्तथा॥बहुबल्कःप्रियालस्
श्चनद्रुस्तापसप्रियः॥स्नेहबीजश्चापवटोभसबीजःकरेंदुधः॥
चारस्यचफलंपक्वंवृष्यंगौल्याम्लकंगुरु॥तद्बीजंमधुरंवृष्यंपि
त्तदाहार्तिनाशनं॥चारबी॥चारबीज॥भल्लातकोग्निर्दहनस्तप

नोरुष्करोनलः॥क्रिमिघ्नस्तैलबीजश्चवातारिःस्फोटबीजकः॥१
शग्बीजोथतुर्बीजोभल्लातोबीजपादपः॥वह्निर्वरुतरुश्चेतिविज्ञेयः
षोडशाह्वयः॥भल्लातकःकटुस्तिक्तःकषायोष्णःक्रिमीञ्जयेत्॥क
फवातोदरानाहमेहदुर्नामनाशनः॥अपरः॥भल्लातस्यफलंकषा
यमधुरंकोष्णंकफार्तिश्रमश्वासानाहविबंधशूलजठराध्मान
क्रिमिध्वंसनं॥तन्मज्जाचविशोषदाहशमनीपित्तापहस्तर्पणोवा
तारोचकहारिदीप्तिजननःपित्तापहस्त्वंजसा॥भिलावा॥गोडंबी
॥केरबीज॥राजादनीराजफलोक्षीरवृक्षोनृपद्रुमः॥निंबबीजो
मधुफलोकपीष्टेमाधवोद्भवः॥क्षीरीगुच्छफलःप्रोक्तःशुकेष्टो
राजवल्लभः॥श्रीफलोथदृढस्कंधःक्षीरशुक्लस्त्रिपंचधा॥राजा
दनीतुमधुरापित्तहृद्गुरुतर्पणी॥तृष्णास्थौल्यकरीहृद्यासुस्नि
ग्धामेहनाशकृत्॥रायणी॥रेवणे॥मारिले॥खिरनी॥गौर्जरेप्र
सिद्धा॥दाडिमोदाडिमीसारःकुट्टिमःफलषाडवः॥करकोरक्त
बीजश्चसुफलोदंतबीजकः॥मधुबीजःकुचफलोरोचनःशुकव
ल्लभः॥मणिबीजस्तथावल्कफलोरक्तफलश्चसः॥सुनीलोनील
पत्रश्चज्ञेयःसप्तदशाह्वयः॥दाडिमंमधुरमम्लकषायंकासवात
कफपित्तविनाशि॥ग्राहिदीपनकरंचलघूष्णंशीतलंश्रमहरंरु
चिदायि॥दाडिमंद्विविधमीरितमार्यैरम्लमेकमपरंमधुरंच॥
तत्रवातकफहारिकिलाम्लंतापहारिमधुरंलघुपथ्यं॥दाडिम॥
दालिंब॥तिंदुकोनीलसारश्चकालस्कंधोतिमुक्तकः॥स्फूर्जकोर
मणश्चैवस्फूर्जनःस्यंदनाह्वयः॥तिंदुकस्यकषायःस्यात्संग्राही
वातकृत्परः॥पक्वस्तुमधुरःस्निग्धोदुर्जरःश्लेष्मलोगुरुः॥टेंबुरु॥
रुंबुरु॥तिंदुकोन्यःकालपीलुःकाकांडःकाकतिंदुकः॥काकस्फू
र्जश्चकाकांडःकुलाहुःकाकबीजकः॥काकतिंदुःकषायोम्लोगुरु
र्वातविकारकृत्॥पक्वस्तुमधुरःकिंचित्कफकृत्पित्तवातहृत्॥
कांदटेंबुरु॥किरिटंबुरु॥असोटःपार्वतीयश्चफलस्नेहोगुडाश
यः॥कीरेष्टःकंदरालश्चमधुमज्जावृहच्छदः॥असोटोमधुरोब
ल्यःस्निग्धोष्णोवातपित्तजित्॥रक्तदोषप्रशमनःशीतलःकफको

पनः॥आखोटः हिमवते प्रसिद्धः॥पीलुःशीतःसहस्रंसीधानीगुड
फलस्तथा॥विरेचनफलःशाखीश्यामःकरभवल्लभः॥अंकाह्वः
कटुकःपीलुःकषायोमधुराम्लकः॥सरःस्वादुश्चगुल्मार्शःशम
नोदीपनःपरः॥लघुपीलु॥मिरियें॥उ॰गनि॥अन्याचैवबृहत्पी
लुर्महापीलुर्महाफलः॥राजपीलुर्महावृक्षोमधुपीलुःषडाह्वयः
॥मधुरस्तुमहापीलुर्दृष्योविषविनाशनः॥पित्तप्रशमनोरुच्य
स्त्वामघ्नोदीपनीयकः॥वडिलपीलु॥दोडुपीलु॥गुर्जरेप्रसिद्धा
॥पारेवतंतुरैवतमारेवतकंचकिंचरैवतकं॥मधुफलममृतफला
ख्यंपारेवतकंचसप्ताह्वं॥पारेवतंतुमधुरंक्रिमिवातहारिवृष्यंतृ
षाज्वरविदाहहरंचहृद्यं॥मूर्छाभ्रमश्रमविशोषविनाशकारिस्नि
ग्धंचरुच्यमुदितंबहुवीर्यदायि॥साधारणउत्तरी॥उत्तरिगे॥म
हापारेवतंचान्यत्स्वर्णपारेवतंतथा॥साम्राणिजंखारिकंचरक्त
रैवतकंचतत्॥बृहत्पारेवतंप्रोक्तंद्वीपजंद्वीपखर्जुरि॥महापा
रेवतंगोल्यंबलकृत्पुष्टिवर्द्धनं॥वृष्यंमूर्छाज्वरघ्नंचपूर्वोक्ताद
धिकंगुणे॥वडिलउत्तरि॥दोडउत्तरिगे॥मधुकोमधुवृक्षःस्या
त्मधुष्ठीलोमधुस्रवः॥गुडपुष्पोलोध्रपुष्पोवानप्रस्थश्चमाध
वः॥मधुकंमधुरंशीतंपित्तदाहश्रमापहं॥वातुलंजंतुदोषघ्नंवी
र्यपुष्टिविवर्द्धनम्॥मद्दूइपे॥अन्योजलमधूकोमंगल्योदीर्घ
पत्रकोमधुपुष्पः॥क्षौद्रप्रियःपतंगःकीरेष्टोगैरिकाख्यश्च॥ज्ञे
योजलमधूकस्तुमधुरोव्रणनाशनः॥वृष्योवांतिहरःशीतोबल
कारीरसायनः॥ ॥ ॥ जलमधूक॥जलमहू॥नीरेइप्पे
॥मधूकपुष्पंमधुरंचवृष्यंहृद्यंहिमंपित्तविदाहहारि॥फलंच
वातामयपित्तनाशिज्ञेयंमधूकोत्थद्वयंचमेतत्॥दोड्डीमद्दु॥यर
डुइप्पे॥भव्यंभव्यंभविष्यच्चभावनंवक्त्रशोधनं॥तस्यापिकुल
बीजंचनन्द्यलोमफलंमतं॥भव्यमम्लंकटूष्णंचबालंवातकफा
पहं॥पक्वंतुमधुराम्लंचरुचिकृत्समशूलहृत्॥नीवेकोंकणेप्र
सिद्धा॥आरुकंवीरसेनंचवीरंवीरारुकंतथा॥तत्रविंद्याच्चतु
र्जातीपत्रपुष्पादिभेदतः॥आरुकाणिचसर्वाणिमधुराणिहिमानि

च॥अर्शप्रमेहगुल्मास्रदोषविध्वंसनानिच॥आरुक॥हिमवने
प्रसिद्धं॥द्राक्षाचारुफलाकृष्णाप्रियालाताप्रसप्रिया॥गुच्छफ
लारसालाचज्ञेयामृतफलाचसा॥द्राक्षातिमधुराम्लाचशीता
पित्तार्त्तिदाहजित्॥मूत्रदोषहरारुच्यावृष्यासंतर्पणीपरा॥द्रा
क्षा॥द्राक्षे॥साधारणद्राक्षा॥अन्याकपिलद्राक्षामृद्वीकागोस्त
नीचकपिलफला॥अमृतरसादीर्घफलामधुवल्लीमधुफलाम
धूलीच॥हरिताचहराहूरासुफलामृद्वीहिमोत्तरापथिका॥हैम
वतीशतवीर्याकाश्मीरीगजराजमहिगणिता॥गोस्तनीमधुरा
शीताहृद्याचमदहर्षणी॥दाहमूर्छाज्वरश्वासतृषाहृल्लासना
शिनी॥गोस्तनीद्राक्षा॥बेडगणद्राक्षे॥अन्यासाकाकलीद्राक्षा
जांबुकाचफलोत्तमा॥लघुद्राक्षाचनिर्बीजासुवृत्तारुचिकारिणी
॥शिशिराश्वासहृल्लासनाशिनीजनवल्लभा॥लघुद्राक्षा॥चिकु
द्राक्षे॥द्राक्षाबालफलंकटूष्णविशदंपित्तास्रदोषप्रदंमध्यंचा
म्लरसंरसांतरगतेरुच्यातिवन्हिप्रदं॥पक्वंचेन्मधुरंतथाम्लस
हितंतृष्णास्रपित्तापहंपक्वंशुष्कतमंश्रमार्तिशमनंसंतर्पणंपु
ष्टिदं॥अपरंच॥शीतापित्तास्रदोषंदमयतिमधुरास्निग्धपा
केतिरुच्याचक्षुष्याप्यासकासश्रमवमिशमनीशोफतृष्णाज्व
रघ्नी॥दाहाध्मानभ्रमादीनपनयतिपरातर्पणीपक्वशुष्काद्रा
क्षासुक्षीणवीर्यानपिमदनकलाकेलिदक्षान्विधत्ते॥इतिद्रा
क्षानामगुण॥कर्मार कर्मरःकःपीतफलःकर्मरश्चमुद्गरकः॥मु
द्गरफलश्चधाराफलकस्तुकर्मारकश्चैव॥कर्मारकोम्लउष्ण
श्चवातहृत्पित्तकारकः॥पक्वस्तुमधुराम्लःस्यात्बलपुष्टिरु
चिप्रदः॥कर्मार॥कोंकणेप्रसिद्धः॥परूषकंनीलपर्णगिरिपी
लुपरावरं॥नीलमंडलमल्पास्थिपरुषंचपरुस्तथा॥परुषमम्ल
कटुकंकफार्त्तिजिद्वातापहंतत्पलमेवपित्तदं॥सोष्णंचपक्वंमधुरं
रुचिप्रदंपित्तापहंशोफहरंचपीतं॥परुषका॥बेट्हा॥दोगलि॥अ
श्वत्थश्चाच्युतावासश्चलपत्रःपवित्रकः॥शुभदोबोधिवृक्षश्चयाज्ञ
कोगजभक्षकः॥श्रीमान्क्षीरद्रुमोविप्रोमंगल्यःश्यामलश्चसः॥

पिप्पलोगुह्यपत्रश्चसेव्यःसत्यःशुचिद्रुमः॥चैत्यद्रुमोधर्मवृक्षश्रं
द्रःकरमिनाह्वयः॥पिप्पलःसुमधुरस्तुकषायःशीतलश्चकफपि
त्तविनाशी॥रक्तदाहशमनःसहिसद्योयोनिदोषहरणःकिल
पक्कः॥अन्यच्च॥अश्वत्थवृक्षस्यफलानिपक्वान्यतीवहृद्यानिच
शीतलानि॥कुर्वंतिपित्तास्रविषार्तिदाहंविछर्दिशोषारुचिदोष
नाशं॥पिंपलु॥अरलि॥स्याद्थवटोजटालोन्यग्रोधोरोहिणोव
रोहीच॥विटपीरक्तफलश्चस्कंधरुहोमंडलीमहाछायः॥शृंगी
यक्षावासोयक्षतरुःपाद रोहिणोनीलः॥क्षीरीशिफारुहःस्या
द्बहुपादःसतुवनस्पतिर्नवभूः॥वटःकषायमधुरःशिशिरःक
फपित्तजित्॥ज्वरदाहतृषामोहव्रणशोफापहारकः॥वट॥आ
ल॥नदीवटोयज्ञवृक्षःसिद्धार्थोवटकोवटी॥अमरासंगिनीचै
वक्षीरकाष्ठाचकीर्तिता॥वटीकषायमधुराशिशिरापित्तहारि
णी॥दाहतृष्णाश्रमश्वासविछर्दिशमनीपरा॥दुजावडु॥गा
लिआल॥अश्वत्थीलघुपत्रीस्यात्पवित्राह्रस्वपत्रिका॥पिप्पली
कावनस्थाचक्षुद्राचाश्वत्थसंनिभा॥अश्वत्थिकातुमधुराकषा
याचास्रपित्तजित्॥विषदाहप्रशमनीगुर्विण्याहितकारि
णी॥अश्वत्थी॥हेणरलि॥प्लक्षःकपीतनःक्षीरीसुपार्श्वोथक
मंडलुः॥शृंगीवरोहशाखीचगर्दभांडःकपीतकः॥दृढप्ररोहः
प्लवकःप्लवंगश्चमहाबलः॥प्लक्षश्चेवापरोह्रस्वःसुशीतःशी
तवीर्यकः॥पुंड्रोमहावरोहश्चह्रस्वपर्णस्तुपिंपरिः॥भिद्रो
मंगलछायोज्ञेयोद्वाविंशधाभिधः॥प्लक्षःकटुकषायश्चशि
शिरोरक्तदोषजित्॥मूर्छाभ्रमप्रलापघ्नोह्रस्वपक्षोविशेषकः
॥पिंप्परि॥बसुरि॥उदुंबरःक्षीरवृक्षोहेमदुग्धःसदाफलः॥का
लस्कंधोयज्ञयोग्योयज्ञीयःसुप्रतिष्ठितः॥शीतवल्कोजंतुफलः
पुष्पशून्यःपवित्रकः॥सौम्यःशीतफलश्चेतिमधुसंज्ञःसमीरि
तः॥उदुंबरंकषायंस्यात्पक्वंतुमधुरंहिमं॥कृमिकृत्पित्तरक्तघ्नंमू
र्छादाहतृषापहं॥अपिच॥औदुंबरंफलमतीवहिमंसुपक्वंपित्ता
पहंचमधुरंश्रमशोफहारि॥आमंकषायमतिदीपनरोचनंचमां

सस्यवृद्धिकरमस्रविकारकारि॥ उंबरु॥ अंजि॥ गूलर॥ नद्योदुंबरिकाचान्यालघुपत्रफलातथा॥ लघुहेमदुग्धाप्रोक्तालघुपूर्वसदाफला॥ लघ्वाद्युदुंबराहूास्याहूाणाहूाचप्रकीर्तिता॥ रसवीर्यविपाकेषुकिंचिन्न्यूनाचपूर्ववत्॥ नदीनीरउदुंबरु॥ नारेअंजि॥ कृष्णोदुंबरिकाचान्याखरपत्रीरराजिका॥ उदुंबरीचकठिनाकुष्टघ्नीफल्गुवाटिका॥ अजास्वीफल्गुनीचैवमलपूष्प्रभेषजा॥ काकोदुंबरिकाचैवध्वांक्षनाम्नीत्रयोदश॥ काकोदुंबरिकाशीतापक्कागौल्याम्लकाकटुः॥ त्वग्दोषपित्तरक्तघ्नीतद्वल्कंचातिसारजित्॥ कालाउदुंबर॥ काअंजि॥ उदुंबरत्वचाशीताकषायाव्रणनाशिनी॥ गुर्विणीगर्भसंरक्षेहितास्तन्यप्रदायिनी॥ उदुंबरत्वचागुण॥ बदरोबदरीकोलःकर्कंधूःफेनिलःस्मृतः॥ सौवीरकोगुडफलोबालेष्टःफलशैशिरः॥ दृढबीजोवृत्तफलःकंटकीचक्रकंटकः॥ सुबीजःसुफलःस्वच्छःसप्रोक्तःसुनिविस्मितः॥ बदरंमधुरंकषायमम्लंपरिपक्कंमधुराम्लमुष्णमेतत्॥ कफकृत्पचनातिसाररक्तश्रमशोषार्तिविनाशनंचरुच्यं॥ साधारणबोर॥ बेरत्॥ बदरस्यपत्रलेपोज्वरदाहविनाशनः॥ त्वचाविस्फोटशमनीबीजंनेत्रामयापहं॥ बदरपत्रादिगुण॥ राजबदरोनृपेष्टोनृपबदरोराजवल्लभश्चैव॥ पृथुकालस्तनुबीजोमधुरफलोराजकोलश्च॥ राजबदरःसुमधुरःशिशिरोदाहार्तिपित्तवातहरः॥ वृष्यश्चवीर्यवृद्धिंकुरुतेशोषश्रमंहरते॥ राजबोर॥ रायबरतरु॥ भूबदरीसितिबदरीवल्लीबदरीचबदरिवल्लीच॥ बहुफलिकालघुबदरीबदरफलीसूक्ष्मबदरीच॥ भूबदरीमधुराम्लाकफवातविकारहारिणीपथ्या॥ दीपनपाचनकर्त्रीकिंचित्पित्तास्रकारिणीरुच्या॥ भूबोरि॥ कोलापुरप्रांतेप्रसिद्ध॥ सूक्ष्मफलोबदरान्योबहुकंटःसूक्ष्मपत्रकोदुस्पर्शः॥ मधुरःशबराहारःशिखिप्रियश्चैवनिर्दिष्टः॥ लघुबदरंमधुराम्लंपक्कंकफवातनाशनंरुच्यं॥ स्निग्धंतुजंतुकारकमीषत्पित्तार्तिदाहदोषघ्नं॥ सुदबोरि॥ किरुपरतरु॥ इतिबदराः॥ बी

जपूरो बीजपूर्णः पूर्णबीजस्तु केसरः॥ बीजकः केसरोम्लश्च मा
तुलुंगः सुपूरकः॥ रुचको बीजफलको जंतुघ्नो दंतुरत्वचः॥ पूर
को रोचनफलो ह्विर्द्वसुनिसंमितः॥ बीजपूरफलमम्लकटूष्णं
श्वासकासशमनं पचनं च॥ कंठशोधनपरं लघु हृद्यं दीपनं च
रुचिकृत्पवनं च॥ तथा च॥ बालं पित्तमरुत्कफास्रकरणं मध्यं च
तादृग्विधं पक्वं वर्णकरं च हृद्यमथनत्तु ष्णाति पुष्टिं बलं॥ शूला
जीर्णविबंधमारुतकफश्वासार्तिमंदाग्निजित् कासारोचकशो
फशांतिरमिदं स्यान्मातुलिंगं सदा॥ अन्यच्च॥ त्वक्तिक्ता दुर्जरा स्या
त्कृमिकफपवनध्वंसिनी स्निग्धमुष्णं मध्यं शूलार्तिपित्तप्रशमन
मखिलारोचकघ्नं च गौल्यं॥ वातार्तिघ्नं कटाहं जठरगदहरं केसरं
दीप्यमम्लं बीजं तिक्तं कफार्शःश्वयथुशमकरं बीजपूरस्य पथ्यं॥
माहुलिंग॥ माधला॥ वनबीजपूरकोन्यो वनजो वनपूरकश्च व
नबीजः॥ अन्यम्लागंधाढ्या वनोद्भवा देवदूती च॥ पीना च देवदा
सी देवेष्टा मातुलिंगिका चैव॥ पवनी महाफला च स्यादियमिति वे
दभूमिमिता॥ अम्लः कटूष्णो वनबीजपूरो रुचिप्रदो वातविनाश
नश्च॥ स्यादम्लदोषः कृमिनाशकारी कफापहः श्वासनिषूदनश्च
॥ वनमाहुलिंग॥ कामाधवल॥ अथ मधुरबीजपूरो मधुपर्णी मधु
रकर्कटी मधुवल्ली॥ मधुकर्कटी मधुरफला महाफला वर्द्धमाना
च॥ मधुकर्कटी तु मधुरा शिशिरा दाहनाशनी॥ त्रिदोषशमनी रु
च्या वृष्या च गुरु दुर्जरा॥ मधुकाकडी॥ सरवरे माधवल॥ इति मा
तुलिंगाः॥ आमलकी वयस्था च श्रीफला धात्रिका तथा॥ अमृता
च शिवा शांता शीतामृतफला तथा॥ जातीफला च धात्रेयी ज्ञेया
धात्रीफला तथा॥ वृष्या वृत्तफला चैव रोचनी च चतुर्दश॥ आमलकं
कषायाम्लं मधुरं शिशिरं लघु॥ दाहपित्तवमीमेहशोफघ्नं च रसा
यनम्॥ अपि च॥ कटु मधुरकषायं किंचिदम्लं कफघ्नं रुचिकर
मतिशीतं हंति पित्तास्रतापं॥ श्रमवमनविबंधाध्मानविष्टंभदो
षप्रशमनममृताभं चामलक्याः फलं स्यात्॥ आवला॥ नेल्लि॥ अ
न्यं चामलकं प्रोक्तं काष्ठधात्रीफलं तथा॥ सुद्रामलकसंप्रोक्तं सु

दूजानी फलं च तत्॥ काष्ठधात्रीफलं स्वादे कषायं कटुकं तथा॥ शी
तं पित्तास्रदोषघ्नं पूर्वोक्तमधिकं गुणे॥ कां ठ आवला॥ किरुनेल्लि॥
चिंचा तु चुक्रिका चुक्रा साम्लिका शाकचुक्रिका॥ अम्ली सुतिंति
डा मम्ला चुक्रिका च नवाभिधा॥ चिंचात्यम्ला भवेदामा पक्वा तु म
धुराम्लिका॥ वातघ्नी पित्तदाहास्रकफदोषप्रकोपनी॥ तथा च॥
अम्लिकायाः फलं त्वाममत्यम्लं लघुपित्तकृत्॥ पक्वं तु मधुराम्लं
स्याद्भेदी विष्टंभवातजित्॥ चिंचा॥ इमली॥ हुणिसे॥ पक्वचिंचाफल
रसो मधुराम्लो रुचिप्रदः॥ शोफपाककरो लेपाद्व्रणदोषविनाश
नः॥ चिंचबरबडु॥ हुणिसेहण॥ बरवट॥ चिंचापत्रं च शोफघ्नं रक्त
दोषव्यथापहम्॥ तस्य शुष्कत्वचा क्षारं शूलमंदाग्निनाशनं॥ चिं
चापत्रगुण॥ अम्लसारस्तु शाकाम्लं चुक्राम्लं चाम्लचुक्रिका॥ चिं
चाम्लमम्लचूडश्च चिंचासारोपि सप्तधा॥ अम्लसारस्त्वतीवाम्लो
वातघ्नः कफदाहकृत्॥ साम्येन शर्करामिश्रो दाहपित्तकफार्तिनु
त्॥ चिंचापत्र॥ हुणसिनयले॥ इति चिंचागुण॥ आम्रातकः पीत
नकः कपिचूडोम्लवाटकः॥ शृंगीकपिरसाढ्यश्च तनुक्षीरः क
पिप्रियः॥ आम्रातकं कषायाम्लमामं हृत्कंठहर्षणं॥ पक्वं तु
मधुराम्लाख्यं स्निग्धं पित्तकफापहं॥ आंबाडे॥ आंबाडेयका
यि॥ नारंगः स्यान्नागरंगः सुरंगस्त्वचांगश्चैरावतो वक्त्रवासः
॥ योगीरंगो योगरंगः सुरंगो गंधाढ्योयं गंधपत्रो रवीष्टः॥ ना
रंगं मधुरं चाम्लं गुरूष्णं च रोचनम्॥ वातामक्रिमिशूलघ्न
श्रमहृद्बलरुच्यदम्॥ नारंग॥ निंबूकः स्यादम्लजंबीरका
ख्यो वन्हिदीप्यो वन्हिबीजोम्लसारः॥ दंताघातः शोधनो जं
तुमारी निंबूकः स्याद्रोचनो रुद्रसंज्ञः॥ निंबूफलं प्रथितमम्लर
सं कटूष्णं गुल्मामवातहरमग्निविवृद्धिकारि॥ चक्षुष्यमेतद
पकासकफार्त्तिकंठविच्छर्दिहारि परिपक्वमतीव रुच्यम्॥ निं
बे॥ निंबू॥ जंबीरो दंतशठो जंभो जंभीरजंभलश्चैव॥ रोचनको मु
खशोधी जाड्यारिर्जंतुजिन्नवधा॥ जंबीरस्य फलं रसेम्लमधुरं
वातापहं पित्तकृत्पथ्यं पाचनरोचनं बलकरं वन्हेर्विवृद्धिप्रदं।

पक्कं चेन्मधुरं कफार्त्तिशमनं पित्तास्रदोषापनुत् वर्ण्यं वीर्यविवर्द्धनं च रुचिकृत्पुष्टिप्रदं तर्पणं॥ ईड॥ कंचिले॥ अन्यो मधुजंबीरो मधुजंभो मधुरजंभलश्चैव॥ स प्राचीनाकरकः पित्तद्रावी च षट्संज्ञः॥ मधुरो मधुरजंबीरः शिशिरः कफपित्तनुत्॥ शोफघ्नस्तर्पणो वृष्यः श्रमघ्नः पुष्टिकारकः॥ साखर निंबु॥ किंनिले॥ मालूरस्तु कपित्थो मंगल्यो नीलमल्लिका च दधि॥ ग्राहिक फश्चिरपाकी ग्रंथिफलः कुचफलो दधिफलश्च॥ गंधफलश्च कपीष्टो वृत्तफलः करभपल्लवश्चैव॥ दंतशठः कठिनफलः करंडफलकश्च स प्रदशसंज्ञः॥ कपित्थो मधुराम्लश्च कषायस्तिक्तशीतलः॥ वृष्यः पित्तानिलं हंति संग्राही व्रणनाशनः॥ अपि च॥ कपित्थमाममम्लोष्णं कफघ्नं ग्राहि वातुलं॥ दोषत्रयहरं पक्कं मधुराम्लरसं गुरु॥ अन्यच्च॥ आमं कंठरुजं कपित्थमधिकं जिह्वाजडत्वावहं तद्दोषत्रयवर्द्धनं विषहरं संग्राहकं रोचकं॥ पक्कं श्वासवमिश्रमक्लमहरं हिध्मापनोदक्षमं सर्वं ग्राहि रुचिप्रदं च कथितं सेव्यं ततः सर्वदा॥ कविठ॥ बेललु॥ तुंबरुः सौरभः सौरवनजः सानुजो द्विजः॥ तीक्ष्णवल्कस्तीक्ष्णफलस्तीक्ष्णपत्रो महामुनिः॥ स्फटफलः सुगंधश्च स प्रोक्तो द्वादशाह्वयः॥ तुंबरुर्मधुरस्तिक्तः कटूष्णः कफवातनुत्॥ शूलगुल्मोदराध्मानकृमिघ्नो वह्निदीपनः॥ तेंटु॥ तुंबरु॥ रुद्राक्षं च शिवाक्षं च शर्वाक्षं भूतनाशनं॥ पावनं नीलकंठाक्षं हराक्षं च शिवप्रियं॥ रुद्राक्षमम्लमुष्णं च वातघ्नं कफनाशनं॥ शिरोर्त्तिशमनं रुच्यं भूतग्रहविनाशनम्॥ रुद्राक्ष॥ भाषा॥ २॥ विल्वः शल्यो हृद्यगंधः शलाटुः शांडिल्यः स्यात्क्रीफलः कर्कटाह्वः॥ शैलूषः स्याच्छैवपत्रः शिवेष्टः पत्रश्रेष्ठो गंधपत्रस्त्रिपत्रः॥ लक्ष्मीफलो गंधफलो दुरारुहस्त्रिशाकपत्रस्त्रिशिखः शिवद्रुमः॥ सदाफलः सत्फलदः सुभूतिकः समीरसारः शिखिनेत्रसंज्ञितः॥ बिल्वस्तु मधुरो हृद्यः कषायः पित्तजित् गुरुः॥ कफज्वरातिसारघ्नो रुचिकृद्दीपनः परः॥ बिल्वमूलं त्रिदोषघ्नं मधुरं लघु वातनुत्॥ फलं तु कोमलं स्निग्धं गुरु संग्राहि दीपनं॥ तद्दे

वपक्कंविज्ञेयंमधुरान्तुरसंगुरुः॥कटुतिक्तकषायोष्णंसंग्राहीचत्रि
दोषजित्॥बेल॥वेल्लवन॥सल्लकःसल्लकीसल्लीसुगंधासुरभिश्र
वा॥सुरभिर्गजभक्षाचसुवहागजवल्लभा॥गंधमूलासुखामोदा
सुश्रीकाजलविक्रमा॥हृद्याकुंदरिकाचैवप्रोक्तास्यस्लफलाचसा
॥ह्लिन्नार्हागंधफलाज्ञेयाचाष्टदशाह्वया॥सल्लकीतिक्तमधुराकषा
याग्राहिणीपरा॥कुष्टाश्रकफवानार्शोव्रणदोषार्त्तिनाशिनी॥सल्ल
कि॥नदिकु॥कतकोंबुप्रसारश्चकतस्तिक्तफलस्तथा॥रुच्यस्तुछे
दनीयश्चज्ञेयोगुडफलःस्मृतः॥प्रोक्तःकतफलस्तिक्तमरीचश्चत
वाह्वयः॥कतकःकटुतिक्तोष्णश्चस्तुष्यःकृमिदोषनुत्॥रुचिकृत्कू
लदोषघ्नोबीजमंबुप्रसादनः॥चीलु॥चिल्लिकायि॥कर्कटःका
र्कटःकर्कःक्षुद्रधात्रीचसस्मृतः॥क्षुद्रामलकसंज्ञश्चप्रोक्तःक
र्कफलश्चषट्॥कार्कटंतुफलंरुच्यंकषायंदीपनंपरं॥कफपि
त्तकफग्राहिचस्तुष्यंलघुशीतलं॥काकडें॥वालिगे॥श्लेष्मात
कोबाहुवीरःपिछलोद्विजकुत्सितः॥शेलुःशीतफलःशीतःशा
कटःकर्बुदारकः॥भूतद्रुमोगंधपुष्पःश्लेष्मातएकादशाह्वयः॥श्ले
ष्मातकःकटुहिमोमधुरःकषायःस्वादुश्चपाचनकरःक्रिमिशूल
हारी॥आमास्त्रदोषफलरोधबहुव्रणार्त्तिविस्फोटशांतिकरणः
कफकारकश्च॥सेलवंटि॥चेलु॥भूकर्बुदारकश्चान्यःसुक्ष्मश्लेष्मा
तकस्तथा॥भूशेलुर्लघुशेलुश्चपिछलोलघुपूर्वकः॥लघुशीतः
सूक्ष्मफलोलघुभूतद्रुमश्चसः॥भूकर्बुदारोमधुरःक्रिमिदोषवि
नाशनः॥वातप्रकोपनःकिंचित्सशीतःस्वर्णमात्रकः॥गोंदि
णि॥मुष्ककोमोचकोमुष्कोमोक्षकोमुंचकस्तथा॥गोलिकोमेह
नश्चैवसारवृक्षश्चपाटलिः॥विषापहोजडालश्चवनवासीसु
तीक्ष्णकः॥श्वेतःकृष्णश्चसद्वेधास्यात्त्रयोदशसंज्ञकः॥मुष्ककः
कटुकोम्लश्चरोचनःपाचनःपरः॥प्लीहगुल्मोदरार्त्तिघ्नोद्विधातु
ल्यगुणान्वितः॥मोखे॥मोखदलाई॥करमर्दःसुषेणश्चकराम्लः
करमर्द्दकः॥अविघ्नपाणिमर्द्दश्चकृष्णपाकफलोमुनिः॥करम
र्दःसतिक्ताम्लोबालोदीपनदाहकः॥पक्कस्त्रिदोषशमनोरुचि

घ्नोविषनाशनः॥करवंदे॥करिजिगे॥तेजफलोबहुफलस्तथा
चेच्छाल्मलीफलः॥फलस्तीक्ष्णादिसंयुक्तःफलांतस्तबकादिव
॥स्तेयीफलोगंधफलःकंटवृक्षःप्रकीर्तितः॥तेजफलःकटुस्तीक्ष्णः
सुगंधिर्दीपनःपरः॥वातश्लेष्मारुचिघ्नश्चबालरक्षाकरःपरः॥का
इफल॥गावटे॥विकंटकोमृदुफलोग्रंथिलःस्वादुकंटकः॥गोरं
टकःकाकयानोव्याघ्रपादोघनद्रुमः॥गर्जाफलोघनफलोमेघफ
लःस्तनितोद्भवश्चसुदिरफलः॥प्रावृष्योहास्यफलःस्तनितफलः
पंचदशसंज्ञः॥विकंटकःकषायःस्यात्कटुरूक्षोरुचिप्रदः॥दी
पनःकफहारीचवल्लरंगविधायकः॥हासी॥मोलगु॥अथहरी
तक्यः॥हरीतकीहैमवतीजयाभयाशिवाव्यथाचेतनिकाचरोहिणी
॥पथ्याप्रपथ्यापिचपूतनामृताजीवप्रियाजीवनिकाभिषग्वरा॥
जीवंतीप्राणदाजीव्याकायस्थाश्रेयसीचसा॥देवीदिव्याचविजया
वह्निनेत्रमिताभिधा॥हरीतकीपंचरसाचरेचनीकोष्णामयघ्नीलव
णेनवर्जिता॥रसायनीनेत्ररुजापहारिणीत्वगामयघ्नीकिलयोग
वाहिनी॥अन्यच्च॥बीजास्थितिक्तामधुरान्तदंतस्त्वग्भागतःसाकटु
रुष्णवीर्या॥मांसांशतश्चाम्लकषाययुक्ताहरीतकीपंचरसास्मृते
यं॥हिरडा॥अणिले॥हरीतक्यमृतोत्पन्नासप्तभेदैरुदीरिता॥त
स्यानामानिवर्णाश्चवक्ष्याम्यथयथाक्रमं॥विजयारोहिणीचैवपू
तनाचामृताभया॥जीवंतीचेतकीचेतिनाम्नासप्तविधामता॥आ
लांबुनाभिर्विजयासुवृत्तारोहिणीस्मृता॥स्वल्पत्वक्पूतनाज्ञेयास्थूल
मांसामृतास्मृता॥पंचास्राचाभयाज्ञेयाजीवंतीस्वर्णवर्णभा
क्॥त्र्यस्रांतुचेतकींविद्यादित्यासांरूपलक्षणं॥विंध्याद्रौविज
याहिमाचलभवास्याच्चेतकीपूतनासिंधौस्यादथरोहिणीतुवि
जयाजानाप्रतिस्थानके॥चंपायाममृताभयाचजनितादेशेसुरा
ष्ट्राह्वयेजीवंतीतिहरीतकीनिगदितासप्तप्रभेदाबुधैः॥सर्वप्र
योगेविजयाचरोहिणीक्षतेषुलेपेषुतुपूतनोदिता॥विरेचनेस्या
दमृतागुणाधिकाजीवंतिकास्यादिहजीर्णरोगजित्॥साच्चेतकी
सर्वरुजापहारिकानेत्रामयघ्नीमभयांवदंति॥द्वयंयथायोगमि

यंप्रयोजितान्ज्ञेयागुणाढ्यानकदाचिदन्यथा॥चेतकीचधृता
हस्तेयावत्तिष्ठतिदेहिनः॥तावद्विरच्यतेवेगात्तत्प्रभावान्नसंश
यः॥सप्तानामपिजातीनांप्रधानंविजयास्मृता॥सुखप्रयोगसु
लभासर्वव्याधिषुशस्यते॥क्षिप्ताप्सुनिमज्जतियासाज्ञेयागुण
वतीभिषग्वर्यैः॥यस्यायस्याभूयोनिमज्जनंसागुणाढ्यास्यात्॥
हरतेप्रसभंव्याधीन्भूयस्तरतियद्वपुः॥हरीतकीतुसाप्रोक्ता
तन्कृतीदीप्तिवाचकः॥हरीतकीतुनरुष्णायांहनुस्तंभेगलग्र
हे॥शोषेनवज्वरेजीर्णेगुर्विण्यांनैवशस्यते॥हिरडागुण॥
अणिलेयप्रसर्शे॥इतिहरीतकीलक्षणं॥बिभीतकस्तैलफ
लोभूतवासःकलिद्रुमः॥संवर्त्तकस्तुवासंतःकल्किवृक्षोबहे
डकः॥हार्यःकर्षफलःकल्किधर्मघ्नोक्षोनिलघ्नकः॥बिभीतक
श्चकासघ्नःसप्रोक्तःषोडशाह्वयः॥बिभीतकःकटुस्तिक्तोकषा
योष्णःकफापहः॥चक्षुष्यःपलितघ्नश्चविपाकेमधुरोलघुः॥
बेहाडा॥तोरे॥पूगस्तुपूगवृक्षश्चक्रमुकोदीर्घपादपः॥वल्कत
रुर्दृढवल्कश्चिक्कणश्चमुनिह्वयः॥पूगवृक्षस्यनिर्यासोहिमःसं
मोहनोगुरुः॥विपाकेसोष्णकस्सारःसाम्लोवातघ्नपित्तलः॥पो
फलाचारुषु॥सुपारीवृक्ष॥अडकेयमरत्नु॥पूगंतुचिक्कणीचिक्का
चिक्कणंश्लक्ष्णकंतथा॥उद्वेगंक्रमुकफलंज्ञेयंपूगफलंवसुः॥
साधारणपोफलनाम॥अडकेयहेसरू॥सेरीचमधुरारुच्याक
षायाम्लकटुस्तथा॥पथ्याचकफवातघ्नीसारिकामुखदोषनुत्
॥खेरी॥भाषा२॥तैल्वनंमधुरंरुच्यंकंठशुद्धिकरंलघु॥त्रिदोषश
मनंदीप्यंरसालंपाचनंसमं॥नेल्लवत्॥भाषा२॥गोल्यंगुहाक
रंश्लक्ष्णंकषायंकटुपाचनं॥विष्टंभजठराध्मानहरणंद्रावकं
लघु॥चिक्कणीसुपारी॥भाषा२॥घोंटाकटुकषायोष्णाकठिना
रुविकारिणी॥मलविष्टंभशमनीपित्तहृद्दीपनीचसा॥घोंटपो
फल॥घोंटअडके॥पूगीफलंचेउलसंज्ञकंयत्तत्कोंकणेषुप्रथि
तंसुगंधिः॥श्लेष्मापहंदीपनपाचनंचबलप्रदंपुष्टिकरंरसाढ्यं॥
चेउल॥चेउले॥कोंकणेप्रसिद्धं॥यत्कोंकणेवल्लिगुणाभिधानकं

ग्रामोद्भवं पूगफलं त्रिदोषनुत्॥ आमापहं रोचनरुच्यपाचनं विष्टं
भत्नं द्रामयहारि दीपनं॥ वल्लगुलपोफलें॥ वल्लगुलदडके॥ चंद्रा
पुरोद्भवं पूगं कफघ्नं मलशोधनं॥ कटुस्वादु कषायं च रुच्यं दीपनपा
चनम्॥ चंद्रापुरपोफल॥ चंदाउरदडके॥ आंध्रदेशोद्भवं पूगं कषा
यं मधुरं रसे॥ वातजिद्वक्त्रजाड्यघ्नं ईषदम्लं कफापहं॥ चोलीपोफ
ल॥ चोलियअडके॥ पूगं सम्मोहकृत्सर्वं कषायं स्वादुरेचनम्॥ त्रि
दोषशमनं रुच्यं वक्त्रक्लेदमलापहं॥ साधारणपोफलाचे गुण॥ अ
पिच॥ आमं पूगं कषायं मुखमलशमनं कंठशुद्धिं विधत्ते रक्तामं
श्लेष्मपित्तप्रशमनमुदराध्मानहारं सरं च॥ शुष्कं कंठामयघ्नं रु
चिकरमुदितं पाचनं रेचनं स्यात् तत्पर्णेनायुतं चेद्रुगिति वित
नुते पांडुवातं च शोषं॥ इति पूगप्रशंसा॥ अथ भवति नागवल्लीतां
बूलीफणिलता च सप्तशिरा॥ पर्णलता फणिवल्ली भुजगलता भक्ष्य
पत्री च॥ सा श्रीवाटाम्लादिवाटादिनानाग्रामास्तोमास्थानभेदा
द्विभिन्ना॥ एकाप्येषा देशमृत्स्ना विशेषान्नानाकारं याति कार्येषु
चोक्त्वा॥ नागवल्लीनाम॥ नागवल्ली कटुस्तीक्ष्णा तिक्ता पीनसवात
जित्॥ कफकासहरा रुच्या दाहकृद्दीपनी परा॥ साधारणपर्ण
गुण॥ श्रीवाटी मधुरा तीक्ष्णा वातपित्तकफापहा॥ रसाढ्या सर
सा रुच्या विपाके शिशिरा स्मृता॥ सिरिवाडीपान॥ सिरिवाडियेले
॥ स्यादम्लवाटी कटुकाम्लतिक्ता तीक्ष्णा तथोष्णा मुखपाककर्त्री
॥ विदाहपित्तास्रविकोपनी च विष्टंभदा वातनिबर्हिणी च॥ अंबाडे
पर्ण॥ सततसा मधुरा तीक्ष्णा कटुरुष्णा च पाचनी॥ गुल्मोदराध्मान
हरा रुचिकृद्दीपनी परा॥ सानसीपर्ण॥ अन्यच्च॥ गुहागदेस
दाशिराप्रसिद्धा॥ तत्पर्णजूर्णातिरसातिरुच्या सुगंधिनी तीक्ष्णा
मधुरातिहृद्या॥ संदीपनी पुंस्त्वकरातिबल्या विरेचनी वक्त्रसुगं
धकारिणी॥ अडगरपर्ण॥ नाम्नान्याम्लसरा सुतीक्ष्णमधुरा रु
च्या हिमा दाहनुत्पित्तोद्रेकहरा सुदीपनकरी बल्या मुखामोदिनी॥
स्त्रीसौभाग्यविवर्द्धनी मदकरी राज्ञां सदावल्लभा गुल्माध्मानविबं
धजिच्च कथिता सा सालवेनुस्थिता॥ सालवे अंगारपर्ण॥ अंध्रे पट्टलि

क्तानामकषायोष्णाकटुस्तथा॥मलापकर्षीकंठस्यपित्तकृद्दान
नाशनी॥अंध्रदेशेपोटकुलिपर्णी॥हूसगीयाकटुस्तीक्ष्णाहृद्या
दीर्घदलाचसा॥कफवातहरारुच्याकटुर्दीपनपाचनी॥घोरस
मुद्रदेशपर्णी॥सद्यस्त्रोटितभक्षितंमुखरुजाजाड्यावहंदोषकृद्द
हारोचकरक्तदायिमलकृद्दृष्टंभिवांतिप्रदं॥यद्भूयोजलपानपोषि
तरसंतच्चेच्चिरात्रोटितंतांबूलीदलमुत्तमंचरुचिकृद्वर्ण्यंत्रिदोषार्ति
नुत्॥नवेंजुनेंपानाचेगुण॥होसयलेहलेयलेगुण॥कृष्णंपर्णंति
क्तमुष्णंकषायंधत्तेदाहंवक्त्रजाड्यंमलंच॥शुभ्रंपर्णंश्लेष्मवाता
मयघ्नंपथ्यंरुच्यंदीपनंपाचनंच॥नागवल्लीभाषा॥२॥शिरापर्णंतु
शैथिल्यंकुर्यात्तस्याश्चहृद्रसः॥शीर्णंत्वग्दोषदंतस्यतक्षितंच
शितंसदा॥आनिनायमुखेपर्णंयःपूगंखादतेनरः॥मतिभ्रंशोद
रिद्रीस्यादंतेनस्मरतेहरिं॥इतिपर्णगुणाः॥चूर्णंचार्ज्जुनवृक्षजं
कफहरंगुल्मघ्नमर्कोद्भवंशोषघ्नंकुटजंकरंजजनितंवातापहंरु
च्यदं॥पित्तघ्नंजलजंबलाग्निरुचिदंशैलाद्भवंपित्तजंस्फाटिक्यं
दृढदंतपंक्तिजननंशुक्त्यादिजंरूक्षदं॥चूना॥चूर्ण॥जलजंमौ
क्तिकं॥पर्णाधिक्येदीपनीरंगदात्रीपूगाधिक्येरूक्षदाकृकृदा
त्री॥साराधिक्येखादिरेशोषदात्रीचूर्णाधिक्येपित्तकृत्पूतिगंधा
॥इतितांबूललक्षणं॥इत्थंनानाफलतरुलतानामतत्तद्गुणादिम
क्तास्थानप्रगुणरचनाचारुसौरभ्यसारं॥वर्गंवक्त्रांबुरुहवलभी
लास्यलीलारसालंविद्यावैद्यःखलुसफलयेदेयनाम्नायभूम्ना॥
यान्युपभुंजानानांसंभवन्तिसंसारपादपःसफलः॥तेषामेषफलानां
वर्गःफलवर्गइतिकथितः॥यस्याजस्रविकस्वरामलयशःप्राग्भा
रपुष्पोद्गमःसाश्चर्यंविबुधेप्सितानिफलतिश्रीमान्करःस्वर्द्रुमः॥
तस्यायंकविनुःकृतौनरहरेराम्रादिरेकादशोवर्गःस्वर्गसभाभिष
ग्भिरभिधाचूडामणावीरितः॥इतिप्रतिभटवैद्यमदकरटिकोटिक
लाभोत्कोटनकलाप्रगल्भपौरुषपंचाननविनोदविदितनिजाभि
धानश्रीमदीश्वरसूरिसूनुश्रीमदमृतेशचरणारविंदनित्याराध
ननिरतिशयानंदरसानुभवसुभगांतरंगश्रीकाशीराजादिवंशपरं

परान्ववायश्रीनरहरिपंडितविरचितेनिघंटुराजापरनाम्निश्रीम
दभिधानचूडामणौफलवर्गापराख्योयमाम्रादिवर्गएकादशः॥अ
थचंदनादिवर्गः॥श्रीखंडंशबरंपीतंपत्रांगंरक्तचंदनं॥वर्बरंहरि
गंधंचचंदनंसप्तधास्मृतं॥१॥देवदारुद्विधाप्रोक्तंवीडासप्तच्छदस्त
था॥सरलःकुंकुमःकंगुःकस्तूरीरोचनातथा॥२॥कर्पूरस्याज्जवादि
स्तुनदीदुर्ज्ञातिपत्निका॥जातीफलंचकंकोलंलवंगस्वादुरुच्यते॥
॥३॥अगरुस्त्रिस्त्रिधामांसीतुरुष्कोगुग्गुलस्त्रिधा॥रालःकुंदुरुकः
कुष्ठःसारिवातुद्विधानखो॥४॥स्पृक्कास्थौणेयकश्चैवमुराशैलेयचो
रकः॥पद्मप्रपुंडरीकौचलामज्जंरोहिणीद्विधा॥५॥श्रीवेष्टो
शीरनलिकामुनिबाणमिताह्वयं॥श्रीखंडंचंदनंप्रोक्तंमहार्हं
श्वेतचंदनं॥६॥गोशीर्षंतिलपर्णंचमंगल्यंमलयोद्भवम्॥गं
धराजंसुगंधंचसर्पावासंचशीतलं॥७॥गंधाढ्यंगंधसारंचभ
द्रश्रीभोगिवल्लभं॥बावानंमलयजंचशीतगंधोंधभूह्वयं॥८॥श्री
खंडंकटुतिक्तशीतलगुणंस्वादेकषायंकियत्पित्तभ्रांतिवमिज्व
रक्रिमितृषासंतापशांतिप्रदं॥वृष्यंवक्त्ररुजापहंप्रतनुतेकांतिं
तनोर्देहिनांलिप्तंसुप्तमनोजसिंधुरमदारंभातिसंरंभदं॥९॥श्रे
ष्ठंकोटरकर्परोपकलितंसुग्रंथिसद्गौरवंछेदेरक्तमयंतथाचवि
मलंपीतंचयद्धर्षणे॥स्वादेतिक्तकटुःसुगंधिबहलंशीतंयदल्पं
गुणेक्षीणंचाईगुणान्वितंतुकथितंतच्चंदनंमध्यमं॥१०॥साधार
णश्रीखंड॥श्रीगंध॥चंदनंद्विविधंप्रोक्तंबेट्टसुक्कडिसंज्ञिकं॥बेट्टं
तुसार्द्रविच्छेदंस्वयंशुष्कंतुसुक्कडि॥अन्यच्च॥मलयाद्रिसमीपस्थाः
पर्वताबेट्टसंज्ञिकाः॥तज्जातंचंदनंयत्तुबेट्टवाच्यंकचिन्मते॥बेट्ट
चंदनमतीवशीतलंदाहपित्तशमनंज्वरापहं॥छर्दिमोहतृषिकु
ष्ठतैमिरोत्कासरक्तशमनंचतिक्तकं॥वेट्टश्रीखंड॥बेट्टपच्चेगंध॥
सुक्कडिश्चंदनंतिक्तंकृच्छ्रपित्तास्रदाहनुत्॥शैत्यंसुगंधिदंचार्द्रसु
ष्कंलेपेतदन्यथा॥सुक्कडिगंधगुण॥इतिश्रीखंडगुणलक्षणानि॥
नातिपीतंकैरातंशबरंचंदनंसुगंधं॥वन्यंचगंधकाष्ठंकिरातकांतं
चशैलगंधंच॥कैरातंशीतलंतिक्तकंचश्लेष्मानिलघ्नंश्रमपित्तहा

रि॥विस्फोटपामादिकनाशनंचतृषापहं॥तापविमोहनाशनं॥श्रीखंडचंदनंकोंकणेप्रसिद्धं॥पीतगंधंतुकालेयंपीतकंमाधवप्रियं॥कालीयकंपीतकाष्ठंबर्बरंपीतचंदनं॥पीतंचशीतलंतिक्तंकुष्ठश्लेष्मापनोदनं॥कंडूविचर्चिकादद्रुकृमिहृत्कांतिदंपरं॥पीतचंदन॥होसपादेशेप्रसिद्धं॥पत्नांगंचैवपत्नांगंरक्तकाष्ठंसुरंगदम्॥पत्राद्यंपुटरागंचभार्यावृक्षश्चरक्तकः॥लोहितंपेंगकाष्ठंचरोगकाष्ठंसुचंदनम्॥पट्टरंजनकंचैवसुरंगंचचतुर्दश॥पत्नांगंकटुकंरूक्षंअम्लंशीतंतुगौल्यकम्॥वातपित्तज्वरघ्नंचविस्फोटोन्मादभूतहृत्॥पतंगभाषा॥रक्तचंदनमिदंचलोहितंशोणितंचहरिचंदनंहिमम्॥रक्तसारमथतांम्रसारकंसुद्रचंदनमथार्कचंदनं॥रक्तचंदनमतीवशीतलंतिक्तलसणगदास्तदोषनुत्॥भूतपित्तकफकासज्वरभ्रांतिजंतुवमितृषापहारकं॥रक्तचंदनभाषा॥बर्बरोम्लंबर्बरकंश्वेतबर्बरकंतथा॥शीतंसुगंधिपित्तारिःसुरभिश्वेतिसप्तधा॥बर्बरंशीतलंतिक्तंकफमारुतपित्तजित्॥कुष्ठकंडूव्रणान्हंतिविशेषाद्रक्तदोषजित्॥बर्बरगंधभाषा॥हरिचंदनंसुरार्हंहरिगंधंचंद्रचंदनंदिव्यं॥दिविजंचगहागंधंनंदनजंलोहितंचनवसंज्ञं॥हरिचंदनंतुदिव्यंतिक्तहिमंतदिहदुर्लभंमनुजेः॥पित्तादोपविलोपिचंदनवत्क्रमशोपमारापयाचोभूत्॥हरिचंदन॥कोंकणेप्रसिद्धं॥चंदनानिसमानानिरसतोवीर्यतस्तथा॥भिद्यंतेकिंतुगंधेनतत्राद्यंगुणवत्तरं॥इतिचंदनानि॥देवदारुसुरदारुदारुकंस्निग्धदारुअमरादिदारुच॥भद्रदारुशिवदारुपांभवंभूतहारिभवदारुरुद्रवत्॥देवकाष्ठंपूतिकाष्ठंभद्रकाष्ठंसुकाष्ठकं॥अस्निग्धदारुकंचैवकाष्ठदारुषडाह्वयम्॥देवदारुद्विधाज्ञेयंतत्राद्यंस्निग्धदारुकं॥द्वितीयंकाष्ठदारुस्यादूयेनोमान्यभेदतः॥स्निग्धदारुस्मृतंतिक्तंस्निग्धोष्णंश्लेष्मवातजित्॥आमदोषविबंधार्शःप्रमेहज्वरनाशनम्॥चोपडादेवदारु॥देवकाष्ठंतुतिक्तोष्णंरूक्षंश्लेष्मानिलापहं॥भूतदोषापहंधत्तेलिप्तमंगेषुकालिकं॥काष्ठदेवदारु॥भा

षाह्वय॥ चीडा च दारुगंधा गंधवधूर्गंधमादनी तरुणी॥ नारा च भू
तमारी मंगल्या तु कपाटिनी ग्रहजित्॥ चीडा कटूष्णा कासघ्नी कफ
जिद्दीपनी परा॥ अत्यंतसेविता सा तु पित्तदोषभ्रमापहा॥ चीडाद्दे
वदारुभेद॥ सप्तवर्णः पत्रवर्णः शुक्तिपर्णः सुपर्णकः॥ सप्तच्छदो गु
च्छपुष्पो युग्मपर्णो मुनिच्छदः॥ बृहत्त्वक् बहुपर्णश्च तथा शाल्मलि
पत्रकः॥ मदगंधो गंधिपर्णो विज्ञेयो वह्निभूमितः॥ सप्तपर्णस्तु ति
क्तोष्णस्त्रिदोषघ्नश्च दीपनः॥ मदगंधि निरुंधेयं व्रणरक्तामय
क्रिमीन्॥ सातवना॥ एलेलेग॥ सरलस्तु पूतिकाष्ठं तुंबी पीनद्रु
रुस्थिनो दीपनरुः॥ स स्निग्धदारुसंज्ञः स्निग्धो मारीचपत्रको न
वधा॥ सरलः कटुतिक्तोष्णः कफवातविनाशनः॥ त्वग्दोषशोफ
कंडूतिव्रणघ्नः कोष्ठशुद्धिदः॥ सरलदेवदारुविशेषः॥ ज्ञेयं कुंकु
ममग्निशेखरमसृक्काश्मीरजं पीतकं काश्मीरं रुधिरं —— वरं च
पिशुनं रक्तं शठं शोणितं॥ बाह्लीकं घुसृणं वरेण्य[illegible]णं कालेय
कं जागुडं कांतं वह्निशिखं च केसरवरं गौरं कराक्षीरितं॥ कुंकु
मं सुरभि तिक्तकटूष्णं कासवातकफकंठरुजाघ्नम्॥ मूर्धशूल
विषदोषनाशनं रोचनं च तनुकांतिकारकं॥ कुंकुमकेसर॥ तृणकुं
कुमं तृणास्त्रं गंधि तृणं शोणितं च तृणपुष्पं॥ गंधाधिकं तृणोत्थं तृ
णगौरं लोहितं च नवसंज्ञम्॥ तृणकुंकुमं कटू[illegible] कफमारुतशो
फनुत्॥ कंडूतिपामाकुष्ठामदोषघ्नं भास्करं परम्॥ तृणकुंकुम॥ का
श्मीरे प्रसिद्ध॥ प्रियंगुः फलिनी श्यामा प्रियवल्ली फलप्रिया॥ गौरी
गोविंदनी रत्नाकरंभा कंगुकंगुनी॥ भंगुरा गौरवल्ली च सुभगा पर्ण
भेदिनी॥ शुभा पीता च मंगल्या श्रेयसी चांकभूमिना॥ प्रियंगुः शीत
ला तिक्ता दाहपित्तास्त्रदोषजित्॥ वांतिभ्रांतिज्वरहरा वक्त्रजाड्यवि
नाशनी॥ प्रियंगु॥ नेर्षिलगु॥ कस्तूरी मृगनाभिस्तु मदनी गंधवेलि
का॥ वेधमुख्या च मार्जाली सुभगा बहुगंधदा॥ सहस्रवेधी श्यामा
स्यात्कामानंदा मृगांडजा॥ कुरंगनाभी ललिता मदो मृगमदस्तथा॥
श्यामलीकाममोदी च विज्ञेयाष्टादशाह्वया॥ कस्तूरी सुरभिस्तिक्ता
चक्षुष्या मुखरोगजित्॥ किलासकुष्ठदौर्गं[illegible]मलापहा॥

कस्तूरीगुणः॥कपिलापिंगलाकृष्णाकस्तूरीत्रिविधाक्रमात्॥नेपा
लेपिचकाश्मीरेकामरूपेचजायते॥साप्येकाखरिकाततश्चतिल
काज्ञेयाकुलित्थापरापिंडाख्यापिचनायिकेतिचपरायापंचभेदा
मिथा॥साशुद्धामृगनाभितःक्रमवशादेषाक्षितौशोचितापक्षस्था
दिनत्रयेप्रजनिताकस्तूरिकासूयते॥चूर्णाकृतिस्तुखरिकाति
लकानिलाभाकौलत्थबीजसदृशीचकुलित्थकाच॥स्थूलाततः
कियदियंकिलपिंडिकाख्यानस्याश्चकिंचिदधिकायदिनायिका
सा॥कस्तूरीनिकरलक्षणं॥स्वादेतिक्तापिंजराकेतकीनांगंधंध
त्तेलाघवंतोलनेच॥याप्सुन्यस्तानेववैवर्ण्यमीयात्कस्तूरीसारा
जभोग्याप्रशस्ता॥अपिच॥यागंधंकेतकीनामपहरतिमदंसिं
धुराणांचवर्णेस्वादेतिक्ताकटुर्वालघुरथतुलितामर्दिनाचिक्कणा
स्यात्॥दाहंयानैतिवन्हौशिमिशिमितिचिरंचर्मगंधाहुताशेसा
कस्तूरीप्रशस्तावरमृगतनुजाराजतेराजभोग्या॥कस्तूरीपरीक्षा
लक्षणं॥अन्यच्च॥बालेजरतिचहरिणेक्षीणेरोगिणिचमंदगंधयु
ता॥कामातुरेचतरुणेकस्तूरीबहलपरिमलाभवति॥कस्तूरी
मृगलक्षणं॥यास्निग्धाधूमगंधावहतिविनिहितापीननापाव
सोंतर्निःशेषंयानिविष्टाभवतिहुतवहेभस्मसादेवसद्यः॥या
चन्यस्तातुलायांकलयतिगुरुतांमर्दितारूक्षतांचज्ञेयाकस्तूरि
केयंखलुकृतमतिभिःकृत्रिमानैवसेव्या॥कारीणीकस्तूरीलक्ष
णं॥शुद्धोवामलिनोस्तुवामृगमदःकिंजातमेतावताकोप्यस्यान
वधिश्चमत्कृतिनिधिःसौरभ्यमेकोगुणः॥येनासौस्मरमंडनेकवस
तिर्भालेकपोलेगलेदोर्मूलेकुचमंडलेचकुरुतेसंगंकुरंगीदृशां॥इ
तिकस्तूरी॥गोरोचनारुचिःशोभारुचिराशोभनाशुभा॥गौरोच
रोचनीपिंगामंगल्यापिंगलाशिवा॥पीताचगौतमीगव्यावंदनीया
चकांचनी॥मेध्यामनोरमाश्यामारामाभूमिकराह्वया॥गोरोचना
चशिशिराविषदोषहंत्रीरुच्याचपाचनकरीक्रिमिकुष्ठहंत्री॥
भूतग्रहोपशमनंकुरुतेचपथ्याशृंगारमंगलकरीजनमोहनीच
॥गोरोचनभाषा॥कर्पूरोघनसारकःशितकरःशीतःशशांकःशि

लाशीतांशुर्हिमवालुकाहिमकरः शीतप्रभः शांभवः॥ शुभ्रांशुः स्फटिकाभ्रसारमिहिकानाराभ्रचंद्रेंदवश्चंद्रो लोकतुषारगौर कुमुदान्येकादशाह्वोद्विशः॥ इति कर्पूरनाम॥ पोतासो भीमसेनस्तदनु शितकरः शंकरावाससंज्ञः प्रांशुः पिंजो बुसारस्तदनु हिमयुता वालुकाजूटिकाच॥ पश्चादस्यास्तुषारस्तदुपरि सहिमः शीतलः पक्किकान्याकर्पूरस्येति भेदा गुणरसमहसां वेद्यदृश्ये नदृश्याः॥ कर्पूरभेद॥ कर्पूरः शिशिरस्तिक्तः स्निग्धश्चोष्णोस्त्र दाहदः॥ चिरस्थो दाहदोषघ्नः सधौतः शुभकृत्परः॥ शिरोमध्यं तलं चेति कर्पूरस्त्रिविधः स्मृतः॥ शिरस्तंभाग्रसंजातं मध्यं पर्णतलेतलं॥ भास्वद्विदर्शी पुलकं शिरोजातं तु मध्यमं॥ सामान्यपुलकं स्वच्छं तले चूर्णं तु गौरवं॥ स्तंभगर्भस्थितं श्रेष्ठं स्तंभवाह्ये च मध्यमः॥ स्वच्छमीषद्दरिद्राभं शुभं तन्मध्यजं स्मृतं॥ सदृढं शुभ्ररूक्षं च पुलकं बाह्यजं वदेत्॥ इति कर्पूरलक्षणानि॥ अपि च॥ स्वच्छं भृंगारपत्रं लघुतरविशदं तोलने तिक्तकं चेत्स्वादे शैत्यं सुहृद्यं बहलपरिमलामोदसौरभ्यदायि॥ निःस्नेहं दाढ्यपत्रं शुभतरमिति चेद्राजयोग्यं प्रशस्तं कर्पूरं चान्यथा चेद्बहुतरशमने स्फोटदायि व्रणाय॥ कर्पूरपोतासु॥ चीनकश्चीनकर्पूरः कृत्रिमो धवलः पटुः॥ मेघसारस्तुषारश्च द्वीपकर्पूरजः स्मृतः॥ चीनकः कटुतिक्तोष्ण ईषच्छीतः कफापहः॥ कंठदोषहरो मेध्यः पाचनः क्रिमिनाशनः॥ चीनकर्पूरनाम गुण॥ जवादिर्गंधराजः स्यात्कृत्रिमं मृगचर्मजं॥ समूहगंधं गंधाढ्यं स्निग्धं साम्राणिकर्दमं॥ सुगंधतैलनिर्यासकूटामोदं दशाभिधं॥ सौगंधिकं जवादि स्यात्स्निग्धं चोष्णं सुखावहं॥ वातेहितं च राज्ञां च मोहनाह्लादकारणं॥ जवादिनीलसस्निग्धं ईषत्पीतं सुगंधितं॥ आतपे बहलामोदं राज्ञां योग्यं न चान्यथा॥ जवादिलक्षणं॥ तूणीकस्तूणिकस्तूणी पीतकः कच्छपस्तथा॥ नंदीकुठेरकः कांतो नंदीवृक्षो नवाह्वयः॥ नंदीवृक्षः कटुस्तिक्तः पीतः स्तिक्तास्त्रदाहजित्॥ शिरोर्तिःश्वेतकुष्ठघ्नः सुगंधिः पृश्निवीर्यदः॥ नंदीवृक्षः कोंकणे प्रसिद्धः॥ जातीपत्री जातिकोशः सुमनःपत्रिका पिसा॥ मालतीपत्रिका पंचना

स्त्रीसौमनस्यदायिनी॥जातीपत्री कटुस्तिक्ता सुरभिः कफनाशनी
॥वक्त्रवैशद्यजननी जाड्यदोषनिकृंतनी॥जायपत्रीं॥जातीफ
लं जातिसस्यं शालूकं मालतीफलं॥मज्जासारं जातिसारं पुटं
च सुमनःफलं॥जातीफलं कषायोष्णं कटुकंठामयार्तिजित्
॥वातातिसारमेहघ्नं वृष्यं दीपनदं लघु॥जाइफल भाषा॥कंको
लं कृतफलं कोलकं कटुकं फलं॥विढेष्यं स्थूलमरिचं कंको
लं माधवोचितं॥कंकोलं कटुफलं प्रोक्तं मारीचं रुद्रसंमितं॥क
कोलं कटुतिक्तोष्णं वक्त्रजाड्यहरं परं॥दीपनं पाचनं रुच्यं कफ
वातनिकृंतनं॥कंकोलद्वयं भाषा॥लवंगकलिका दिव्यं लवंगं
शेखरं लवं॥श्रीपुष्पं देवकुसुमं सुषिरं वारिसंभवं॥तीक्ष्णपुष्पं
तु भृंगांगी गीर्वाणकुसुमं तथा॥पुष्पकं चंदनादि स्याद्ज्ञेयं च द्वा
दशाह्वयम्॥लवंगं शीतलं तिक्तं चक्षुष्यं भुक्तरोचनम्॥वातपि
त्तकफघ्नं च तीक्ष्णं मूर्द्धरुजापहम्॥अपि च॥लवंगं सोष्णकं
तीक्ष्णं विपाके मधुरं हिमम्॥वातपित्तकफामघ्नं क्षयकासस्य
दोषनुत्॥लवंगकलिकाह्वयं॥भाषाह्वय॥साधुस्त्वगरुसारः
स्यात्सुधूम्यो गंधधूमजः॥साधुः कटुकषायोष्णः सधूमामो
द्वातजित्॥अगरु॥कृष्णागरुः स्यादगरुः शृंगारं विश्वरूप
कं॥शीर्षं कालागरुः केश्यं वसुकं कृष्णकाष्ठकं॥धूपार्हं वल्ल
रं गंधराजकं द्वादशाह्वयं॥कृष्णागरु कटूष्णं च तिक्तं लेपे च शी
तलम्॥पाने पित्तहरं किंचित्त्रिदोषघ्नमुदाहृतम्॥कृष्णाग
रु॥भाषाह्वयम्॥अन्योगरुः पीतकं च लोहवर्णप्रसादनम्॥अ
नार्यकं मसारं च क्रिमिजघ्नं च काष्ठकम्॥काष्ठागरुः कटूष्णं च
लेपे रूक्षं कफापहम्॥काष्ठागरु॥भाषाह्वय॥दाहागरु दह
नागरु दाहकं काष्ठं च वन्हिकाष्ठं च॥धूपागरु तैलागरु पुरं च
पुरमथनवल्लभं चैव॥दाहागरु कटु कोष्णं केशानां वर्द्धनं च व
र्ण्यं च॥अपनयति केशदोषान् आतनुते संततं च सौगंध्यं॥दाहा
गरु॥भाषा२॥गुर्जरप्रसिद्ध॥मंगल्या मल्लिकागंधमंगलागुरु
वाचका॥मंगल्यागरुशिशिरं [illegible] वाहिका॥मंग

ल्पागरुः श्रेष्ठः॥ केदारे प्रसिद्धः॥ इति अगरुचतुष्टयम्॥ मांसी
तु जटिला पाशी क्रव्यादि पिशिता पिशी॥ केशिनी च जटा हिंस्रा
जटामांसी च मांसिनी॥ जटाला नलदा मेषी नामसी चक्रवर्त्ति
नी॥ माता भूतजटा चैव जननी च जटावती॥ मृगभक्षादि चेत्ये
षा एकविंशतिधाभिधा॥ सुरभिस्तु जटामांसी कषाया कटुशी
तला॥ कफह्रद्भूतदाहघ्नी पित्तघ्नी मोदकांतहृत्॥ साधारणज
टामांसी॥ द्वितीया गंधमांसी च केशी भूतजटा स्मृता॥ पिशाची
पूतना चैव भूतकेशी च लोमशा॥ जटाला लघुमांसी च स्यात्ता
अंकाभिधाह्वया॥ गंधमांसी तिक्तशीता कफकंठामयापहा॥
रक्तपित्तहरा वर्ण्या विषभूतज्वरापहा॥ बृहलगंधजटामांसी
॥ आकाशमांसी सूक्ष्मान्या निरालंबा खसंभवा॥ सेवाली सू
क्ष्मपत्री च गौरी पर्वतवासिनी॥ अभ्रमांसी हिमा शोफव्रणनाडी
रुजापहा॥ लूतगर्दभजालादिहारिणी वर्णकारिणी॥ आका
शजटामांसी॥ केदारे उत्पत्तिः॥ इति मांसीत्रयं॥ तुरुष्को यवनो
धूम्रो धूम्रवर्णः सुगंधिकः॥ सिह्लकः सिह्लसारश्च पीतसारः
कपिस्तथा॥ पिण्याकः कपिजः कल्कः पिंडितः पिंडतैलकः॥
करेवरः कृत्रिमको लेपनो मुनिभू ह्वयः॥ तुरुष्कः सुरभिस्तिक्तः
कटुः स्निग्धश्च कुष्ठजित्॥ कफपित्ताश्मरीमूत्रघातभूतज्वरार्त्ति
जित्॥ शिलारस॥ पिंडतैल॥ गुग्गुलुर्यवनद्विष्टो भवाभीष्टो नि
शाटकः॥ जटालः कालनिर्यासः पूरो भूतहरः शिवः॥ कौशिकः
शांभवो दुर्गो यातुघ्नो महिषाक्षकः॥ देवेष्टो मरुदेश्योपि रक्षोह्वा रू
क्षगंधकः॥ दिव्यस्तु महिषाक्षश्च नामान्येतानि विंशतिः॥ गुग्गुलुः
कटुतिक्तोष्णः कफमारुतकासजित्॥ क्रिमिवातोदरप्लीहशोफा
र्शोघ्नो रसायनः॥ गुग्गुलु॥ गंधराजः स्वर्णकणः सुवर्णः कणगुग्गु
लुः॥ कनको वंशपीतश्च सुरसश्च पलंकषा॥ कणगुग्गुलुः कटूष्णः
सुरभिर्वातनाशनः॥ शूलगुल्मोदराध्मानकफघ्नश्च रसायनः॥ क
णगुग्गुलु॥ भाषा२॥ गुग्गुलुश्च तृतीयोन्यो भूमिजो दैत्यमेदजः॥ दु
र्गाह्लादाद्वा जाता आशादिरिपुसंभवः॥ मज्जाजो मेदजश्चैव महि

षासुरसंभवः॥गुग्गुलुर्भूमिजस्तिक्तःकटूष्णःकफवातजित्॥उ
माप्रियश्चभूतघ्नोमेध्यसौरभ्यदःसदा॥भूमिजगुग्गुलु॥काशीदे
शेप्रसिद्धः॥इतित्रिविधगुग्गुलुः॥रालःसर्जरसश्चैवशालःकन
कजोद्भवः॥ललनःशालनिर्यासोदेवेष्टःशीतलस्तथा॥बहुरू
पःशालरसःसर्ज्जनिर्यासकस्तथा॥सुरभिःसुरधूपश्चयक्षधूपो
ग्निवल्लभः॥कालःकलयजःप्रोक्तोनाम्नांसप्तदशांकितः॥राल
स्तुशिशिरःस्निग्धःकषायस्तिक्तसंग्रहः॥वातपित्तहरःस्फोट
कंडूतिव्रणनाशनः॥राल॥सर्ज्जरसः॥कुंदुरुकःसौराष्ट्रःशिख
रीकुंदुकुंदुकस्तीक्ष्णः॥गोपुरकोबहुगंधःपालिंदोभीषणश्चद
शसंज्ञः॥कुंदुरुर्मधुरस्तिक्तःकफपित्तार्त्तिदाहनुत्॥पानेलेपेच
शिशिरःप्रदरामयशांतिकृत्॥कुंदुरुकः॥इडबोल॥कुष्ठंरुजा
गदोव्याधिरामयंपारिभद्रकम्॥वामंवानीरजंवाप्यंज्ञेयस्त्वगदो
षउत्पलम्॥कुत्संचपाटवंचैवपद्मकंमनुसंज्ञकम्॥कुष्ठंकटूष्णं
तिक्तंस्यात्कफमारुतकुष्ठजित्॥विसर्पविषकंडूतिखर्जूदद्रुघ्न
कांतिकृत्॥कोष्ठ॥सारिवाशारदागोपागोपवल्लीप्रतानिका॥
कोपाकन्यालतास्फोतानवाह्वाकाष्ठसारिवा॥सारिवान्याकृष्ण
मूलीकृष्णचंदनसारिवा॥भद्रचंदनगोपानुचंदनाकृष्णवल्य
पि॥सारिवेद्वेतुमधुरेहिमेभूतनिकृंतनी॥कुष्ठकंडूज्वरहरे
देहदुर्गंधिनाशने॥सारिवा॥उत्तरापंथेप्रसिद्धा॥नखःकररुहः
शिल्पीशुक्तिःशंखःखुरःशफः॥वलःकोशीचकरजोहनुर्नाग
हनुस्तथा॥पाणिजोवदरीपत्रोधूम्यःपण्यविलासिनी॥संधि
नालःपाणिरुहःस्यादष्टादशसंज्ञकः॥नखःस्यादुष्णकटुको
विषंहंतिप्रयोजितः॥कुष्ठकंडूव्रणघ्नश्चभूतविद्रावणःपरः॥न
खभाषा॥नखोन्यःस्याद्बूलनखःकूटस्थश्चक्रनायकः॥चक्री
चक्रनखस्थलःकालव्याघ्रनखःस्मृतः॥द्वीपीनखोव्यालनखः
खपुटोव्यालपाणिजः॥व्यालायुधोव्यालवलोव्यालखड्गश्चषोड
श॥व्यालनखस्तुतिक्तोष्णःकषायःकफवातजित्॥कुष्ठकंडूव्र
णघ्नश्चवर्ण्यःसौगंध्यदःपरः॥वाघनख॥स्पृक्काचदेवीपिशुनाव

धूम्रकोटिर्मनुब्राह्मणिकासुगंधा॥समुद्रकांताकुटिलातथाच
मालालिकाभूतलिकाचलघ्वी॥निर्मल्यासुकुमाराचमालाली
देवपुत्रिका॥पंचगुप्तीरसः कृप्रोक्तानखपृष्ठीचविंशतिः॥स्पृक्का
कटुकषायाचतिक्ताश्लेष्मानिलासजित्॥श्लेष्ममेहाश्मरीकृच्छ्रना
शनीचसुगंधिदा॥स्पृक्का॥हिंके॥स्थौणेयकंबर्हिशिखंशुकच्छ
दंमयूरचूडंशुकपुच्छकंतथा॥विकीर्णरोमाणिचकीरवर्णकंविक
र्णसंज्ञंहरितंनवाह्वयम्॥स्थौणेयंकफपित्तघ्नंसुगंधिकटुतिक्तकं
॥पित्तप्रकोपशमनंबलपुष्टिविवर्धनं॥स्थौणेय॥स्थौणज॥मुरा
गंधवतीदैत्यागंधाढ्यागंधमादनी॥सुरभिर्भूरिगंधाचकुटीगं
धकुटीतथा॥मुरातिक्ताकटुःशीताकषायाकफपित्तहृत्॥श्वा
सासृग्विषदाहार्तिभ्रममूर्छातृषापहा॥मुरा॥मुरे॥सुगंधिद्र
व्यंगोर्जरेप्रसिद्धं॥शैलेयंशिलजंवृद्धंशिलापुष्पंशिलोद्भवं॥स्थ
विरंपलितंजीर्णंतथाकालानुसार्यकम्॥शिलोत्थंचशिलाद
द्रुःशैलजंगिरिपुष्पकम्॥शिलाप्रसूनंसुभगंशैलकंषोडशा
ह्वयम्॥शैलेयंशिशिरंतिक्तंसुगंधिकफपित्तजित्॥दाहतृष्णाव
मिश्वासव्रणदोषविनाशनम्॥शैलज॥कलहू॥चोरकःशंकित
श्चंडोदुष्पुत्रःक्षेमकोरिपुः॥चपलःकितवोधूर्तःपटुर्नीचोनिशा
चरः॥गणहासःकोपनकश्चौरस्तुफलचोरकः॥दुष्कुलोग्रंथिल
श्चैवसुग्रंथिःपर्णचोरकः॥ग्रंथिपर्णोग्रंथिदलोग्रंथिपत्रस्त्रिने
त्रधा॥चोरकस्तीव्रगंधोष्णस्तिक्तोवातकफापहः॥नासामुखरु
जाजीर्णक्रिमिदोषविनाशनः॥गांठिवनाप्रसिद्धः॥पद्मकंपीत
कंपीतंमालयंशीतलंहिमम्॥शुभ्रंकेदारजंरक्तंपाटलापुष्पसं
निभं॥पद्मकाष्ठंपद्मवृत्तंसंप्रोक्तंस्याद्द्वादशाह्वयम्॥पद्मकंशीतलं
तिक्तंरक्तपित्तविनाशनम्॥मोहदाहज्वरभ्रांतिकुष्ठविस्फोटशां
तिकृत्॥पद्मक॥भाषा॥२॥प्रपौंडरीकंचसुपुष्पंपुंडर्यंपौंडरीयकं॥
पौंडर्यंचसुपुष्पंचसानुजंचानुजंस्मृतम्॥प्रपौंडरीकंचसुपुष्पमधु
रंतिक्तशीतलं॥पित्तरक्तव्रणान्हंतिज्वरदाहतृषापहम्॥पुंडरी
कंप्रसिद्धं॥लामज्जकंसुनालंस्यादमृतालंलवंलघु॥इष्टाकपथि

कंशीघ्रंदीर्घमूलंजलाश्रयम्॥लामज्जकंहिमंतिक्तंमधुरंवात
पित्तजित्॥तृड्दाहश्रममूर्च्छार्त्तिरक्तपित्तज्वरापहं॥लामज्ज॥भा
षा॥२॥मांसरोहिण्यतिरुहावृत्ताचर्मकसाचसा॥विकसामांस
रोहीचज्ञेयामांसरुहासुनिः॥अन्यामांसीसदामांसीमांसरोहा
रसायनी॥सुलोमालोमकरणीरोहिणीमांसरोहिका॥रोहिणी
सुगलंशीतंकषायंक्रिमिनाशनम्॥कंठशुद्धिकरंरुच्यंवातदो
षनिषूदनम्॥रोहिणीद्वयं॥मांसरोहिणी॥श्रीवेष्टोवृक्षधूम
श्चीडागंधोरसांगकः॥श्रीवासःश्रीरसोवेष्टोलक्ष्मीवेष्टस्तु
वेष्टकः॥वेष्टसारोरसावेष्टःक्षीरशीर्षःसुधूपकः॥धूपांगस्ति
लपर्णश्चसरलांगोपिषोडश॥श्रीवेष्टःकटुतिक्तश्चकषायः
श्लेष्मपित्तजित्॥योनिदोषरुजाजीर्णव्रणाश्चाध्मानदोषजि
त्॥श्रीवेष्टकः॥भाषाद्वय॥सौराष्ट्रेप्रसिद्धा॥उशीरममृणालं
स्याज्जलवासंहरिप्रियम्॥मृणालमभयंवीरंवीरणंसमगंधि
कम्॥रणप्रियंवारितरंशिशिरंशितिमूलकम्॥वेणीगंमूलकं
चैवजलामोदंसुगंधिकम्॥सुगंधिमूलकंशुभ्रंवालकंवसुभू
द्वयम्॥उशीरंशीतलंतिक्तंदाहश्रमहरंपरम्॥पित्तज्वरार्त्तिश
मनंजलसौगंध्यदायकम्॥बाला॥वालदवेरु॥खस॥नलिका
विद्रुमलतिकाकपोतबाणानलीचनिर्मध्या॥सुषिराध्मानी
स्तुत्यारक्तदलानर्त्तकीनटीरुद्रा॥नलिकातिक्तकटुकातीक्ष्णा
चमधुराहिमा॥कृमिवातोदरार्शःशूलघ्नीमलशोधनी॥नलि
काजाई॥वेनललिके॥इत्थंगंधद्रव्यकदंबाह्वयवीर्यव्याख्यावाचो
युक्तिविविक्तोज्वलसर्गः॥वर्गोव क्त्रांभोरुहमोदार्हमधीयत्तेनम
ध्येसंसदसौदीव्यतिवैद्यः॥येगंधयंतिसकलानिचभूतलानिलो
कांश्चयेपिसुखयंतिचगंधलुब्धान्॥तेषामयंमलयजादिसुगंधि
नाम्नांभूर्गंधवर्गइतिविश्रुतिमेतिवर्गः॥उच्चैर्यच्चरितानिशीतसु
रभीण्यभ्यस्यसत्यात्मनांदुश्चारित्रजनानिषंगजजितंद्राग्दोस्यम
मास्यात्मनः॥तस्यायंकृतिनःकृतौनरहरेःश्रीचंदनादिस्थितौव
र्गोनांकृतिनामनैगमशिरस्त्राभूषामणौद्वादशः॥इतिश्रीनरहरिपं

डितविरचिते निघंटुराजापरपर्यायनामधेयवत्यभिधानचूडा
मणौ गंधवर्गापरनाम्नि चंदनादिवर्गो द्वादशः॥ अथ सुवर्णादिव
र्गः॥ स्वर्णरौप्यताम्राणि त्रपुसीसहिरीतिका॥ कांस्यायोवर्त्तकं
कांतं किट्टं मुंडं च तीक्ष्णकम्॥ शिलासिंदूरभूनागं हिंगुलं गैरिकं
द्विधा॥ तुवरी हरितालं च गंधकं च शिलाजतु॥ सिक्थकं च द्विकासी
संमाक्षिकौ पंचधांजनम्॥ कंपिल्लं तुत्थरसकं पारदं चाभ्रकं च तु॥
स्फुटी च क्षुल्लकं शंखो कपर्दिः शुक्तिका द्विधा॥ खटिनी दुग्धपाषाणो
विमला च द्विधा मता॥ सिकता च द्विधा कुष्ठं शरवेदमिता ह्ययं॥ अ
थ रत्नं नववस्त्वेप द्मरागादिकं क्रमात्॥ माणिक्यमुक्ताफलविद्रु
माणि गारुत्मतं स्यादथ पुष्पराग:॥ वज्रं च नीलं च नवक्रमेण गोमे
दवैडूर्ययुतानि तानि॥ स्फटिकश्च सूर्यकांतो वैक्रांतश्चंद्रकांतक:
॥ राजावर्त्त: पेरजोस्यादुभौ बाणाश्च संख्यया॥ स्वर्णं सुवर्णकनको
ज्वलकांचनानि कल्याणहाटकहिरण्यमनोहराणि॥ गांगेयगैरि
कमहारजताग्निवीर्यरुक्माग्निहेमतपनीयकभास्कराणि॥ जांबू
नदाष्टापदजातरूपपिंजानचामीकरकर्बुराणि॥ कार्त्तस्वरापिंज
रस्वर्णभूरितेजांसि दीप्तानलपीतकानि॥ मंगल्यसौमेरवशातकुं
भभृंगारचंद्राजरजांबवानि॥ आग्नेयनिष्काग्निशिखानि चेति नेत्रा
स्त्रिनिर्द्धारितनाम हेम॥ स्वर्णं स्निग्धकषायतिक्तमधुरं दोषत्रयध्वं
सनं शीतं स्वादु रसायनं च रुचिकृच्चक्षुष्यमायुष्यदम्॥ प्रज्ञावीर्यब
लस्मृतिस्वरकरं कांतिं विधत्ते तनो: संधत्ते दुरितक्षयं श्रियमिदं धत्ते
नृणां धारणात्॥ दाहे तिरक्तमथ यच्च शितं छिदायां काश्मीरकांति
च विभाति निकाषपट्टे॥ स्निग्धं च गौरवमुपैति च यत्तुलायां जात्यं
तदेव कनकं मृदु रक्तपीतम्॥ सुवर्णनामगुणा:॥ तच्चैकं रसवेधजं
तदपरं जातं स्वयंभूमिजं किं चान्यद्बहुलोहसंकरभवं चेति त्रिधा कां
चनम्॥ तत्राद्यं किल पीतरक्तमपरं रक्तं ततो न्यत्तथा गौराभं तदि
ति क्रमेण तदिदं स्यात्पूर्वपूर्वोत्तमम्॥ इति स्वर्णजाति:॥ रौप्यं शुभ्र
वसु श्रेष्ठं रुचिरं चंद्रलोहकम्॥ श्वेतकं तु महाशुभ्रं रजतं तत्र रूपकं
॥ चंद्रभूति सितं तारं कलधौतेंदु लोहकं॥ कृप्यं धौतं तथा सौधं चंद्र

हासंमुनींदुकम्॥रौप्यंस्निग्धंकषायाम्लंविपाकेमधुरंसरं॥वात
पित्तहरंरुच्यंवलीपलितनाशनम्॥दाहछेदनिकाषेषुसितंस्नि
ग्धंचयद्गुरु॥सुघर्षेपिचवर्णाढ्यंउत्तमंतदुदीरितं॥रूपा॥वेल्लि
॥ताम्रंम्लेछमुखंशुल्वंतपनेष्टमुदुंवरम्॥त्र्यंबकंचारबिंदंचरवि
लोहंरविप्रियं॥रक्तंनेपालकंचैवरक्तधातुःकरेदुधा॥ताम्रंसुप
कंमधुरंकषायंतिक्तंविपाकेकटुशीतलंच॥कफापहंपित्तहरंवि
बंधशूलघ्नपांडूदरगुल्मनाशि॥घनघातसहंस्निग्धंरक्तपत्रमम
लंमृदु॥शुद्धाकरसमुत्पन्नंताम्रंशुभमसंस्कृतम्॥ताम्रगुणलक्ष
णं॥त्रपुत्रपुसमांडूकंवंगंचमधुरंहिमं॥कुरूप्यंपिच्चटंरंगंपूतिगं
धंदृशाहूयम्॥त्रपुसंकटुतिक्तंहिमंकषायलवणंसरंचमेहघ्नं॥
क्रिमिदाहपांडुशमनंकांतिकरंतद्रसायनंचैव॥श्वेतंलघुमृदु
स्वछंस्निग्धमुष्णापहंहिमं॥सूतपत्रकरंकांतंत्रपुश्रेष्ठमुदाहृतं॥
कथिल॥तवर॥सीसकंतुजडंसीसंयवनेष्टंभुजंगमं॥योगीष्टंना
गपुरंगंकुवंगंपरिपिष्टिकम्॥मृदुकृष्णायसंपद्मंतारशुद्धिकरं
स्मृतं॥सिरावृत्तंचवंगंस्याच्चीनपिष्टंचषोडश॥सीसंतुवंगतुल्यं
स्यात्तूरसवीर्यविपाकतः॥उष्णंचकफवातघ्नंअर्शोघ्नंगुरुलेख
नम्॥स्वर्णेनीलंमृदुस्निग्धंनिर्मलंचसुगौरवं॥रौप्यसंशोधने
क्षिप्रंसीसकंचतदुत्तमं॥सीसा॥रीति॥क्षुद्रसुवर्णसिंहलकंपिं
गलंचपीतलकम्॥लोहितकमारकुटंपिंगललोहंचपीतकंत
वधा॥राजरीति॥काकतुंडीराजपुत्रीमहेश्वरीब्राह्मणीब्रह्मरीति
श्चकपिलापिंगलापिच॥रीतिकायुगलंतिक्तंशीतलंलवणंरसे
॥शोधनंपांडुवातघ्नंक्रिमिप्लीहार्तिपित्तजित्॥शुद्धास्निग्धामृदुः
शीतासुरंगासूत्रपत्रिणी॥हेमोपमाशुभास्वस्याजन्यारीतिःप्र
कीर्तिता॥पित्तल॥पित्तालेयरडु॥कांस्यंसौराष्ट्रिकंघोषंकंसी
यंवह्निलोहकम्॥दीप्तंलोहंघोरपुष्पंदीप्तकंसन्नवाहूयम्॥
कांस्यंतुतिक्तमुष्णंचसुष्यंवातकफविकारघ्नं॥रूक्षंकषायरु
च्यंलघुदीपनपाचनंपथ्यं॥श्वेतंदीप्तंमृदुज्योतिःशब्दाढ्यंस्नि
ग्धनिर्मलम्॥घनाघातसहंस्तांगंकांस्यमुत्तममीरितम्॥कां

सें॥कंचु॥वर्त्तलोहं वर्त्ततीक्ष्णं वर्त्तकं लोहशंकरम्॥नीलिकानी
ललोहं च लोहजं वट्टलोहकम्॥इदं लोहकटूष्णं च तिक्तं च शि
शिरं तथा॥कफहृत्पित्तशमनं मधुरं दाहमेहनुत्॥वातुललो
ह॥पंचलोह॥अयस्कांतं कांतलोहं कांतं स्याल्लोहकांतकम्॥
कांतायसं कृष्णलोहं महालोहं च सप्तधा॥अपिच॥स्याद्भ्रामकं
तं दनुचुंबकं रोमकाख्यं स्याच्छेदकाख्यमिति तच्च चतुर्विधं स्यात्
॥कांताश्मलोहगुणवृद्धि यथाक्रमेण दार्ढ्यंगकांतिकचका
र्ष्यविरोगदायि॥तथाच॥अयस्कांतविशेषाः स्युर्भ्रामकाश्चुं
बकादयः॥रसायनकराः सर्वे देहसिद्धिकराः पराः॥न सूतेन
विना कांतं न कांतेन विना रसः॥सूतकांतसमायोगाद्रसायनमु
दीरितम्॥अयस्कांत॥भाषा २॥लोहकिट्टं तु किट्टं स्याल्लोहचू
र्णमयोमलम्॥लोहजं कृष्णचूर्णं च कार्ष्ण्यं लोहमलं तथा॥लो
हकिट्टं तु मधुरं कटूष्णं क्रिमिवातनुत्॥पक्तिशूलमरुत्शूलंहे
मगुल्मार्त्तिशोफनुत्॥लोहकिट्ट भाषा २॥मुंडं मुंडायसं लोहं दृष
त्सारं शिलात्मजम्॥अश्मजं क्षितिलोहं च आरं कृष्णायसं नव॥
तीक्ष्णशस्त्रायसं शस्त्रं पिंडं पिंडायसं शठम्॥आयसं निशितं ती
व्रं लोहखङ्गं च मुंडजं॥अयश्चित्रायसं प्रोक्तं चीनजं च त्रिपंचधा॥लो
हं रूक्षोष्णतिक्तं स्याद्वातपित्तकफापहम्॥प्रमेहपांडुशूलघ्नं ती
क्ष्णं मुंडाधिकं स्मृतम्॥पुटं तीखें॥कबुन॥होगरलोह॥स्वर्णस
म्यगशोधितं श्रमकरं स्वेदावहं दुःसहं रौप्यं जाठरजाड्यमांद्यज
ननं ताम्रं वमिभ्रांतिदं॥नागं चत्रपुचांगदोषदमयोगुल्मादिदोष
प्रदं तीक्ष्णं शूलकरं च कांतमुदितं कार्ष्ण्यामयस्फोटदम्॥विशु
द्धिहीनो यदि मुंडतीक्ष्णौ क्षुधापहौ गौरवगुल्मदायकौ॥कांस्याय
संक्लेदकतापकारकं रीत्या च संमोहनशोषदायकम्॥मनःशिला
स्यात्कुनटी मनोज्ञा शिला मनोज्ञापि च नागजिह्वा॥नेपालिका
स्यान्मनसश्च गुप्ता कल्याणिका रोगशिला दशाह्वा॥मनःशिला
कटुः स्निग्धा लेखनी विषनाशिनी॥भूतावेशभयोन्मादहारिणी
वश्यकारिणी॥मणशिल॥मनसिल॥सिंदूरं नागरेणुः स्याद्रक्तं सी

मंतकंतथा॥नागजंनागगर्भंचशोणंवीररजःस्मृतं॥गणेशभूष
णंसंध्यारागंशृंगारकंस्मृतम्॥सौभाग्यमरुणंचैवमंगल्यमनुसं
मितम्॥सिंदूरंकटुकंतिक्तंउष्णंव्रणविरोपणं॥कुष्ठघ्नंविषकं
डूतिविसर्पशमनंपरम्॥सिंदूर॥भाषा२॥सुरंगोग्निसहःसू
क्ष्मःस्निग्धःस्वच्छोगुरुर्मृदुः॥सुवर्णकरजःशुद्धःसिंदूरोमंग
लप्रदः॥सिंदूरलक्षणं॥भूनागःक्षितिनागश्चभूजंतूरक्तजं
तुकः॥क्षितिजःक्षितिजंतुश्चभूमिजोरक्ततुंडकः॥भूनागोवज्र
मारःस्यान्नानाविज्ञानकारकः॥रसस्यजारणेनूक्तंनत्सत्वंतु
रसायनम्॥दाणवे॥नेयिनोलले॥हिंगुलंबर्बरंरक्तंसुरंगंसुग
रंस्मृतम्॥रंजनंदरदंम्लेच्छंचित्रांगंचूर्णपारदम्॥अन्यच्चमार
कंचैवमणिरागंरसोद्भवम्॥रंजकंरसगर्भंचबाणभूसंख्यसं
मितं॥हिंगुलंमधुरंतिक्तंउष्णवानकफापहम्॥त्रिदोषहृद्दो
षोत्थज्वरंहरतिसेवितम्॥हिंगुल॥हिंगुलीपक॥गैरिकंरक्त
धातुःस्यात्तुगिरिधातुर्गवेधुकम्॥धातुःसरंगधातुश्चगिरिजंगि
रिमृद्भयं॥सुवर्णगैरिकंचान्यत्स्वर्णधातुःसुरक्तकम्॥संध्याभ्रं
बभ्रुधातुश्चशिलाधातुःषडाह्वयं॥गैरिकंमधुरंशीतंकषायंव्र
णरोपणम्॥विस्फोटार्शोग्निदाहघ्नंवरंस्वर्णादिकंशुभम्॥गेरु
॥सोनेगेरु॥जाजुहोजाजु॥तुवरीमृच्चसौराष्ट्रीमृत्स्नासंगासुराष्ट्र
जा॥अग्नीमृत्तालकंकासीमत्तिकासुरमृत्तिका॥स्तुत्याकांसीसु
जाताचज्ञेयाचैवचतुर्दश॥तुवरीतुतिक्तकटुकाकषायाम्लाचले
खनी॥चक्षुष्याग्रहणीछर्दिःपित्तसंतापहारिणी॥तुवरी॥तुरवि
यस्तुणु॥सौराष्ट्रप्रसिद्धा॥हरितालंगोदंतंपीतंनटमंडनंचगौरंच
॥चित्रांगंपिंजरकंभवेद्दलंतालकंचतालेच॥कनकरसंकांचनकं
विडालकंचैवचित्रगंधंच॥पिंगंचपिंगसारंगोरीललितंचसप्तदश
सत्वम्॥हरितालकटूष्णंचस्निग्धंत्वग्दोषनाशनं॥भूतभ्रांतिप्रश
मनंविषवातरुजार्त्तिजित्॥हरित्ताल॥हरिदाल॥शिलाजतुस्याद
श्मोत्थंशैलंगिरिजमश्मजं॥अश्मलाक्षाश्मजतुकंजवश्मकमिति
स्मृतम्॥शिलाजतुभवेत्तिक्तंकटूष्णंचरसायनं॥मेहोन्मादापस्मरी

शोफकुष्ठापस्मारनाशनम्॥शिलाजतु॥कलुबेवरु॥गंधकोगं
धपाषाणोगंधाश्मागंधमोदनः॥पूतिगंधोतिगंधश्चवटसौगंधि
कस्तथा॥सुगंधोदिव्यगंधश्चगंधश्चरसगंधकः॥कुष्ठारिःक्रूरगं
धश्चकीटघ्नःशरभूमिजः॥गंधकःकटुरुष्णश्चतीव्रगंधोतिवन्हि
कृत्॥विषघ्नःकुष्ठकंडूतिखर्जूत्वग्दोषनाशनः॥गंधकभाषा२॥
श्वेतोरक्तश्चपीतश्चनीलश्चेतिचतुर्विधः॥गंधकोवर्णतोज्ञेयोभि
न्नोभिन्नगुणाश्रयः॥श्वेतःकुष्ठापहारीस्याद्रक्तोलोहप्रयोगकृत्
॥पीतोरसप्रयोगार्होनीलोवर्णनरोचितः॥इतिचतुर्विधगंधकः
॥सिक्थकंमधुरंसिक्थंविघसंमधुसंभवम्॥मदनकंमधूच्छिष्टं
मदनंमक्षिकामलम्॥क्षौद्रेयंपीतरागंचस्निग्धंमाक्षिकजंतथा॥
क्षौद्रजंमधुशेषंचद्रावकंमक्षिकाश्रयम्॥सधूषितंचसंप्रोक्तंमधू
त्थंचोनविंशतिः॥सिक्थकंकपिलंस्वादुकुष्ठवातार्तिजिन्मृदु॥क
टुस्निग्धंचलेपेनस्फुटितांगविरोपणम्॥मेणभाषा२॥कासीसंधा
तुकासीसंकेसरंहललोमशम्॥शोधनंपांशुकंशीसंसुभंसमाहू
यमनम्॥कासीसंतुकषायंस्यात्शिशिरंविषकुष्ठजित्॥खर्जूक्रि
मिहरंचैवचक्षुष्यंकांतिवर्द्धनम्॥कासीस॥भाषा२॥द्वितीयंपुष्प
कासीसंवस्तकंचमलीमसम्॥हृस्वंनेत्रौषधंयोज्यंविषदंनीलमृ
त्तिका॥पुष्पकासीसकंतिक्तंशीतंनेत्रामयापहम्॥लेपेनात्यामकु
ष्ठादिनानात्वग्दोषनाशनम्॥पुष्पकासीस॥माक्षिकश्चैवमाक्षीकं
पीतकंधातुमाक्षिकम्॥तापीजंताप्यकंताप्यमापीतंपीतमाक्षिकम्॥
आवर्त्तंमधुधातुस्यात्क्षौद्रधातुस्तथापरः॥प्रोक्तंमाक्षिकधातुश्चबा
णभूहेममाक्षिकम्॥माक्षिकंमधुरंतिक्तंअम्लंकटुकफापहम्॥
भ्रमहृल्लासमूर्च्छार्तिश्वासकासविषापहम्॥धातुमाक्षिकभाषा२॥
माक्षिकंद्विविधंप्रोक्तंहेमाह्वंतारमाक्षिकम्॥भिन्नवर्णविशेषत्वात्
रसवीर्यादिकंपृथक्॥तारवादिनकेतारमाक्षिकंचप्रशस्यते॥दृ
ढहेमादिकंशस्तंरोगहृद्बलपुष्टिदम्॥माक्षिकांचेगुण॥यरडुमा
क्षिकगुणगलु॥अंजनंयामुनंकृष्णंनादेयंमेचकंतथा॥स्रोतोंजंदृ
ग्प्रदंनीलंसौवीरंचसुवीरजं॥सतुनीलांजनंचैवचक्षुष्यंवारिसंभ

वं॥कपोतकंचकापोतंसंप्रोक्तंशत्रुभूमितम्॥शीतंनीलांजनंप्रो
क्तंकटुतिक्तंकषायकम्॥चक्षुष्यंकफवातघ्नंविषघ्नंचरसायनम्
॥सौवीरांजनभाषा२॥कुलत्थादृक्प्रसादाचचक्षुष्याथकुलत्थि
का॥कुलालीलोचनहिताकुंभकारीमलापहा॥कुलत्थिकातुच
क्षुष्याकषायाकटुकाहिमा॥विषविस्फोटकंडूतिव्रणदोषनिब
र्हिणी॥कुलत्थांजनभाषा२॥कणकूटकिनवीज॥पुष्पांजनंपुष्प
केतुःकौसुंभकुसुमांजनं॥रीतिकंरीतिकुसुमंरीतिपुष्पंचपौष्पकं
॥पुष्पांजनंहिमंप्रोक्तंपित्तहिक्काप्रदाहनुत्॥नाशयेद्विषकासा
र्तिसर्वनेत्रामयापहम्॥पुष्पांजन॥भाषा२॥रसांजनंरसोद्भूतंर
सगर्भंरसाग्रजम्॥कृतकंबालभैषज्यंदार्वीक्वाथोद्भवंतथा॥रस
जातंतार्क्ष्यशैलंस्तेयंवर्याजननंतथा॥रसनाभंचाग्निसारंद्वादशाह्वं
चकीर्तितं॥रीत्यांतुधाम्यमानायांतत्किट्टंतुरसांजनम्॥तदभावेतु
कर्तव्यंदार्वीक्वाथसमुद्भवम्॥रसांजनभाषा२॥स्रोतोंजनंवारिभ
वंतथान्यत्स्रोतोद्भवंस्रोतनदीभवंच॥सौवीरसारंचकपोतसारंव
ल्मीकशीर्षंमुनिसंमिताह्वं॥स्रोतोंजनंशीतकटुःकषायंक्रिमिना
शनम्॥रसांजनंरसेयोग्यंस्तनवृद्धिकरंपरं॥स्रोतोंजनंप्रसिद्धम्
॥वल्मीकशिखराकारंभिन्ननीलांजनप्रभम्॥घर्मेचगैरिकावर्णं
श्रेष्ठंस्रोतोंजनंचतत्॥स्रोतोंजनलक्षणम्॥कंपिल्लकोथरक्तांगोरे
चनीरेचकस्तथा॥रंजकोलोहितांगश्चकंपिल्लोरक्तचूर्णकः॥कंपि
ल्लकोविरेचीस्यात्कटूष्णोव्रणनाशनः॥कफकासार्तिहारीचजंतु
क्रिमिहरोलघुः॥कंपिल्लकप्रसिद्धम्॥तुत्थंनीलाश्मजंनीलंहरि
ताश्मंचतुत्थकम्॥मयूरग्रीवकंचैवताम्रगर्भामृतोद्भवम्॥मयू
रतुत्थंसंप्रोक्तंशिखिकंठंदशाह्वयम्॥तुत्थंकटुकषायोष्णंश्वित्र
नेत्रामयापहम्॥विषदोषेषुसर्वेषुप्रशस्तंवांतिकारकम्॥तुत्थ
॥मयूरतुत्थ॥द्वितीयंखर्परीतुत्थंखर्परीरसकंतथा॥चक्षुष्यमम
तोत्पन्नंतुत्थंखर्परिकातुषट्॥खर्परीकटुकातिक्ताचक्षुष्याचरसा
यनी॥त्वग्दोषशमनीरुच्यादीप्यापुष्टिविवर्द्धनी॥खर्परी॥पार
दोरसराजश्चरसनाथोमहारसः॥रसश्चैवमहातेजारसलोहार

सोत्तमः॥सूतराट्चपलोजैत्रःशिवबीजंशिवस्तथा॥अमृतंचरसें
द्रःस्याल्लोहेशोधूर्जरःप्रभुः॥रुद्रजोहरतेजश्चरसधातुरचिंत्यजः
॥खेचरश्चामरःप्रोक्तोदेहदोमृत्युनाशनः॥स्कंदःस्कंदांशकःसू
तोदेवोदिव्यरसस्तथा॥प्रोक्तोरसायनश्रेष्ठोयशोधास्त्रिधाहू
यः॥पारदःसकलरोगनाशनःषड्रसोनिखिलयोगवाहकः॥पंच
भूतमयएषकीर्तितोदेहलोहपरसिद्धिदायकः॥मूर्छितोहरते
व्याधीन्बद्धःखेचरसिद्धिदः॥सर्वसिद्धिकरोनीलोविरुद्धोदेह
सिद्धिदः॥विविधव्याधिभयोद्यमरणजरासंकटेपिमर्त्यानां॥
पारंददातियस्मात्तस्मादयमेवपारदःकथितः॥पारद॥पार
दरसः॥अभ्रकमभ्रंभृंगंव्योमांबरमंतरिक्षमाकाशम्॥बहुप
त्रंखमनंतंगौरीजंगौरिजेयमितिरवयः॥श्वेतंपीतंलोहितंनी
लमभ्रंचातुर्विध्यंयातिभिन्नक्रियार्हं॥श्वेतंतारेकांचनेपीतर
क्तेनीलंव्याध्यांस्यग्रमग्र्यंगुणाढ्यम्॥चतुर्वर्णमभ्रकः॥नीला
भ्रंदर्दुरोनागःपिनाकोवज्रइत्यपि॥चतुर्विधंभवेत्तस्यपरी
क्षाकथ्यतेक्रमात्॥यद्वह्नौविहितंतनोतिनितरांभेकोरवंद
र्दुरोनागःस्फूत्करुतेधनुःस्वनमुपादत्तेपिनाकःकिल॥वज्रंनै
वविकारमेतितदिमान्यासेवसानःक्रमात्गुल्मींचव्रणवांश्च
कुत्सितगदांनीरुक्संजायते॥कृष्णाभ्रकचतुर्विधजानिलस
णम्॥मनोजभावभावितौयदाशिवौपरस्परम्॥तदाकिलाभ्र
पारदौगुहोद्भवौबभूवतुः॥रसाभ्रकउत्पत्तिः॥स्फटीचस्फटि
कीप्रोक्ताश्वेताशुभ्राचरंगदा॥रंगदृढादृढरंगारंगांगावसुसंमि
ता॥स्फटीचकटुकास्निग्धाकषायाप्रदरापहा॥मेहकृच्छ्रविषशो
षदोषघ्नीदृढरंगदा॥स्फटिकी॥भाषा२॥क्षुल्लकःक्षुद्रशंखःस्या
त्शंबूकोनखशंखकः॥क्षुल्लकःकटुकस्तिक्तःशूलहारीचदीप
नः॥क्षुपटगुल्ले॥शंखोह्यर्णोभवस्कंबुर्जलजःपावनध्वनिः॥कु
टिलोंतर्महानादःकंबूपूतःसुनादकः॥सुस्वरोदीर्घनादश्चबहु
नादोहरिप्रियः॥एवंषोडशधाज्ञेयोधवलोमंगलप्रदः॥शंखः
कटुरसःशीतःपुष्टिवीर्यबलप्रदः॥गुल्मशूलहरःश्वासनाशनो

विषदोषनुत्॥ शंखनामगुण॥ क्रिमिशंखः क्रिमिजलजः क्रिमि
वारिरुहश्च जंतुकंबुश्च॥ कथितोरसवीर्याद्यैः क्रुतधीभिः शंख
सदृशोयम्॥ क्रिमिशंख॥ भाषा २॥ कपर्दकोवराटश्च कपर्दिश्च
वराटिका॥ चराचरश्च वर्योबालक्रीडनकश्च सः॥ कपर्दः कटुति
क्तोष्णः कर्णशूलव्रणापहः॥ गुल्मशूलामयघ्नश्च नेत्रदोषनिकृं
तनः॥ कवडी भाषा २॥ शुक्तिर्मुक्ताप्रसूश्चैव महाशुक्तिश्च शुक्ति
का॥ मुक्तास्फोटस्तौ त्तिकंतु मौक्तिकप्रसवा च सा॥ ज्ञेया मौ
क्तिकसूश्चैव मुक्तामातंगधा स्मृता॥ मुक्ताशुक्तिः कटुः स्निग्धा
श्वासहृद्रोगहारिणी॥ शूलप्रशमनी रुच्या मधुरा दीपनी
परा॥ मोतीसीप॥ शुक्ति न सिंपु॥ जलशुक्तिर्वारिशुक्तिः
क्रिमिसूः क्षुद्रशुक्तिका॥ शंबूका जलशुक्तिश्च पुटिकातो
यशुक्तिका॥ जलशुक्तिः कटुः स्निग्धा दीपनी गुल्मशूलनुत्॥ वि
षदोषहरा रुच्या पाचनी बलदायिनी॥ नेचीसींपि॥ नोरेयसिंपु
॥ खटिनी खटिका चैव खटी धवलमृत्तिका॥ सितधातुः श्वेतधा
तुः पांडुमृत्पांडुमृत्तिका॥ खटिनी मधुरा तिक्ता शीतला पित्तदाहनु
त्॥ व्रणदोषकफास्रघ्नी नेत्ररोगनिकृंतनी॥ खडी॥ बेणबङ्गु॥ दु
ग्धाश्मदुग्धपाषाणः क्षीरगोमेदसंनिभः॥ वज्राभो दीप्तिकः सौ
धी दुग्धीक्षारयवोपि च॥ दुग्धपाषाणको रुच्य ईषदुष्णो ज्वरापहः
॥ पित्तहृद्रोगशूलघ्नः कासाध्मानविनाशनः॥ सिरिगोला॥ रं
गवालियहरेल्ल॥ कर्पूरनाममिश्रादावंते च मणिवाचकः॥ कर्पूर
मणिनामायं शुक्त्यावातादिदोषनुत्॥ विमलं निर्मलं स्वच्छं अम
लं स्वच्छदारुकं॥ बाणसंख्याभिधं प्रोक्तं तारहेमद्विधाकृतं॥ वि
मलं कटु तिक्तोष्णं त्वग्दोषव्रणनाशनम्॥ रसवीर्यादिके तुल्यं वेधे
स्यादिन्लवीर्यकम्॥ विमलारूपं॥ सिकता वालुका सिक्ता शीतला
सूक्ष्मशर्करा॥ प्रवाहोत्था महाश्म स्यात्सूक्ष्मा पानीयचूर्णका॥ वा
लुका मधुरा शीता संतापश्रमनाशिनी॥ लेपकप्रयोगतश्चैव शस्त्रता
शैत्यानिलापहा॥ वालूमललु॥ कंकुष्ठं कालकुष्ठं च विरंगं रंगदा
यकम्॥ रेचकं पुलकं चैव शोधकं कालपालकम्॥ कंकुष्ठं च द्विधा

प्रोक्तं तारहेमाभ्रकं तथा॥ कटुकं कफवातघ्नं रेचकं व्रणशूलहृत्
॥कं कुष्ठ॥ भाषा२॥ मूषकस्याभिधापूर्वं पाषाणस्याभिधानतः॥
आखुपाषाणनामायं लोहसंकरकारकः॥ उंदिरपाषाण॥ ईतिपा
षाण॥ अथ रत्नानि॥ द्रव्यं किंचन लक्ष्मीभोग्यं वसु वस्तु संपदो वृ
द्धिः॥ श्रीर्व्यवहार्यं द्रविणं धनमर्थो रास्वापतेयं च॥ द्रव्यसामान्य
नाम॥ रत्नं वसु मणिरूपं लोहं दृषद्द्रविणदीप्तवीर्याणि॥ रौहिण
कमब्धिसारं खानिकमाकरजमित्यभिन्नार्थाः॥ रत्नसामान्यनाम
॥ माणिक्यं शोणरत्नं च रत्नराड्रविरत्नकम्॥ शृंगारी रंगमाणिक्यं
तरलो रत्ननायकः॥ रागदृक्पद्मरागश्च रत्नं शोणोपलस्तथा॥ सौ
गंधिकं लोहितकं कुरुविंदं शरेंदुकम्॥ माणिक्यं मधुरं स्निग्धं वा
तपित्तप्रणाशनम्॥ रत्नप्रयोगप्रज्ञानां रसायनकरं परम्॥ माणि
कनामगुण॥ स्निग्धं गुरु गात्रयुतं दीप्तं स्वच्छं सुरंगं च॥ इति जात्यादि
माणिक्यं कल्याणं धारणात्कुरुते॥ माणिकलक्षण॥ द्विच्छायमपि
हितं कर्कशशर्करिलं भिन्नधूम्रं च॥ रागविकलं विरूपं लघु माणि
क्यं न धारयेद्धीमान्॥ माणिकदोष॥ तदुक्तं यदि पद्मरागमथ तमी
नातिरक्तं द्विधा जानीयात्कुरुविंदकं यदरुणं स्यादेषु सौगंधिकम्
॥ तन्नीलं यदि नीलगंधिकमिति ज्ञेयं चतुर्धा बुधैर्माणिक्यं कषघर्ष
णेष्वविकलं रोगेण जात्या जगुः॥ चतुर्विधमाणिक्यजातिः॥ इति
माणिक्यम्॥ मुक्तं सौम्यं मौक्तिकं मौक्तिकेयं नारं तारा भौतिकं तार
कां च॥ अंभःसारं शीतलं नीलकं च नक्षत्रं स्यादिंदुरत्नं वलक्षम्॥ मु
क्ताफलं बिंदुफलं च सुक्तिका ¯ शालेयकं शुक्लमणिः शिशिप्रिय
म्॥ स्वच्छं हिमं हैमवतं शुभं च सुधांशुरत्नं च भसम्मिताहूयम्॥ मौ
क्तिकं च मधुरं सुशीतलं दृष्टिरोगशमनं विषापहम्॥ राजयक्ष्ममुख
रोगनाशनं क्षीणवीर्यबलपुष्टिवर्द्धनम्॥ मौक्तिकनामगुण॥ नक्ष
त्राभं वृत्तमत्यंतमुक्तं स्निग्धं स्थूलं निर्मलं निर्व्रणं च॥ न्यस्तं धत्ते गौर
वं यत्तुलायां तन्निर्मौल्यं मौक्तिकं सौख्यदायि॥ मौक्तिकलक्षण॥ यद्वि
च्छायं मौक्तिकं व्यंगकायं शुक्तिस्पर्शं रक्ततां चातिधत्ते॥ मत्स्याक्षाभं
रूक्षमुत्तानतिक्तं नैतद्धार्यं धीमता दोषदायि॥ मौक्तिकलक्षण॥ मा

तंगोरगमीनपोत्रिशिरसस्त्वक्सारशंखांबुनाशुक्तीनामुदराञ्चमौ
क्तिकमणिःस्पष्टंभवत्यष्टधा॥अष्टविधामौक्तिकोत्पत्तिः॥छायापा
टलनीलपीतधवलास्तत्रापिसामान्यतःसप्तानांबहुशोनलब्धिरि
तरक्षौक्तेयकंतूल्वणम्॥मौक्तिकविशेषः॥लवणक्षारक्षोदिनि
पात्रेगोमूत्रपूरितेक्षिप्तं॥मर्दितमपिशालितुषैर्यदविकृतंतत्तुमौ
क्तिकंजात्यम्॥मौक्तिकपरीक्षा॥इतिमौक्तिकं॥प्रवालोद्गारकम
णिर्विद्रुमोंभोधिपल्लवः॥भौमरत्नंचरत्नांगोरक्तांगोरोलनामणिः
॥प्रवालोमधुरोम्लश्चकफपित्तादिदोषनुत्॥वीर्यकांतिकरस्त्रीणां
धृतोमंगलदायकः॥प्रवालगुण॥सुढंदृढघनंवृत्तंस्निग्धगात्रंसु
रंगकम्॥समंगुरुशिराहीनंप्रवालंधारयेत्शुभम्॥प्रवाललक्षण
म्॥गौररंगंजलाक्रांतंवक्रंसूक्ष्मंसकोटरम्॥रूक्षंकृष्णंलघुश्वे
तंप्रवालमशुभंत्यजेत्॥प्रवालकुलक्षणम्॥बालार्ककिरणेरक्ता
सागरसलिलोद्भवालनायतं॥त्यजतिनिजरुचंनिकषेघृष्टापिक्षा
क्षतांजात्या॥प्रवालपरीक्षा॥अवलेहवत॥गारुत्मतंमरकतंरौ
हिणेयहरिन्मणिः॥सौपर्णगरुडोद्गीर्णबुधरत्नाश्मगर्भजम्॥गर
लारिर्वायवालंगारुडंरुद्रसंमितम्॥मरकतंविषघ्नंचशीतलंमधु
रंरसे॥आमपित्तहरंरुच्यंपुष्टिदंभूतनाशनं॥मरकतनामगुण॥
स्वच्छंचगुरुसुच्छायंस्निग्धगात्रंचमार्दवसमेतम्॥अव्यंगंवहुरंगं
शृंगारीमरकतंविभृयात्॥मरकतलक्षणम्॥शार्करिलकलिलरू
क्षंमलिनंलघुहीनकल्माषम्॥त्रासयुतंविकृतांगंमरकतममरो
पिनोपभुंजीत॥मरकतलक्षणम्॥यत्शैवालशिखंडिशाड्वलह
रित्काचैश्चचाषच्छदैःखद्योतेनचबालकीरवपुषाशैरीषपुष्पेण
च॥छायाभिःसमतांदधातितदिदंनिर्दिष्टमष्टात्मकंजात्यंयत्तपना
तपेश्चपरितोगारुत्मतंरंजयेत्॥मरकतपरीक्षा॥पाचिपच्चे॥इति
मरकतम्॥पीतस्तुपुष्परागःपीतस्फटिकश्चपीतरक्तश्च॥पीता
श्मागुरुरत्नंपीतमणिःपुष्परागश्च॥पुष्पराग॥पुष्परागोम्लशीत
श्चवातजित्दीपनःपरः॥आयुःश्रियंचप्रज्ञांचधारणात्कुरुतेनृणा
म्॥पुष्परागनामगुणाः॥सच्छायंपीतगुरुगात्रंसुरंगंसुढंस्निग्धंचनि

र्मलमनीवसुरत्नशीतं॥यःपुष्परागशकलंकलयेदमुष्यपुष्णाति
कीर्तिमतिशौर्यसुखायुरर्थं॥पुष्परागलक्षणम्॥कृष्णबिंदुकि
तंधूम्रसंधवलंमलिनंलघुः॥विच्छायंशर्करागाभंपुष्परागंसदो
षकम्॥पुष्परागकुलक्षण॥घृष्टंनिकाषपट्टेयत्पुष्यतिरागमधि
कमात्मीयम्॥तेनखलुपुष्परागोजात्यतयायंपरीक्षकैरुक्तः॥पु
ष्परागपरीक्षा॥इतिपुष्परागः॥वज्रमिंद्रायुधंहीरंभिदुरंकुलि
शंपविः॥अभेद्यमशिरंरत्नंदृढभार्गवकंस्मृतम्॥षट्कोणंबहु
धारंचशतकोट्यब्धिभूमिजम्॥वज्रंचषड्रसोपेतंसर्वरोगाप
हारकम्॥सर्वाघशमनंसौख्यंदेहदार्ढ्यंरसायनम्॥वज्रना
मगुण॥भस्मांगकाकपादंचरेखाक्रांतंतुवर्तुलम्॥आधारंमलि
नंबिंदुसंत्रासेस्फुटितंतथा॥नीलाभंचिपिटंरूक्षंतद्वज्रंदोष
जंत्यजेत्॥वज्रकुलक्षणम्॥श्वेतालोहितपीतकमेचकतयाछा
याश्चतस्रःक्रमात् विप्रादित्वमिहास्यपत्सुमनसःशंसंतिसत्यं
ततः॥स्फीतांकीर्तिमनुत्तमांश्रियमिदंधत्तेयथास्वंधृतंमर्त्या
नामपथ्यापथ्यंतुकुलिशंपथ्यंहिनान्यत्ततः॥वज्रस्यचातुर्व
र्णलक्षणम्॥यत्पाषाणतलेनिकाषनिकरैर्नोघृष्यतेनिष्ठुरै
र्यच्चान्योपललोहमुद्गरमुखैर्लेखोनयात्याहतं॥यच्चान्यंनिज
लीलयैवदलयेद्वज्रेणवाभिद्यतेतज्जात्यंकुलिशंवदंतिकु
शलाःस्थाप्यंमहार्घंचतत्॥वज्रपरीक्षा॥विप्रःसोपिरसायने
षुबलवानष्टांगसिद्धप्रदोराजन्यस्तुनृणांबलीपलितजित्म
त्युंजयेदंजसा॥द्रव्याकर्षणसिद्धिदस्तुसुतरांवैश्योथशूद्रो
भवेत् सर्वव्याधिहरस्तदेषकथितोवज्रस्यवर्ण्योगुणः॥वज्र
चतुर्वर्णगुणलक्षणं॥वज्रभाषा२॥इतिवज्रम्॥नीलस्तुशौरि
रत्नंस्यान्नीलाश्मानीलरत्नकः॥नीलोपलस्तृणग्राहीमहानी
लःसुनीलकः॥मसारमिंद्रनीलंस्याद्वल्लकंपद्मरागजः॥नी
लःसतिक्तकोष्णश्चकफपित्तानिलापहः॥योद्धातिशरीरे
स्यात्शौरिर्मंगलदोभवेत्॥इतिनीलस्यनामगुणाः॥ननिम्नोनि
र्मलोगात्रोमसृणोगुरुदीप्तिकः॥तृणग्राहीमृदुर्नीलोदुर्लभो

लक्षणान्वितः॥ इति नीललक्षणगुणाः॥ मृच्छर्कराश्मकलिलो
विच्छायो मलिनो लघुः॥ रूक्षः स्फुटितगर्त्तश्च वर्ज्यो नीलः सदोष
कः॥ नीलकुलक्षणम्॥ सितशोणपीतकृष्णाः छाया नीले क्रमा
दिमाः कथिताः॥ विप्रादिवर्णसिद्ध्यै धारणमस्यापि वज्रवत्फलव
त्॥ नीलच्छायापरीक्षा॥ अस्यानं चंद्रिकास्यं दंसु दरं क्षीरपूरितम्
॥ यः पात्रं रंजयत्याशु स जात्यो नील उच्यते॥ इति नीलः॥ गोमेदक
स्तु गोमेदो राहुरत्नं तमोमणिः॥ स्वर्भानवः षडाह्वोयं पिंगः स्फटि
क इत्यपि॥ गोमेदकोम्ल उष्णश्च वातकोपविकारजित्॥ दीपनः
पाचनश्चैव धृतोयं पापनाशनः॥ गोमेदनामगुणाः॥ गोमूत्राभं य
न्मृदु स्निग्धमुग्धं शुद्धच्छायं गौरवं यच्च धत्ते॥ हेमारक्तं श्रीमतां
योग्यमेतत् गोमेदाख्यं रत्नमाख्यांति संतः॥ गोमेदलक्षणं॥ पात्रे
यत्र न्यस्ते पयः प्रयात्येव गोजलोज्ज्वलितं॥ घर्षैप्यहीनकांतिं गोमे
दं तं बुधा विदुर्जात्यम्॥ अरंगश्वेतकृष्णांगं रेखात्रासयुतं लघु॥
विच्छायं शर्करागारं गोमेदं विबुधस्त्यजेत्॥ गोमेदपरीक्षा॥ इति
गोमेदकः॥ वैडूर्यं केतुरत्नं च केतवं बालवायजम्॥ प्रावृष्यमभ्र
रोहं च खरशब्दांकुरं तथा॥ वैडूर्यरत्नं संप्रोक्तं ज्ञेयं विदुरजं त
था॥ वैडूर्यमुष्णमम्लं च कफमारुतनाशनम्॥ गुल्मादिदोषशम
नं भूषितं च शुभावहम्॥ वैडूर्यनामगुणाः॥ एकं वेणुपलाशपे
शलरुचा मायूरकंठत्विषा मार्जारेक्षणपिंगलाच्छविजुषा ज्ञेयं
त्रिधाच्छायया॥ यद्गात्रे गुरुतां दधाति नितरां स्निग्धं तु दोषोज्झितं
वैडूर्यं विदलं वदंति सुधियः स्वच्छं च तच्छोभनम्॥ वैडूर्यच्छायाल
क्षणं॥ विच्छायं मृच्छिलागर्भं लघु रूक्षं च सक्षतम्॥ सत्रासं परुषं
कृष्णं वैडूर्यं दूरतां नयेत्॥ वैडूर्यकुलक्षणम्॥ घृष्टं यदात्मनास्व
च्छं स्वच्छायां निकषाश्मनि॥ स्फुटं प्रदर्शयेदेतद्वैडूर्यं जात्यमुच्य
ते॥ वैडूर्यपरीक्षा॥ इति वैडूर्यं॥ इति नवरत्नानि॥ माणिक्यं पद्म
बंधोरतिविमलतमं मौक्तिकं शीतभानोर्माहेयस्य प्रवालं मरक
तमतुलं कल्पयेदिंदुसूनोः॥ देवेज्ये पुष्परागं कुलिशमपि कवे
नीलमर्कात्मजस्य स्वर्भानोर्माणिगोमेदकमथ विदुरोद्भावितं

किंतुकेतोः॥नवग्रहरत्नक्रमः॥इत्यमेतानिरत्नानितत्तदुद्देशतः
क्रमात्॥योदद्याद्विभयाद्वापितस्मिन्स्यादनुग्रहाग्रहः॥नवरत्नन
वग्रहणगुणः॥संत्यज्यवज्रमेकंसर्वत्रान्यत्रसंघाते॥लाघवम
थकोमलतासाधारणदोषस्तुषविज्ञेयः॥लोहितकवज्रमौक्तिक
मरकतनीलामहोपलाःपंच॥वैडूर्यपुष्परागप्रवालगोमेदकाद
योर्वाचः॥महारत्नउपरत्न॥गोमेदवालवायजदेवेज्यमणींदुनर
णिकांताद्याः॥नानावर्णगुणाढ्याविज्ञेयास्फटिकजातयःप्राज्ञैः॥
स्फटिकःशितोपलःस्यादमलमणिर्निर्मलोपलःस्वच्छः॥स्वच्छ
मणिरमलरत्नंनिस्तुषरत्नंशिवप्रियंनवधा॥स्फटिकःसमवी
र्यश्चपित्तदाहार्तिदोषनुत्॥तस्याक्षमालाजपतांदत्तेकोटिगु
णंफलम्॥स्फटिकनामगुणाः॥यद्गंगातोयबिंदुच्छविविमलत
मंनिस्तुषंनेत्रहृद्यंस्निग्धंशुद्धांतरालंमधुरमतिहिमंपित्तदाह
स्रहारि॥पाषाणैर्यन्निघृष्टंस्फुटितमपिनिजांस्वच्छतांनैवजह्या
तज्जात्यंजात्यलभ्यंशुभमुपचिनुतेशैवरत्नंविचित्रम्॥स्फटिक
परीक्षा॥अथभवतिसूर्यकांतस्तपनमणिस्तपनश्चरविकांतः॥
दीप्तोपलोग्निगर्भोज्वलनाश्माचोपलश्चवसुनामा॥सूर्यकांतो
भवेदुष्णोनिर्मलश्चरसायनः॥वातश्लेष्महरोमेध्यःपूजनाद्रवितु
ष्टिदः॥सूर्यकांतनामगुणाः॥शुद्धःस्निग्धोनिर्व्रणोनिस्तुषोंतर्यो
निर्मृष्टोव्योम्निनैर्मल्यमेति॥यस्सूर्यांशुस्पर्शनिष्ठ्यूतवन्हिर्जात्यः
सोयंवस्यतेसूर्यकांतः॥सूर्यकांतपरीक्षा॥वैक्रांतंचैवविक्रांतंनीच
वज्रंकुवज्रकं॥गोनासःक्षुद्रकुलिशंचूर्णवज्रंचगोनसः॥वज्राभा
वेचवैक्रांतंरसवीर्यादिकेसमम्॥क्षयकुष्ठविषघ्नंचपुष्टिदंसुरसा
यनम्॥वज्राकारंतयैवप्रसह्यहरणायसर्वरोगाणां॥यद्विक्रांतिं
धत्तेतद्वैक्रांतंबुधैरिदंकथितम्॥वैक्रांतभाषा॥२॥इंदुकांतश्चंद्रकां
तश्चंद्राश्माचंद्रजोपलः॥शीताश्माचंद्रिकाद्रावःशशिकांतश्चसप्त
धा॥चंद्रकांतस्तुशिशिरःस्निग्धपित्तास्रतापहृत्॥शिवप्रीतिकरः
स्वच्छोग्रहालक्ष्मीविनाशकृत्॥चंद्रकांतनामगुणाः॥स्निग्धंश्वेतं
पीतमात्रासमंतद्दत्तेनित्तेस्वच्छतायत्नुनीलाम॥यच्चग्लावंयातिचं

द्रांशुसंगाज्जात्यंरत्नंचंद्रकांतात्यमेतत्॥ चंद्रकांत॥ राजावर्त्तो
नृपावर्त्तोराजन्यावर्त्तकस्तथा॥ आवर्त्तमणिरावर्त्तः स्यादित्येषः श्र
राह्वयः॥ राजावर्त्तोकटुःस्निग्धःशिशिरःपित्तनाशनः॥ सौभाग्यंकु
रुतेनृणांभूषणेषुप्रयोजितः॥ राजावर्त्तनामगुणाः॥ निर्गौरमसि
तमसृणंनीलंगुरुनिर्मलंवहुच्छायं॥ शिखिकंठसमंसौम्यंराजाव
र्त्तंवदंतिजात्यमणिं॥ राजावर्त्तभाषाह्वयं॥ इतिस्फटिकः॥ पेरोजंह
रिनाश्मंचभस्मांगंहरितंद्विधा॥ पेरोजंस्तुकषायंस्यान्मधुरंदीपनं
परम्॥ स्थावरंजंगमंचैवसंयोगाच्चयथाविषं॥ तत्सर्वंनाशयेच्छी
घ्रंशूलंभूतादिदोषजम्॥ पेरोज॥ इतिरत्नप्रकरणं॥ सिद्धाःपारद
मभ्रकंचविविधान्धातून्स्वलोहानिचप्राहुःकिंचमणीनपीहसक
लान्संस्कारतःसिद्धिदान्॥ यत्संस्कारविहीनमेषुहिभवेद्यच्चान्य
थासंस्कृतंतन्मर्त्यंविषवन्निहंतितदिहज्ञेयाबुधैःसत्क्रियाः॥ या
न्संस्कृतानशुभगुणानथचान्यथाचेहोषांश्चयानपिदिशंतिरसा
दयोमी॥ यांश्चेहसंतिखलुसंस्कृतयस्तदेतन्नात्राभ्यधायिबहुवि
स्तरभीतिभाग्भिः॥ इतिलोहधातुरसरत्नतद्विदाद्यभिधागुणप्र
कटनास्फुटाक्षरं॥ अवधार्यवर्गमिममाद्यवैद्यकप्रगुणप्रयोगकु
शलोभवेद्बुधः॥ कुर्वंतियेनिजगुणेनरसाध्वगेननृणांजरंत्यपिव
पूंषिपुनर्नवानि॥ तेषामयंनिवसतिःकनकादिकानांवर्गःप्रसि
द्धतिरसायनवर्गनाम्ना॥ नित्यंयस्यगुणाःकिलांतरलसत्कल्या
णभूयस्तथावित्ताकर्षणवंचवश्यभुवनंभूम्नापरिष्कुर्वते॥ तेना
त्रैषकृतेनृसिंहकृतिनानामानिचूडामणौसंस्थामेतिमितस्त्रयो
दशतयावर्गःसुवर्णादिकः॥ इतिश्रीनरहरिपंडितविरचितेनिघं
टुराजापरपर्यायनाम्न्यभिधानचूडामणौरसायनवर्गमंडनवर्गा
परपर्यायनामधेयसुवर्णादिवर्गस्त्रयोदशः॥ अथपानीयादिव
र्गः॥ पानीयजीवनवनामृतपुष्करांभःपाथोंबुशंबरपयःसलिलो
दकानि॥ आपःकवारुणकबंधजलानिनीरकीलालवारिकम
लानिविषार्णसीच॥ भुवनंदहनारातिर्वासोयंसर्वतोमुखंक्षीरं
॥घपरसनिंबगमेघपुष्पमवनरसाश्चेनिनदिहिमित्ता॥पानी॥नीरध

सरु॥पानीयंमधुरंहिमंचरुचिदंतृष्णाविशोषापहंमोहभ्रांतिम
पाकरोतिकुरुतेभुक्तान्नपक्तिंपराम्॥निद्रालस्यनिरासनंविषह
रंश्रांतातिसंतर्पणंनृणांधीबलवीर्यतुष्टिजननंनष्टांगपुष्टिप्रद
म्॥पानीयसाधारणगुण॥दिव्योदकंखवारिस्यादाकाशसलिलं
तथा॥व्योमोदकंचांतरिक्षंजलंचेषुभिदाह्वयम्॥व्योमोदकंत्रिदो
षघ्नंमधुरंपथ्यदंपरम्॥रुच्यंदीपनदंतृष्णाश्रममेहापहारकम्॥
आकाशोदकनामगुण॥सद्योवृष्टंबभूमिस्थंकलुषंदोषदायकं
॥चिरस्थितंलघुस्वच्छंपथ्यंस्वादुसुखावहम्॥भूईवरिलपाउसा
चेंउदक॥पाथोनाथसमुद्रसिंधुजलदाकूपारपाथोधयःपाराव
रपयोधिसागरसरित्नाथश्चवारांनिधिः॥अंभोराशिसरस्वदंबु
धिनदीनाथाब्धिनित्यार्णवोदन्वद्वारिधिवार्धयःकधिरपांनाथो
पिरत्नाकरः॥सागरसलिलंविश्रंलवणंरक्तामयप्रदंचोष्णं॥
वैवर्ण्यदोषजननंविशेषदाहार्त्तिपित्तकरणम्॥समुद्रनाम
गुणाः॥मुनीरु॥नदीधुनीनिर्झरिणीतरंगिणीसरस्वतीशैव
लिनीसमुद्रगा॥कूलंकषाकूलवतीचनिम्नगाशैवालिनीसिं
धुरथापगापगा॥ह्रदिनीसमुद्रकांतासागरगाह्रादिनीसरि
त्कर्षुः॥स्रोतस्विनीसुधीरोधोवेधीचवाहिनीतटिनी॥नादे
यंसलिलंस्वच्छंलघुपाचनदीपनम्॥रुच्यंतृष्णापहंपथ्यंम
धुरंचेषदुष्णकम्॥सामान्यनदीनामगुणः॥गंगाभानुसुतारे
वाचंद्रभागासरस्वती॥मधुमतीविपाशाथशोणोघर्घरकस्त
था॥वेत्रावतीक्षोद्रवतीपयोष्णीतापीवितस्ताशरयूश्चसिंधुः
॥महाशतुद्रीह्यथगौतमीस्यात्कृष्णाचतुंगाचककावेरिकन्या॥इत्ये
वमाद्यासरितःसमस्तास्तडागवापीह्रदकूपकाद्याः॥अन्ये
प्यनूपात्मकदेशभेदाःकोलाभिधानैःस्वयमूहनीयाः॥धारा
कारादिकातोयमंतरिक्षोद्भवंतथा॥परीक्ष्येतयथाचोक्तंज्ञातव्यंज
लवेदिभिः॥गंगास्वर्गसरिद्वरात्रिपथगामंदाकिनीजाह्नवीपुण्या
विष्णुपदीसमुद्रसुभगाभागीरथीस्वर्नदी॥त्रिःस्रोतासुरदीर्घिका
सुरनदीसिद्धापगास्वर्धुनीज्येष्ठाजह्नुसुताचभीष्मजननीशुभ्राच

शैलेंद्रजा॥शीतंस्वादुस्वच्छमत्यंतरुच्यंपथ्यंपाक्यंपावनंपापहा
रि॥तृष्णामोहध्वंसनंदीपनंचप्रज्ञांदत्तेवारिभागीरथीयं॥भागीर
थीनामगुणाः॥यमुनातपनतनुजाकलिंदकन्यायमस्वसाचका
लिंदी॥रेवामेकलकन्यासोमसुतानर्मदाचविज्ञेया॥पित्तदाहवम
नश्रमापहंस्वादुवातजननंचपाचनं॥वह्निदीपनकरंविरोचनं
यामुनंजलमिदंबलप्रदम्॥यमुनानामगुणाः॥सलिलंलघुशीत
लंसुपथ्यंकुरुतेपित्तकफप्रकोपनं॥सकलामयमर्द्दनंचरुच्यंम
धुरंमेकलकन्यकासमुत्थं॥नर्मदाजलगुणाः॥सरस्वतीब्रह्मसमु
द्भूवाचसावाक्प्रदाब्रह्मसतीचभारती॥वेदाग्रणीचैवपयोष्णि
जातावाणीविशालाकुटिलादशाह्वा॥सरस्वतीजलंस्वादुपूतं
सर्वरुजापहं॥रुच्यंदीपनदंपथ्यंदेहकांतिकरंलघु॥सरस्व
तीनदीनामगुणाः॥चांद्रभागसलिलंसुशीतलंदाहपित्तशमनं
चवातदम्॥चंद्रभागाकाश्मीरेप्रसिद्धा॥चंद्रभागगुणसाम्यदं
जलंकिंचमाधुमतमग्निदीपनं॥मधुमती॥काश्मीरनदी॥सु
रुद्रेर्विपाशापुनःसिंधुनद्याःसुशीतंलघुस्वादुसर्वामयघ्नं॥जलं
निर्मलंदीपनंपाचनंचप्रदत्तेबलंबुद्धिमेधायुषंच॥सुरुद्रिः॥
विपाशासिंधु॥तीन्हीनदीगुणाः॥हिमवंतेजननेपश्चिमसमुद्र
गे॥शोणेबर्बरकेजलेतुरुचिदंसंतापशोषापहंपथ्यंवन्हिकरं
तथाचबलदंक्षीणांगपुष्टिप्रदम्॥शोणनदी॥बर्बरनदीविंध्यो
त्तरेप्रसिद्धा॥तत्रास्यादधनेजलंसुमधुरंकांतिप्रदंपुष्टिदंरुच्यंदी
पनपाचनंबलकरंनेत्रावतीतापिनी॥नेत्रवती॥दोन्हीएकगु
ण॥उत्तरेप्रसिद्धा॥पयोष्णीसलिलंरुच्यंपवित्रंपापनाशनम्
॥सर्वामयहरंसौरम्यंबलकांतिप्रदंलघु॥पयोष्णी॥विंध्याचल
दक्षिणेप्रसिद्धा॥वितस्तासलिलंस्वादुत्रिदोषशमनंलघु॥प्रज्ञा
बुद्धिप्रदंपथ्यंतापजाड्यहरंपरं॥वितस्ताकाश्मीरेप्रसिद्धा॥स
रयूसलिलंस्वादुबलपुष्टिप्रदायकम्॥शरयूनदीउत्तरेप्रसिद्धा॥
गोदावरीगौतमसंभवासाब्रह्माद्रिजाताप्ययगौतमीच॥गोदाव
री॥कृष्णानदीकृष्णासमुद्रगासासाकृष्णावेणीपिचकृष्णागंगा

॥कृष्णगंगानाम॥पित्तार्त्तिरक्तार्त्तिसमीरहारिपथ्यंपरंदीपन पापहारि॥कुष्ठादिदुष्टामयदोषहारिगोदावरीवारितृषानिवा रि॥गोदावरीजलगुण॥विंध्यदक्षिणेप्रसिद्धा॥कार्ष्ण्यजाड्य करंस्वादुनूनंपित्तास्रकोपनम्॥कृष्णावेणाजलंस्वच्छंरुच्यंदीप नपाचनम्॥कृष्णगंगा॥विंध्यदक्षिणेप्रसिद्धा॥मलापहाभीम रथीचघट्टगायथाचकृष्णाजलसाम्यदागुणैः॥मलापहाघट्टग योलयापिपथ्यंलघुस्वादुतरंसुकांतिदम्॥भीमरथी॥घट्टगाम लापहारीतिनदीगुणाः॥कृष्णासंगतानदी॥तुंगभद्राजलंस्नि ग्धंनिर्मलंस्वादुदंगुरुः॥कंडुपित्तास्रदंप्रायःसात्म्यंपथ्यकरंप रं॥तुंगभद्रादक्षिणेप्रसिद्धा॥कावेरीसलिलंस्वादुश्रमघ्नंलघु दीपनं॥दद्रुकुष्ठादिदोषघ्नंमेधाबुद्धिरुचिप्रदम्॥कावेरी॥न दीनामित्थमस्यासांदेशदोषादिभेदतः॥तत्तद्गुणान्वितंवारि ज्ञातव्यंकृतबुद्धिभिः॥इतिनदीविशेषगुणाः॥इतिन घः॥स र्वागुर्वीप्राङ्मुखीबाहिनीयालघ्वीपश्चाद्वाहिनीनिश्चयेन॥दे शेदेशेतद्गुणानांविशेषादेषाधत्तेगौरवंलाघवंच॥विंध्यात्प्राची याप्यवाचीप्रतीचीयाचोदीचीस्यान्नदीसाक्रमेण॥वातटोपं श्लेष्मपित्तार्त्तिलोपंपित्तोद्रेकंपथ्यपाकंचधत्ते॥हिमवतिमल याचलेचविंध्येप्रभवतिसह्यगिरौचयास्रवंती॥सृजतिकिल शिरोरुजादिदोषानपनुदतेपिचपारियात्रजाता॥इतिदेशवि शेषान्नदीगुणाः॥विशेषः॥नद्यःप्रावृषिजास्तुपीनसकफश्वा सार्तिकासप्रदाःपथ्यावातकफापहाःशरदिजाहेमंतजाबुद्धि दाः॥संतापंशमयंतिशैशिरभवेशैशेयवासंतजास्तृष्णादाहव मिश्रमार्तिशमनंग्रीष्मेपयासद्गुणाः॥इतिकालभेदान्नदीजल गुणभेदाः॥अथअनूपादिदेशजलम्॥अनूपसलिलंस्वादुस्नि ग्धंपीनहरंगुरुः॥तनोतिपामकंडूतिकफवातज्वरामयान्॥अनू पादेशजलम्॥जांगलंसलिलंस्वादुत्रिदोषघ्नंरुचिप्रदम्॥पथ्यं चायुर्बलंवीर्यंपुष्टिदंकांतिकृत्परं॥जांगलदेशजलम्॥साधार णंजलंरुच्यंदीपनंपावनंलघु॥श्रमतृष्णादाहवातकफमेदघ्नप

ष्टिदम्॥साधारणजलगुणाः॥जातंताम्रमृदस्लदेवसलिलंवा
तादिदोषप्रदंदेशाज्जाड्यकरंचदुर्जरतरंदोषावहंधूसरम्॥
वातघ्नंतुशिलाशिरोत्थममलंपथ्यंलघुस्वादुचस्वच्छंश्याममृद
स्त्रिदोषशमनंसर्वामयघ्नंपयः॥देशभूमिविशेषजलगुणाः॥
विशेषः॥ह्रदवारिवन्हिजननंमधुरंकफवातहारिपथ्यंच॥उ०
ह्ल॥प्रस्रवणजलंस्वच्छंलघुमधुरंरोचनंचदीपनकृत्॥दराचें
पाणी॥उ०रेविनउदक॥तडागसलिलंस्वादुकषायंवातदंकिय
त्॥तलावाचेंपाणी॥केरेयअर॥वापीजलंतुसंतापिवातश्लेष्म
करंगुरु॥वापी॥भाषा॥कफघ्नंकूपपानीयंक्षारंपित्तकरंलघु॥
कूपजल॥सेंदेयवापि॥औद्भिदंपित्तशमनंसलिलंलघुचस्मृत
म्॥विहरी॥उ०रते॥केदारसलिलंस्वादुविपाकेदोषदंगुरु॥त
देवबहुमुक्तंतुविशेषाद्दोषदंभवेत्॥पाटाचेंपाणी॥कालवेयउ
दकउ॥ह्रदादिउदकगुणाः॥नादेयंनवमृद्घटेषुनिहितंसंतप्तम
र्कांशुभिर्यामिन्यांचनिविष्टमिंदुकिरणैर्मंदानिलांदोलितं॥एला
द्यैःपरिवासितंश्रमहरंपित्तोष्णदाहेविषेमूर्छारक्तमदात्ययेषु
चहितंप्रशंसंतिहंसोदकं॥हंसोदकगुणाः॥यःपानीयंपिबतिशि
शिरंस्वादुनित्यंनिशीथेप्रत्यूषेवापिबतिपदिवाघ्राणरंध्रेणधीरः
॥सोयंसद्यःपतगपतिनास्पर्द्धतेनेत्रशक्त्यास्वर्गाचार्यंप्रहसति
धियाहृष्टिदृग्लोचनत्वा॥घ्राणोदकगुणाः॥विण्मूत्रारुणनीलि
काविषहतंतप्तंघनंफेनिलंदंतग्राह्यमनार्तवंसलवणंशैवालकैः
संवृतम्॥जंतुव्रातविमिश्रितंगुरुतरंपर्णौघपंकाविलंचंद्रार्कांशु
निरोहितंचनपिबेन्नीरंजडंदोषलं॥दोषजललक्षणम्॥पार्श्वशू
लेप्रतिश्यायेवातदोषेनवज्वरे॥हिक्काध्मानादिदोषेषुशीतांबु
परिवर्जयेत्॥शीतलजलवर्ज्यं॥धातुक्षयेरक्तविकारदोषेवांत्य
स्नमेहेविषविभ्रमेषु॥जीर्णज्वरेशैथिलसंनिपातेजलंप्रशस्तं
मृतशीतलंतु॥कढशीलपाणी॥कादारिदनीरु॥तप्तंपाथःपाद
भागेनहीनंप्रोक्तंपथ्यंवातजातामयघ्नम्॥अर्धांशोनंनाशयेद्वा
तपित्तंपादप्रायंतुदोषत्रयघ्नम्॥पादादिजलविशेषगुणाः॥

हेमंतेपादहीनंतुपादार्धोनंतुशारदे॥प्रावृड्वसंतेशिशिरेग्रीष्मे
चार्धावशेषितम्॥कौपंप्रास्रवणंवापिशिशिरर्तुवसंतयोः॥ग्री
ष्मेचौडंतुसेवेतदोषदंस्यादतोन्यथा॥तप्तंदिवाजाड्यमुपैतिन
क्तंनक्तंचतप्तंतुदिवागुरुस्यात्॥दिवाचनक्तंचनृभिस्तदा
त्वंतप्तंजलंयुक्तमतोगृहीतं॥दिवातप्तंरात्रिवर्ज्यम्॥रात्रितप्तं
दिवावर्ज्यम्॥तुष्णंकापिकापिशीतंकवोष्णंकापिकापिकाथ्य
शीतंचपाथः॥इत्थंनृणांपथ्यमेतत्प्रयुक्तंकालावस्थादेहसं
स्थानुबोधात्॥अपनयतिपवनदोषंदलयतिकफमाशुनाश
यत्यरुचिं॥पाचयतिचान्नमनलंपुष्णातिनिशीथपीतमुष्णां
भः॥रात्रौपीतमजीर्णदोषशमनंशंसंतिसामान्यतः पीतंवारि
निशावसानसमयेसर्वामयध्वंसनं॥भुक्तानूर्ध्वमिदंचपुष्टि
जननंप्राक्केदपुष्टिप्रदंरुच्यंजाठरवन्हिपाटवकरंपथ्यंचभु
क्त्यंतरे॥वेलाजलगुणाः॥अत्यंबुपानान्नविपच्यतेन्नंअनंबु
पानाच्चसएवदोषः॥तस्मान्नरोवन्हिविवर्द्धनार्थंमुहुर्मुहुर्वा
रिपिबेदभूरि॥जलपानलक्षणं॥जलंचतुर्विधंप्राहुरांतरिक्षोद्भ
वंबुधाः॥धारंचकारकंचैवतौषारंहिममित्यपि॥अष्टैववर्षोद्भवं
धारंकारंवर्षोपलोद्भवम्॥नीहारतोयंतौषारंहैमंप्रातर्हिमोद्भ
वम्॥धारंचद्विविधंप्रोक्तंगंगासमुद्रभेदतः॥तत्रगांगंगुणाढ्यं
स्यात्अदोषंपाचनंपरं॥यदास्यादाश्विनेमासिसूर्यःस्वातिवि
शाखयोः॥तदांबुजलदैर्मुक्तंगांगमुक्तंमनीषिभिः॥अन्यदाम
र्गशीर्षादिनक्षत्रेषुपयोंबुदैः॥अभिवृष्टमिदंतोयंसामुद्रमितिश
ब्दितम्॥धाराधरेवर्षतिरौप्यपात्रेविन्यस्यशाल्योदनसिद्धपिं
डं॥दध्नोपदिग्धेनिहितंमुहूर्तादविक्रियंगांगमथान्यथास्यात्॥
गांगंजलंस्वादुसुशीतलंचरुचिप्रदंपित्तकफापहंच॥निर्दोषम
च्छंलघुतच्चनित्यंगुणाधिकंव्योम्निगृहीतमाहुः॥चंद्रकांतोद्भवं
वारिपित्तघ्नंविमलंलघु॥मूर्छापित्तास्रदाहेषुहितंकासमदा
त्यये॥सामुद्रसलिलंशीतंकफवातप्रदंगुरु॥चित्रायमाश्विनंतच्च
गुणाढ्यंगांगवद्भवेत्॥यदितंमुनिवत्तोयंगांगंसामुद्रमेववा॥र

साश्रयवशाद्रच्छेदन्यदन्यरसादिकं॥अम्लंचलवणंचस्यात्सति
तंपार्थिवस्थले॥आप्येतुमधुरंप्रोक्तंकटुतिक्तंचतैजसे॥कषायं
वायवीयेस्यादव्यक्तंनाभसेस्मृतम्॥तत्रनाभसमेवोक्तमुत्तमंदो
षवर्जितम्॥यत्रचेदाश्विनेमासिनैववर्षतिवारिदः॥गांगतोय
विहीनेस्युःकालेतत्राधिकारुजः॥क्वचिदुष्णंक्वचिच्छीतंक्वचि
त्क्वथितशीतलम्॥क्वचिद्भेषजसंयुक्तंनक्वचिद्वारिवार्यते॥इति
पानीयप्रकरणम्॥इक्षवःपंचधाप्रोक्तानानावर्णगुणान्विताः
॥श्वेतःपुंड्रःकरंचेक्षुःकृष्णोरक्तश्चतेक्रमात्॥इक्षोःपंचभेदाः॥
कबुसेदुभेदु॥इक्षुःकर्कटकोवंशःकांतारःसुकुमारकः॥असि
पत्रोमधुतृणोवृष्योगुडतृणोनव॥साधारणइक्षुनाम॥श्वेतेक्षुस्तु
सितेक्षुःस्यात्काष्ठेक्षुर्वंशपत्रकः॥सुवंशःपांडुरेक्षुश्चकांडेक्षुर्ध
वलेक्षुकः॥सितेक्षुःकठिनोरुच्योगुरुश्चकफमूत्रकृत्॥दीपनः
-पित्तदाहघ्नोविपाकेकोष्णदःस्मृतः॥पांढराऊंस॥बिलिय
कबु॥पुंड्रकस्तुरसालःस्याद्रसेक्षुःसुकुमारकः॥कर्बुरोमिश्र
वर्णश्चनेपालेक्षुश्चसप्तधा॥पुंड्रोतिमधुरःशीतःकफकृत्पित्त
नाशनः॥दाहश्रमहरोरुच्योरसेसंतर्पणःपरः॥पुंडाऊंस॥वा
सरकबु॥अन्यःकरंकशालिःस्यादिक्षुवाटीक्षुवाटिका॥याव
नीचेक्षुयोनिश्चरसालीरसदालिका॥करंकशालिर्मधुरःशी
तलोरुचिकृन्मृदुः॥पित्तदाहहरोवृष्यस्तेजोबलविवर्द्धनः॥
रसदालि॥रसालऊंस॥कृष्णोक्षुरिक्षुरःप्रोक्तःश्यामेक्षुःको
किलाक्षकः॥श्यामवंशःश्यामनेक्षुःकोकिलेक्षुश्चकथ्यते॥कृ
ष्णेक्षुरुक्तोमधुरश्चपाकेस्वादुःसुहृद्यःकटुकोरसाढ्यः॥त्रि
दोषहारीसमवीर्यदश्चसुबल्यदायीबहुवीर्यदायी॥काला
ऊंस॥करियकबु॥रक्तेक्षुःसूक्ष्मपत्रश्चशोणोलोहितउत्कटः
॥मधुरोह्रस्वमूलश्चलोहितेक्षुश्चकीर्तितः॥लोहितेक्षुश्चम
धुरोपाकेस्याच्छीतलोमृदुः॥ पित्तदाहहरोवृष्यस्तेजोबल
विवर्द्धनः॥लोहिवाऊंस॥इतिपंचेक्षुगुणाः॥इक्षुमूलंत्विक्षुने
त्रंतच्चमोरटकंतथा॥वंशनेत्रंवंशमूलंमोरटंवंशमूरकम्॥

उंसाचेंमूल॥कव्हिनवेरु॥मूलादूर्ध्वंतुमधुरामध्येतिमधुरास्तथा
॥इक्षवस्तेग्रभागेषुक्रमाल्लवणनीरसाः॥इक्षुदंडमूलमध्याग्रगु
णाः॥अभुक्तेपित्तहाश्चेतेभुक्तेवातप्रकोपनाः॥भुक्तमध्येगुरुत
राइतीक्षुणांगुणास्त्रयः॥इक्षुदंडवेलागुणः॥वृष्योरक्तास्त्रपित्त
श्रमशमनपटुःशीतलःश्लेष्मदोस्पस्निग्धोहृद्यश्चरुच्योरचय
तिचमुदंमूत्रशुद्धिंविधत्ते॥कांतिंदेहस्यदत्तेबलमतिकुरुतेबृंह
णंतृप्तिदायिदत्तेनिष्पीड्यकांडंमृदुयतिरसितोमोहनश्चेक्षुदंडः
॥दांतीचाविलेयांऊसाचेगुण॥हल्लिनल्लिनिंदकबिनगुण॥अन्य
च्च॥पीयूषोपमितंत्रिदोषशमनंस्याद्दंतनिष्पीडितंतद्धच्चेद्दृहयं
त्रजंतदपरंश्लेष्मानिलघ्नंकियत्॥रक्तद्धानहरंतुवातजननंजा
ड्यप्रतिश्यायदंप्रोक्तंपर्युषितंकफानिलकरंपानीयमिक्षूद्भ
वं॥चतुर्विधइक्षुरसगुणः॥मधुरंलवणक्षारोस्निग्धंसोष्णं
रुचिप्रदम्॥वृष्यंवातकफघ्नंचयावनालशरोरसम्॥सेनाचा
उंस॥केजोलदकबु॥इक्षुरसःपक्वःस्निग्धःस्यात्कफवातना
शनोतिगुरुः॥अविपाकेनविदाहंतनुतेपित्तास्त्रदोषशोषांश्च
॥ताविलारस॥कासिदरसु॥इतिइक्षुप्रकरणं॥गुडःस्यादिक्षु
सारस्तुमधुरोरसपाकजः॥शिशुप्रियःसितादिस्यादरुणोर
सजःस्मृतः॥नवागुडाचानामगुण॥होसवेल्लदहेसरुगुण॥
पित्तघ्नःपवनार्त्तिजिद्रुचिकरोहृद्यस्त्रिदोषापहःसंयोगेनवि
शेषतोज्वरहरःसंतापशांतिप्रदः॥विण्मूत्रामयशोधनोग्नि
जननःपांडुप्रमेहांतकःस्निग्धःस्वादुतरोलघुश्रमहरःपथ्यःपु
राणोगुडः॥जुनागुल॥हलेयवेल्ल॥स्याद्यावनालरसपाकभवो
गुडोयंक्षारःकटुःसमधुरःकफवातहारी॥पित्तप्रदःसततमेष
निषेव्यमाणःकंडूतिकुष्ठजननोस्त्रविदाहहारी॥कालकंवेजोध
लेयांचाऊंसाचागूळ॥हेसुरुगंविजोलदकेव्हिनवेल्ल॥इतिगुड
प्रकरणम्॥शर्करोक्तातुभीनांडीश्वेतामत्स्यंडिकाचसा॥अहिक्ष
त्रासुसिकतासिताचैवगुडोद्भवा॥शर्करामधुराशीतापित्तदाहश्र
मापहा॥रक्तदोषहरा...निकिमिकोपप्रणाशिनी॥साधारणश

र्करागुण॥स्निग्धापुंड्रकशर्कराहितकरीक्षीणेक्षयेरोचकेचक्षुष्या
बलवर्द्धिनीसुमधुरारूक्षाचवंशेक्षुजा॥तृष्णाग्निबलप्रदाश्रम
हराश्यामेक्षुजाशीतलास्निग्धाकांतिकरीरसालजनितारक्तेक्षु
जापित्तजित्॥पंचेक्षुशर्करागुणाः॥यावनालीहिमोत्पन्नाहिमा
नीहिमशर्करा॥क्षुद्रशर्करिकाक्षुद्रागुडुडाजालबिंदुजा॥हिम
जाशर्करागोल्यासोष्णातिक्तातिपिच्छला॥वातघ्नीसारकीरुच्या
दाहपित्तास्रदायिनी॥गुडगुण॥तुरितु॥इतिशर्कराप्रकरणम्
॥सितजान्याशर्करजामाधवीमधुशर्करा॥माक्षीकशर्कराप्रोक्ता
सिताखंडश्चखंडकः॥सिताखंडोतिमधुरश्चक्षुष्यःछर्दिनाशनः॥
कुष्ठव्रणकफश्वासहिक्कापित्तास्रदोषनुत्॥मल्लखंड॥भाषा२॥
यवासशर्करत्वन्यासुधामोदकमोदकः॥नवराजःखंडसारःखं
डजाखंडमोदकः॥नवराजोतिमधुरःपित्तश्रमतृषापहः॥वृष्यो
विदाहमूर्छार्तिभ्रांतिशांतिकरःसरः॥नवराज॥भाषा२॥नवरा
जोद्भवःखंडःसुधामोदकजस्तथा॥खंडजद्रवजःसिद्धमोदका
मृतसारजः॥दाहंनिवारयतितापमपाकरोतितृष्णांनिपह्नुतिनि
हंतिचमोहमूर्छां॥श्वासंनिवारयतितर्पयतींद्रियाणिशीतःसदा
सुमधुरःखलुसिद्धखंडः॥खंडनवराज॥तिसरेमालखंड॥मूर
नेयपाकदमल्लखंड॥इतिमल्लखंडानि॥मधुक्षौद्रंचमाक्षीकंमा
क्षिकंकुसुमासवम्॥पुष्पासवंपवित्रंचपित्र्यंपुष्पकराह्वयम्॥
मधुसामान्यनाम॥जेनतुष्प॥माक्षिकंभ्रामरंक्षौद्रंपौत्तिकंछात्र
कंतथा॥अर्घ्यमौद्दालकंदालमित्यष्टौमधुजातयः॥आठमधुजाति
॥नानापुष्परसाहाराःकपिलावनमक्षिकाः॥यास्थूलास्ताभिरुत्प
न्नंमधुमाक्षिकमुच्यते॥माक्षिकमधुलक्षणं॥येस्निग्धांजनगोला
भाःपुष्पासवपरायणाः॥भ्रमरैर्जनितंतैस्तुभ्रामरंमधुभण्यते॥भ्रा
मरमधुलक्षणं॥पिंगलामक्षिकाःसूक्ष्माःक्षुद्राइतिहिविश्रुताः॥
ताभिरुत्पादितंयत्तुतत्क्षौद्रंमधुकथ्यते॥क्षौद्रमधुलक्षणं॥अन्त
जामक्षिकाःपिंगाःपुत्रिकाइतिकीर्त्तिताः॥तज्जातंमधुधीमद्भिः
पौत्रिकंसमुदाहृतम्॥पौत्तिकमधुलक्षणं॥छत्राकारंतुपटलंस

रघाःपीनपिंगलाः॥यत्कुर्वंतितदुत्पन्नंमधुच्छात्रकमीरितम्॥छ
त्राकमधुलक्षणं॥मक्षिकास्तीक्ष्णतुंडायास्तथाषट्पदसन्निभाः
॥तदुद्भूतंयदार्घ्याहैंतदार्घ्यंमधुवर्ण्यते॥अर्घ्यमधुलक्षणम्॥औ
द्दालाःकपिलाकीटाभूमेरुद्दलनास्मृताः॥वल्मीकांतस्तदुत्पन्न
मौद्दालकमुदीर्यते॥औद्दालकमधुलक्षणम्॥इंद्रनीलदलाका
राःसूक्ष्माश्चिन्वंतिमक्षिकाः॥यद्वृक्षकोटरांतस्थंमधुदालमिदं
स्मृतम्॥दालमधुलक्षणम्॥इत्येतस्याष्टधाभेदैरुत्पत्तिःकथि
ताक्रमात्॥अथवक्ष्याम्यहंतेषांवर्णवीर्यादिकंक्रमात्॥माक्षि
कंतैलवर्णंस्याच्छ्वेतंभ्रामरमुच्यते॥क्षौद्रंतुकपिलाभासंपौत्तिकं
घृतसंनिभम्॥आपीतवर्णंछात्रंस्यात्पिंगलंचार्घ्यनामकम्॥औ
द्दालंस्वर्णसदृशमापीतंदालमुच्यते॥इतिअष्टमधुवर्णलक्षण
म्॥माक्षिकंमधुरंरूक्षंलघुश्वासादिदोषनुत्॥भ्रामरंपिच्छिलंरू
क्षंमधुरंमुखजाड्यजित्॥क्षौद्रंतुशीतंचक्षुष्यंपिच्छलंपित्तवात
हृत्॥पौत्तिकंमधुरूक्षोष्णमस्रपित्तादिदाहकृत्॥छात्रमेह
क्रिमिघ्नंचविद्याच्छात्रंगुणोत्तरं॥अर्घ्यमध्वातिचक्षुष्यंकफ
पित्तादिदोषहृत्॥औद्दालकंतुकुष्ठादिदोषघ्नंसर्वसिद्धिद
म्॥दालंकटुकषायाम्लंमधुरंपित्तदायिच॥इतिअष्टमधुगु
णाः॥नवंमधुभवेत्स्थौल्यंनातिश्लेष्मकरंपरं॥देहस्थौल्यापहं
ग्राहिपुराणंमधुलक्षणम्॥सामान्यमधुगुणाः॥नवाजुना॥यो
सपलेयजेनतुप्पंगलु॥पक्वंदोषत्रयघ्नंमधुविविधरुजाजा
ड्यजिह्वामयादिध्वंसंधत्तेचरुच्यंबलमनिधनिदंवीर्यवृद्धिं
विधत्ते॥आमंचेदामगुल्मामयपवनरुजापित्तदाहास्रदोषा
नानत्वानंविशोषंजनयतिनयतिध्वंसमध्वंगवृद्धिम्॥नावि
लाहिरिवामधावेगुण॥कासिदपसिपजेनतुप्पदगुण॥वाण
शोधनसंधानंव्रणसंरोपणादिषु॥साधारण्यान्मधुहितंततुल्या
मधुशर्करा॥उष्णैःसहोष्णकालेवास्वयमुष्णमथापिवा॥अन्नं
मधुमनुष्याणांविषवत्तापदायकम्॥उष्णमधुगुणाः॥कीटका
दियुतमस्तवृष्टितयच्चपर्युषितकंमधुखनः॥कंटकोटरगतंच

मेचकंनत्त्वगेहजनितंचदोषकृत्॥मधुदोषलक्षणम्॥दंडैर्नि
हत्ययदुपात्तमपारयंदंशांस्तावृत्विकंमधुरसायनयोगयोग्य
म्॥हिक्कागुदांकुरविशोफकफव्रणादिदोषापहंभवतिदोषम
थान्यथाचेत्॥मधुनिर्दोषसदोषगुणाः॥माध्वीसितामधूत्पन्ना
मधुजामधुशर्करा॥माक्षीकशर्कराचैषाक्षौद्रजाक्षौद्रशर्करा॥
यद्गुणंयन्मधुप्रोक्तंतद्गुणानस्यशर्करा॥विशेषाद्बलवृष्यंचत
र्पणंक्षीणदेहिनां॥मधुशर्करानामगुणाः॥मद्यंसुराप्रसन्नास्या
न्मदिरावारुणीविरा॥मत्ताकादंबरीशीनाचपलाकामिनीप्रि
या॥मदगंधाचमाध्वीकंमधुसंधानसाधवः॥परिस्रुदमृतावी
रासेधावीमदनीचसा॥सुप्रतिष्ठामनोज्ञाचधियानामोदिनीत
था॥हालाहलिगुणारिष्टंसमकोषंमधूलिका॥मदोत्कटामहा
नंदाद्वात्रिंशदभिधाक्रमात्॥मद्यसामान्यनाम॥मद्यंसुमधुराम्लं
चकफमारुतनाशनम्॥बलदीप्तिकरंहृद्यंसरमेतन्मदावह
म्॥मद्यंतावत्त्रिविधंगौडीमाध्वीपैष्टिकाचेति॥अन्यच्च॥सौगं
धिकादिद्रव्यांतरयोगवतीविविधा॥स्याद्गुतकीरसगुडादिकृ
तातुगौडीपुष्पद्रवादिमधुसारमयातुमाध्वी॥पैष्टीपुनर्विविध
धान्यविकारजातास्यात्तामदाधिकतयात्रचपूर्वपूर्वा॥तालादि
रसनिर्यासःसैंधीहालीसरांजगुः॥नानाद्रव्यकदंबेनमद्यंकादं
बरंस्मृतम्॥सैंधीकादंबरीचेवद्विविधंमद्यलक्षणम्॥गौडीती
क्ष्णोष्णमधुरावातहृत्पित्तकारिणी॥बलकृद्दीपनीपथ्याकांति
कृत्तर्पणीपरा॥गौडीमद्यगुणाः॥माध्वीतुमधुराहृद्यानात्युष्णा
पित्तवातहृत्॥पांडुकामलगुल्मार्शप्रमेहशमनीपरा॥माध्वी
मद्यगुणाः॥पैष्टीकटूष्णातीक्ष्णास्यात्मधुरादीपनीपरा॥पैष्टी
गुणाः॥सैंधीशीताकषायाम्लापित्तहृद्वातदाचसा॥सैंधीमद्यगु
णाः॥सर्वेषांतृणवृक्षाणांनिर्यासंशीतलंगुरु॥मोहनंबलकृद्व
ष्यंतृष्णासंतापनाशनम्॥एवंविधंतुभवेन्मद्यंशिशिरंचमदोत्क
टम्॥यवधान्यकृतंमद्यंगुरुविष्टंभदायकम्॥शार्कराधानकी
तोयेकृतंशीतमनोहरम्॥शार्करंकाथ्यमेवचं ... व्यंदीपनमोहन

म्॥नानामद्यभेदाः॥मद्यंनवंसर्वविकारहेतुःसर्वंतुवातादिकदो
षदायि॥चूर्णंतुसर्वंसकलामयघ्नंबलप्रदंवृष्यकरंचदीपनम्
॥मद्यनवचूर्णगुणाः॥अन्यच्च॥मद्यप्रयोगंकुर्वंतिशूद्रादिषु
महार्त्तिषु॥द्विजस्त्रीभिस्तुनग्राह्यंमद्यप्युज्जीवयेन्मृतं॥मद्य
वर्ज्यं॥अन्येद्वादशधामद्यभेदानाहुर्मनीषिणः॥उक्तेष्वंतर्भवं
तीतिनान्यस्तुपृथगीरितः॥मद्यप्रकरणम्॥सोकु॥कलु॥इत्थं
वार्द्धिनदीनदह्रदसरःकुल्यादिनीरांतरप्रक्रांतेसुगुडादिमा
क्षिकभिदामद्यप्रभेदानपि॥प्रागत्यात्मनिबुध्यनामगुणतो
निर्णीतयोगावतीयाथातथ्यवशांतिनिश्चितमनाःकुर्वीतवै
द्यःक्रियां॥यैरस्समानोहिनृणांयथास्वंदोषान्निरस्यन्नपिदु
र्निवारान्॥तेषांरसानांवसतिंकिलेयंवर्गःप्रसिद्धोरसवर्गना
म्ना॥नस्पंदंदुग्धसिंधावमृतमथसमस्तौषधीनांनदोहंतापा
हंनैवकीनामभिलष [illegible] तिरसंनापिदोषाकरस्य॥लब्धासौर
स्यमास्येजगतिबुधजनस्तैर्वर्गःकृतोस्मिन्पानीयादिप्रसिद्धंव्र
जतिमनुमितोनामगीर्मौलिरत्नं॥इतिश्रीनिघंटुराजेपानीया
दिवर्गःचतुर्दशः॥अथक्षीरादिवर्गः॥क्षीरंपीयूषमूधस्यंदुग्धं
स्तन्यंपयोमृतं॥क्षीरजंदधितद्रूप्यंविरलंमस्तुतज्जलम्॥दूध
॥हाल्॥क्षीरजंदधि॥दहि॥मोसरु॥तद्रूप्यंविरलंपात्तालदहि
॥नेल्लितुमोसरु॥मस्तुतज्जलंदहिंचेपाणि॥मोसरनीरु॥दधि
जंनवनीतंस्यात्सारोहैयंगवीनकम्॥लोणी॥घृतमाज्यंहविः
सर्पिःपवित्रंभवनीतजं॥अमृतंचाभिघारश्चहोम्यमायुश्चतेज
सम्॥तूप॥तुप्प॥म्रक्षणंदधिजस्नेहःस्निग्धताम्रक्षएवच॥
अभ्यंगोभ्यंजनंचैवचोपडश्चघृतादिकः॥चोप्पड॥हडसु॥त
क्रंगोरसजंघोषकालशेयंबिलोडितम्॥दंडाहतमरिष्टोम्ल
मुदश्विन्मथितंद्रवः॥ताक॥मज्जिगे॥तक्रंत्रिभागदधिसंयुत
मंबुधीरैरुक्तंदधिद्विगुणवारियुतंतुमस्तु॥दध्यंभसीयदिस
मेतदुदश्विदाहुस्तत्केवलंतुमथितंमुनयोवदंति॥तक्रविशे
षः॥गोमूत्रंगोजलंगोंभोगोनिर्यदंचगोद्रवः॥गोमूत्रम्॥गो

मयोगोपुरीषंस्याद्गोविष्ठंगोमलंचतत्॥इतिक्षीरादिसमस्त
द्रव्यनामानि॥गोमहिषीछागलाविकगजतुरगखरोष्ट्रमानु
षस्त्रीणाम्॥क्षीरादिकगुणदोषावक्ष्येक्रमतोयथायोगम्॥
गव्यंक्षीरंपथ्यमत्यंतरुच्यंस्वादुस्निग्धंपित्तवातामयघ्नम्॥कां
तिप्रज्ञाबुद्धिमेधांगपुष्टिंधत्तेस्पष्टंवीर्यवृद्धिंविधत्ते॥गाईचेंदू
धगुण॥गोल्यंतुमहिषीक्षीरंविपाकेशीतलंगुरु॥बलपुष्टिप्र
दंवृष्यंपित्तदाहास्रनाशनम्॥म्हैषीचेंदूधगुण॥यम्येयहालु
॥अजाजंलघुकायास्यात्नानाद्रव्यनिषेवणात्॥नात्यंबुपाना
द्व्यायामात्सर्वव्याधिहरंपरं॥जाजनगरे॥शेलीदूधाचेगुण॥
पुट्टआडिनहालुगुण॥सूक्ष्माजदुग्धेतिचसंवदाहेगोदुग्धवी
र्यात्त्वधिकंगुणेच॥सुक्षीणदेहेषुचपथ्यमुक्तंस्थूलाजदुग्धंक
फितैष्ययत्नैः॥थोरेशेलिचेंदूधगुण॥हिरियआडीनहालु॥
आविकंतुपयःस्निग्धंकफपित्तहरंपरं॥स्थौल्यमेहहरंपथ्यं
लोमशंगुरुवृद्धिदं॥मेंढिचेंदूध॥कंबलगुरियहालु॥मधुरं
हस्तिनीक्षीरंवृष्यंगुरुकषायकम्॥स्निग्धंस्थैर्यकरंशीतंचक्षु
ष्यंबलवर्द्धनम्॥हातिणिचेंदूध॥आनेयहालु॥अश्वीक्षीरंतु
रूक्षाम्ललवणंदीपनंलघु॥देहस्थैर्यकरंबल्यंगौरवंकान्तिक
त्परम्॥घोडीचेदूध॥बलकृद्गर्दभीक्षीरंवातश्वासहरंपरं॥मधु
राम्लरसंरूक्षंदीपनंपथ्यदंस्मृतं॥गर्दभदूध॥कत्तेयहालु॥उष्ट्री
क्षीरंकुष्ठशोफापहंतत्पित्तार्शोघ्नंतत्कफाटोपहारि॥आनाहार्ति
जंतुगुल्मोदराख्यंश्वासोल्लासंनाशयत्याशुपीतम्॥करहीदूध
॥अट्टेयहालु॥मधुरंमानुषीक्षीरंकषायंचहिमंलघु॥चक्षुष्यंदी
पनंपथ्यंपाचनंरोचनंचतत्॥मानुषीक्षीर॥स्त्रीचेंदूध॥हेंगुसि
ने हालु॥इतिएकादशक्षीरगुणाः॥क्षीरंकासश्वासकोपायसर्वं
गुर्वामंस्यात्प्रायशोदोषदायि॥तच्चेत्तप्तंवर्जितंपथ्यमुक्तंनारीक्षी
रंत्वाममेवामयघ्नं॥हिरवेंनाविलेंदूध॥बिसियहालकासिद्हा
लगुण॥उक्तंगव्यादिकंदुग्धंधारोष्णममृतोपमम्॥सर्वामयहरंप
थ्यंचिरसंस्थंतुदोषदम्॥धारो[illegible]गुण॥अ[illegible]॥केमाविकंपथ्य

नमंशृतोष्णंक्षीरंत्वजानांशृतशीतमाहुः॥दोहान्तशीतंमहिषीप
यश्चगव्यंतुधारोष्णमिदंप्रशस्तम्॥चतुर्विधक्षीरगुण॥वृष्यंबृंह
णमग्निवर्द्धनकरंपूर्वाह्णपीतंपयोमध्यान्हेबलदायकंकफहरंरु
छ्रस्यविच्छेदकम्॥बाल्येवन्हिकरंततोबलकरंवीर्यप्रदंवार्द्ध
केरात्रौक्षीरमनेकदोषशमनंसेव्यंनरैःसर्वदा॥क्षीरंमुहूर्त्तत्रित
योषितंयदतप्तमेतद्धिकरोतिप्रयाति॥षष्टेतुदोषंकुरुतेतदूर्ध्वंवि
षोपमंस्याद्दुषितंदशानाम्॥जीर्णज्वरेकफेक्षीणेक्षीरंस्यादमृतो
पमम्॥तदेवतरुणेपीतंविषवद्धंतिमानुषम्॥चतुर्थभागंसलि
लंनिधाययत्नाद्यदावर्त्तितमुत्तमंतत्॥सर्वामयघ्नंबलपुष्टिका
रिवीर्यप्रदंक्षीरमतिप्रशस्तम्॥क्षीरक्वाथ॥गव्यंपूर्वाह्णकालेस्या
दपराह्णेतुमाहिषं॥क्षीरंसशर्करंपथ्यंयद्वास्तात्म्येचसर्वदा॥पि
त्तघ्नंशृतशीतलंकफहरंपक्वंतदुष्णंभवेच्छीतंयत्तुनपाचितंतद
खिलंविष्टंभदोषप्रदं॥धारोष्णंत्वमृतंपयःश्रमहरंनिद्राकरंकां
तिदंवृष्यंबृंहणमग्निवर्धनमतिस्वादुत्रिदोषापहं॥शृतशीता
दिक्षीरगुण॥क्षीरंनयुंजीतकदाप्यतप्तंतप्तंनचैतल्लवणेनसार्धं
॥पिष्टान्नसंधानकमाषमुद्गकोशातकीकंदफलादिकैश्च॥तथा
च॥मत्स्यमांसगुडमुद्गमूलकैःकुष्ठमावहतिसेवितंपयः॥शाक
जांबवरसैस्तुसेवितंमारयत्यबुधमाशुसर्पवत्॥क्षीरवर्जनस्था
न॥स्निग्धंशीतंगुरुक्षीरंसर्वकालंनसेवयेत्॥दीप्ताग्निंकुरुतेमं
दंमंदाग्निंनष्टमेवच॥नित्यंतीव्राग्निनासेव्यंसुपक्वंमाहिषंपयः
॥पुष्यंतिधातवःसर्वेबलपुष्टिविवर्द्धनम्॥क्षीरसेवनं॥क्षीरंग
वाजकादेर्मधुरंक्षारंनवप्रसूतानां॥रूक्षंचपित्तदाहंकरोतिर
क्तामयंकुरुते॥तानीचेंदूध॥यलगंदियहालु॥मधुरंत्रिदोषश
मनंक्षीरंमध्याप्रसूतानां॥लवणंमधुरंक्षीरंविदाहजननंचि
रप्रसूतानाम्॥पाडसेगाईचेंदूध॥कडकंदियाविनपालगुण
॥गुणहीनंनिःसारंक्षीरंप्रथमप्रसूतानां॥मेध्यंचसरसायनमु
क्तमिदंदुर्बलंतुवृद्धानां॥पाढउलादिदूधगुण॥चोत्विलुमो
दलागिपालगुण॥तासांमासत्रयात्पूर्वंगुर्विणीनांचयत्पयः॥य

ह्राहिलवणंक्षीरंमधुरंपित्तदोषकृत्॥गर्भिणीगायिचेंदूध॥ग
ब्दाविनपालु॥गवादीनांवर्णभेदाद्गुणाद्दुग्धादिकेपृथक्॥
कैश्चिदुक्तोविशेषाच्चविशेषोदेशभेदतः॥तथाउक्तंच॥देशेषुदे
शेषुचतेषुतेषुतृणांबुनीयादृशदोषयुक्ते॥तत्सेवनादेवगवादि
कानांगुणाहिदुग्धादिषुतादृशात्वं॥देशेविशेषात्क्षीरादिगुणाः॥
शीतंस्निग्धंगुरुगौल्यंवृष्यंपित्तापहंपरम्॥ज्ञेयंचैवाभिधीतस्य
कीलाटंतुपयःकृदः॥इतिक्षीरप्रकरणम्॥दधिगव्यमतिपवि
त्रंशीतंस्निग्धंचदीपनंबलकृत्॥मधुरमरोचहारिग्राहीच
वातामयघ्नंच॥गाईचेंदहि॥आकलमोसरु॥माहिषंमधुरं
स्निग्धंश्लेष्मकृद्रक्तपित्तजित्॥बलासवर्द्धनंवृष्यंश्रमघ्नंशो
धनंदधि॥महिषिचेंदहि॥यम्मेयमोसरु॥दध्याजंकफवात
घ्नंलघूष्णंनेत्रदोषनुत्॥दुर्नामश्वासकासघ्नंरुच्यंदीपनपा
चनम्॥शेलिचेंदहिं॥आडिनमोसरु॥आविकंदधिसुस्निग्धं
कफपित्तकरंगुरु॥वातेचरक्तवातेचपथ्यंशोफव्रणापहम्॥
मेंढिचेंदहि॥कुरियमोसरु॥हस्तिनीदधिकषायलघूष्णप
क्तिशूलशमनंरुचिप्रदं॥दीप्तिदंखलुबलासगदघ्नंवीर्यव
र्द्धनबलप्रदमुक्तं॥हानिनीदधि॥आनेयमोसरु॥अश्वीदधि
स्यात्मधुरंकषायंकफार्तिमूर्च्छामयहारिरूक्षं॥वातात्स्यदंदी
पनकारिनेत्रदोषापहंतत्कथितंपृथिव्यां॥घोडिचेंदहि॥कु
दिरेयमोसरु॥गर्दभीदधिरूक्षोष्णंलघुदीपनपाचनम्॥म
धुराम्लरसंरुच्यंवातदोषविनाशनम्॥गाढवीचेंदहि॥कते
यमोसरु॥औष्ट्रमर्शांसिकुष्ठानिक्रिमिशूलोदराणिच॥विहं
तिकटुकंस्वादुकिंचिदम्लरसंदधि॥करहीचेंदहि॥उ०ठेयमो
सरु॥विपाकेमधुरंबल्यंअम्लंसंतर्पणंगुरु॥चक्षुष्यंग्रहदो
षघ्नंदधिस्त्रीस्तन्यसंभवम्॥स्त्रीदधि॥हेम्मेकुलहालिनमो
सरु॥इतिनवभेदंदधि॥दध्यम्लंगुरुवातदोषशमनंसंग्रा
हिमूत्रावहंबल्यंशोफकरंचरुच्यशमनंवन्हेश्वशंतिप्रदम्
॥कासश्वाससपीनसेषुविषमेशीतज्वरेस्याद्धितंरक्तोद्रेककरं

करोतिसततंशुक्रस्यवृद्धिंपरां॥सामान्यदधिगुणः॥लवणमरि
चसर्पिःशर्करामुद्गधात्रीकुसुमरसविहीनंनैनदद्यान्तिनित्यं॥
नचशरदिवसंतेनोष्णकालेनरात्रौनदधिकफविकारेपित्त
दोषेपिनाद्यात्॥दधिवर्ज्यस्थानम्॥त्रिकटुकयुतमेतद्राजिका
चूर्णमिश्रंकफहरमनिलघ्नंवन्हिसंधुक्षणंच॥तुहिनशिशि
रकालेसेवितंचातिपथ्यंरचयतितनुदार्ढ्यंकांतिमत्वंचनृणा
म्॥संयोगदधिसेवनकालः॥दधिमधुरमीषदम्लंमधुराम्लंवा
हितंनचात्युष्णं॥यावद्यावन्मधुरंदोषहरंतावदुक्तमिदम्॥इ
तिदधिप्रकरणम्॥उष्णाम्लंरुचिपक्तिदंक्लमहरंबल्यंकषा
यंसरंभुक्तिछेदकरंतृषोदरगदप्लीहार्शसांनाशनम्॥स्रोतः
शुद्धिकरंकफानिलहरंविष्टंभशूलापहंपांडुश्वासविकारगु
ल्मशमनंमस्तुप्रशस्तंलघु॥मस्तुगुणाः॥दह्निचेपाणीगुण
॥मोसरनीरगुण॥उक्तंश्लेष्मसमीरहारिमथितंतन्नश्लेष्मपि
त्तापहंरुच्यंप्राहुरुदश्विदाख्यमधिकंतक्रंत्रिदोषापहम्॥मं
दाग्नावरुचौविदाहविषमश्वासार्तिकासादिषुश्रेष्ठंपथ्यत
मंवदंतिसुधियस्तक्रत्रयंह्युत्तमम्॥तथाच॥तक्रंत्रिदोषश
मनंरुचिदीपनीयंरुच्यंवमिश्रमहरंक्लमहारिमस्तु॥बल्यप्र
दंपवननाशमुदश्विदाख्यंशस्तंकफश्रममरुद्घ्नमनेषुघोल
म्॥चतुर्विधतक्रगुण॥अम्लेनवातंमधुरेणपित्तंकफंकषाये
णनिहंतिसद्यः॥यथासुराणाममृतंहितायतथानराणामिह
तक्रमाहुः॥आमातिसारेचविसूचिकायांवातज्वरेपांडुषुकाम
लेषु॥प्रमेहगुल्मोदरवातशूलेनित्यंपिबेत्तक्रमरोचकेच॥अपि
च॥शीतकालेग्निमांद्येचकफेपांड्वामयेषुच॥मार्गोपरोधेकु
ष्ठादिव्याधौतक्रंप्रशस्यते॥वातोदरीपिबेत्तक्रंपिप्पलीलवणा
न्वितं॥शर्करामरिचोपेतंस्वादुपित्तोदरीपिबेत्॥यवानीसैंधवा
जाजीव्योषयुक्तंकफोदरे॥संनिपातोदरेतक्रंत्रिकटुक्षारसैंध
वं॥तक्रसेवनस्थानं॥तक्रंदद्यान्नक्षतेनोष्णकालेनोदौर्बल्ये
नोतृषामूर्छितेच॥नैवभ्रांतौनैवपित्तास्रदेहेनैतद्द्यात्सृति

कायांविशेषात्॥तक्रंवर्ज्यस्थानं॥तक्रंस्नेहान्वितंतुदनिद्राजा
ड्यप्रदंगुरु॥अर्धावशिष्टंसामान्यंनिःशेषंलघुपथ्यदम्॥तक्रल
क्षणम्॥ताक॥अलेमज्जिगे॥इतितक्रप्रकरणम्॥शीतंवर्णब
लावहंसुमधुरंवृष्यंचसंग्राहकंवातघ्नंकफहारकंरुचिकरंस
र्वांगशूलापहम्॥कासघ्नंश्रमनाशनंसुखकरंकांतिप्रदंपुष्टिदं
चक्षुष्यंनवनीतमुत्थितनवंगोःसर्वदोषापहम्॥साधारणलोणि
याचेगुण॥साधारणबेणेगुण॥गव्यंचमाहिषंचापिनवनीतंनवो
द्भवम्॥शस्यतेबालवृद्धानांबलकृत्पुष्टिवर्द्धनम्॥गाइम्हैसिचें
लोणी॥आकलयम्मेयबणेगुण॥माहिषंनवनीतंतुकषायंमधु
रंरसे॥शीतंवृष्यप्रदंबल्यंग्राहिपित्तघ्नतुंदरम्॥महिषीलोणीगु
ण॥यम्मेयबेणेगुण॥लघ्वजातंतुमधुरंकषायंचत्रिदोषनुत्॥
चक्षुष्यंदीपनंबल्यंनवनीतंहितंसदा॥जाजनगरसेलिलोणिगु
ण॥दीपदाडिबणेयगुण॥नवनीतंनवोत्थंतुछागजंक्षयकासजि
त्॥बल्यंनेत्रामयघ्नंचकफघ्नंदीपनंपरं॥लोवससेलिचेगुण॥
टेसवालआडिनबेणेयगुण॥आबिकंनवनीतंतुविपाकेतुहिमं
लघु॥योनिशूलेकफेवातेदुर्नाम्निचहितंसदा॥एडिकीचेंलो
णीगुण॥एलगुगुरियबेणेगुण॥भेडकंनवनीतंतुक्लिष्टंगंधंच
शीतलम्॥मेधाहृद्गुरुपुष्टिंचस्थौल्यंमंदाग्निदीपनम्॥मेंढिचें
लोणीगुण॥कुरियबेणेगुण॥हस्तिनीनवनीतंतुकषायंशीतलं
लघु॥तिक्तंविष्टंभिजंतुघ्नंहंतिपित्तकफक्रिमीन्॥हात्तिनीलोणी
॥आनेयबेणेगुण॥अश्वीयंनवनीतंस्यात्कषायंकफवातजित्॥
चक्षुष्यंकटुकंचोष्णंईषद्धातापहारकम्॥घोडीचेंलोणीगुण॥कु
दिरेबेणेगुण॥गर्दभीनवनीतंतुकषायंकफवातनुत्॥बल्यंदी
पनदंपाकेलघूष्णंमूत्रदोषनुत्॥गाढवीचेंलोणीगुण॥कत्तेयबे
णेगुण॥औष्ट्रंतुनवनीतंस्याद्विपाकेलघुशीतलम्॥व्रणक्रिमि
कफास्रघ्नंवातघ्नंविषनाशनम्॥करेहीचेंलोणीगुण॥वोंवेयबे
णेयगुण॥नवनीतंतुनारीणांरुच्यंपाकेलघुस्मृतम्॥चक्षुष्यंस
र्वरोगघ्नंदीपनंविषनाशनम्॥[illegible]चेंलोणीगुण॥हेंगुसिनबेणेय

गुण॥शीतंरुच्यनवोद्धतंसुमधुरंवृष्यंचवातापहंकासघ्नंक्रिमि
नाशनंकफकरंसंग्राहिशूलापहम्॥बल्यंपुष्टिकरंतृषार्तिशम
नंसंतापविच्छेदनंचक्षुष्यंश्रमहारितर्पणकरंदध्यूद्भवंपित्तजि
त्॥साधारणनवनीतगुण॥एकाहाद्युषितंप्रोक्तमुत्तरोत्तरगंधि
दम्॥अहर्द्वयंसर्वरोगाढ्यंदधिजंतद्घृतंस्मृतम्॥जुनेंलोणीनूप
गुण॥पलपबेणेयगुण॥इतिएकादशनवनीतप्रकरणम्॥धी
कांतिस्मृतिदायकंबलकरंमेधाप्रदंपुष्टिकृद्वातश्लेष्महरंश्रमो
पशमनंपित्तापहंहृद्यदं॥वन्हेर्वृद्धिकरंविपाकमधुरंवृष्यंवपु
स्थैर्यदंगव्यंहव्यतमंघृतंबहुगुणंभोग्यंभवेद्भाग्यतः॥गाइचेंनूप
॥आकलतुप्पवु॥सर्पिर्माहिषमुत्तमंधृतिकरंसौख्यप्रदंकांतिकृ
द्वातश्लेष्मनिबर्हणंबलकरंवर्णप्रदानेक्षमं॥दुर्नामग्रहणीविका
रशमनंमंदानलोद्दीपनंचक्षुष्यंनवगव्यतःपरमिदंहृद्यंम
नोहारिच॥म्हैसीचेंनूपयम्मेतुप्पउ॥आजमाज्यंतुचक्षुष्यं
दीपनंबलवर्द्धनम्॥कासश्वासकफातंकराजयक्ष्मसुश
स्यते॥शेलीचेंनूप॥आडिनतुप्पउ॥पाकेलघ्वाविकंसर्पिर्न
वंपित्तप्रकोपनम्॥योनिदोषकफेवातेशोकेकंपेचतद्धि
तम्॥एडिचेंनूप॥एलगुरियतुप्पउ॥भैडकंघृतमतीवगौ
रवाहूर्जमेवसुकुमारदेहिनाम्॥बुद्धिपाटवकरंबलावहं
सेवितंचकुरुतेनृणांवपुः॥मेंढीचेंनूप॥त्रणिगुर्वियतुप्प॥
निहंतिहस्तिनीसर्पिःकफपित्तविषक्रिमीन्॥कषायलघु
विष्टंभितिक्तंचाग्निकरंपरं॥हस्तिनीघृत॥अश्वासर्पिस्तुकटुकं
मधुरंचकषायकं॥ईषद्दीपनदंमूर्छाहारिवातान्वल्पदंगुरु॥घो
डिचेंनूप॥घोलिगेयतुप्प॥घृतंगार्दभिकंबल्यंदीपनंमूत्रदो
षनुत्॥पाकेलघूष्णवीर्यंचकषायंकफनाशनम्॥गाढवीचें
नूप॥कत्तेयतुप्प॥घृतमौष्ट्रंतुमधुरंविपाकेकटुशीतलम्॥कुष्ठ
क्रिमिहरंवातकफगुल्मोदरापहम्॥करहीचेंनूप॥वोंट्टेयतु
प्प॥नारीसर्पिस्तुचक्षुष्यंपथ्यंसर्वामयापहं॥मंदाग्निदीपनंरु
च्यंपाकेलघुविषापहम्॥स्त्रीचेंनूप॥हेंगुसिनतुप्प॥मदापस्मा

रमूर्छादिशिरःकर्णाक्षिजोरुजः॥ सर्पिःपुराणं जयति व्रणशोध
नरोपणम्॥ जुनेनूप॥ आयुर्वृद्धिं वपुषि दृढतां सौकुमार्यं च कां
तिं बुद्धिं धत्ते समतिबलकरं शीतविध्वंसनं च॥ पथ्यं बाल्ये वयसि
तरुणे वार्द्धके चाति बल्यं नान्यत्किंचिज्जगति गुणदं सर्पिषः प
थ्यमस्ति॥ इति घृतप्रकरणम्॥ कांजिकं कांजिका वीरं कुल्माषा
भिभवं तथा॥ अवंति सोमधान्याम्लमारनालोम्लसारकः॥ कां
जिकं वातशोफघ्नं पित्तघ्नं ज्वरनाशनम्॥ दाहमूर्छाश्रमघ्नं च शू
लाध्मानविबंधनुत्॥ कांजि॥ अंबिल॥ कांजिकं कांजितैलं च प
लितं वातकारकम्॥ दाहकं गात्रशैथिल्यं भक्षणान्न च मर्दनात्॥
चुक्रं सहस्रवेधं च रसाम्लं चक्रवेधकम्॥ शाखाम्लभेदनं चैवम
म्लसारं च चुक्रिका॥ चुक्रं तिक्ताम्लकं स्वादु कफपित्तविनाशन
म्॥ नासिकागददुर्गंधशिरोरोगहरं परं॥ कांजीभेद॥ सौवीर
कं सुवीराम्लं ज्ञेयं गोधूमसंभवम्॥ यवाम्लजं यवोत्थं च तुषोत्थं
च तुषोदकम्॥ सौवीरकं चाम्लरसं केश्यं मस्तकदोषजित्॥ ज
राशैथिल्यहरणं बलसंतर्पणं परम्॥ सौवीरकाः गोधूमयवतु
षाम्लगुणाः॥ तंदुलोत्थं तंदुलांबु कषायं मधुरं लघु॥ संग्राहि वि
षविकुर्दितृट्दाहव्रणनाशकृत्॥ धुवण॥ अक्षि गक्षिहरे॥ अनो
दजः शिवरसोत्यहात्पर्युषितेरसे॥ दीपनं मधुराम्लं तु दाहजिल्ल
घु तर्पणं॥ शिवरस॥ भाषा २॥ इति कांजिकादि॥ गोमूत्रं कटु ति
क्तोष्णं कफवातहरं लघु॥ पित्तकृद्दीपनं मेध्यं त्वग्दोषघ्नमतिप्र
दं॥ गोमूत्रगुणाः॥ आकलगोतगुण॥ माहिषं मूत्रमानाहशोफगु
ल्माक्षिदोषनुत्॥ कटूष्णं कुष्ठकंडूतिशूलोदररुजापहम्॥ म्हैसी
चे मूत॥ यम्हेगोत॥ अजामूत्रं कटूष्णं च रूक्षं नाडीविषार्तिजित्
॥ प्लीहोदरकफश्वासगुल्मशोफहरं लघु॥ सेलिचे मूत्र॥ आवि
कं तिक्तकटुकं मूत्रमुष्णं च कुष्ठजित्॥ दुर्नामोदरशूलार्तशोफ
मेहविषापहं॥ आडिनगोमूत्र॥ कुरीयगोमूत्र॥ हस्तिमूत्रं तु ति
क्तोष्णं लवणं वातभूतनुत्॥ तिक्तं कषायं शूलघ्नं हिक्काश्वासह
रं परं॥ हात्तिणीचे मूत्र॥ आनेयगोमूत्र॥ अश्वमूत्रं तु तिक्तोष्णं

तीक्ष्णंचविषदोषजित्॥वातप्रकोपशमनंपित्तकारिप्रदीप
नम्॥घोडेयाचेंमूत॥कुदरेयमूत्र॥खरमूत्रंकटूष्णंचक्षारंती
क्ष्णंकफापहम्॥महावातापहंभूतकंपोन्मादहरंपरम्॥गाढ
वीचेंमूत॥कत्तेयमूत्र॥औष्ट्रकंकटुतिक्तोष्णंलवणंपित्तकोप
नम्॥बल्यंजठररोगघ्नंवातदोषविनाशनम्॥करहीमूत्र॥ओं
ठेयगोंवत॥मानुषंमूत्रमामघ्नंक्रिमिव्रणविषार्तिनुत्॥तिक्तो
ष्णंलवणंरूक्षंभूतत्वग्दोषवातजित्॥नरमूत्र॥शूलगुल्मोदरा
नाहवातविच्छर्दनादिषु॥मूत्रप्रयोगसाध्येषुगोमूत्रंकल्पयेद्बु
धः॥इतिनवमूत्रप्रकरणम्॥तैलंयत्तिलसर्षपोदितकुसुंभोत्था
तसीधान्यजंयच्चैरंडकरंजकेंगुदिफलैर्निंबाक्षनिर्गुंडकैः॥ज्यो
तिष्मत्य॰ःयोद्भवंमधुरिकाकोशाम्रचित्राभवंकर्पूरत्रपुसादिजं
चसकलंसिध्येत्क्रमात्कथ्यते॥तिलतैलमलंकरोतिकेश्यंमधुरंति
क्तकषायमुष्णतीक्ष्णं॥बलकृत्कफवातजंतुखर्जूव्रणकंडूतिह
रंचकांतिदायि॥तिलतैल॥सार्षपतिक्तकटूष्णंवातकफविका
रघ्नं॥पित्तास्रदोषदंक्रिमिकुष्ठघ्नंतिलजवच्चचक्षुष्यम्॥सिरस
तैल॥कुसुंभतैलंक्रिमिहारितेजोबलापहंयक्ष्ममलापहंच॥त्रि
दोषकृत्सुष्टिबलक्षयंचकरोतिकंडूषिकरोतिदृष्टिः॥कुसुंभतैल
॥मधुरंत्वतसीतैलंपिच्छिलंचानिलापहम्॥मदगंधिकषायंचक
फकासापहारकं॥ऐसेल॥अगसेयणे॥गोधूमयावनालव्रीहि
यवाद्यखिलधान्यजंतैलम्॥वातकफपित्तशमनंकंडूकुष्ठादि
हारिचक्षुष्यं॥धान्यतैलं॥एरंडतैलंकृमिदोषनाशनंवातामयघ्नं
सकलांगशूलहृत्॥कुष्ठापहंस्वादुरसायनोत्तमंपित्तप्रकोपंकु
रुतेनिदीपनम्॥एरंडतैलम्॥आडलकेपयेणे॥करंजतैलंनय
नार्तिनाशनंवातामयध्वंसनमुष्णतीक्ष्णकम्॥कुष्ठार्तिकंडूतिवि
चर्चिकापहंलेपेननानाविधचर्मदोषनुत्॥करंजतेल॥हुलिगि
लेयणे॥स्निग्धंस्यादिंगुदीतैलंमधुरंपित्तनाशनम्॥शीतलंकांति
दंबल्यंश्लेष्मलंकेशवर्द्धनम्॥हिंगुणाचेंतैल॥हिंगुलयणे॥निंब
तैलंकटुत्युष्णंक्रिमिकुष्ठकफापहं॥निंबतैल॥बेविनेणे॥आक्ष्णं

स्वादु हिमं केश्यं गुरु पित्तानिलार्त्तिजित्॥ बेहवेयाचें तैल॥ तरिय
पणे॥ शिग्रुतैलं कटूष्णं च वातजित्कफनाशनम्॥ त्वग्दोषव्रण
कंडूतिशोफहारि च पिच्छलम्॥ सेगुतैल॥ तुगियपणे॥ कटु ज्यो
तिष्मती तैलं तिक्तोष्णं वातनाशनम्॥ पित्तसंतापनं मेधाप्रज्ञाबु
द्धिविवर्द्धनम्॥ ज्योतिष्मती तैल॥ केंकिनेणे॥ शीतं हरीतकी तैलं
कषायं मधुरं कटु॥ सर्वव्याधिहरं पथ्यं नानात्वग्दोषनाशनम्॥
हिरडेल॥ अणिलेयणे॥ तीक्ष्णं तु राजिकातैलं ज्ञेयं वातादिदोषनु
त्॥ शिशिरं कटु पूंस्त्वघ्नं केश्यं त्वग्दोषनाशनम्॥ महुरितेल॥ सा
सवेययणे॥ शरं कोशाम्रजं तैलं क्रिमिकुष्ठव्रणापहम्॥ तिक्ताम्ल
मधुरं बल्यं पथ्यं रोचनपाचनम्॥ आंबेल॥ माविनेणे॥ यच्च चिं
चीभवं तैलं कटु पाके विलेखनम्॥ कफवातहरं रुच्यं कषायं ना
तिशीतलम्॥ पिंसैरातेल॥ चिकुणिकेयपणे॥ कर्पूरतैल हिमतै
ल शितांशुतैल शीताभ्रतैल तुहिनांशु सुधांशुतैलम्॥ कर्पूरतैल
कटूष्णं कफामहारि वातामयघ्नं रदर्दार्ढ्यदं पित्तहारि॥ कर्पू
रतैल॥ कपुरेदेणें॥ त्रपुसैर्वारुकचारककूष्मांडप्रभृतिबी
जजं च यत्तैलम्॥ तन्मधुरं गुरु शिशिरं केश्यं कफपित्तनाशि
कांतिकरम्॥ काकडी॥ वालुकादितैलं॥ सौंतेगुबलादियंसैं
ते॥ तैलं न सेवयेद्धीमान्यस्य कस्य च यद्भवेत्॥ विषसाम्यगुण
त्वाच्च योगे तन्न प्रयोजयेत्॥ उक्तं च॥ विषस्य तैलस्य न किंचिदं
तरं मृतस्य सुप्तस्य न किंचिदंतरम्॥ नृपस्य दासस्य न किंचिदं
तरं मूर्खस्य काष्ठस्य न किंचिदंतरम्॥ इति तैलप्रकरणम्॥ इ
त्थं गवादिकपयः प्रभृतिप्रपंचप्रस्ताववर्णिततिलादिकतैलजा
तम्॥ वर्गं निसर्गललितोज्वलशब्दसर्गं बुध्वाभिषक्पतिरशंक
तयाभिषज्येत्॥ यातारमात्मनः किल यांति प्रत्युपचिकीर्षया
पाति॥ तेषामेव निवासः परिकथितः पेयवर्ग इति कृतिभिः॥ पा
यं पायं मधुरविमलां शीतलां यस्य कीर्त्तिस्रोतोधारां जहति सुज
नादुर्जनासंगदोस्यं॥ वर्गस्तस्य व्रजति नरहरेनीम निर्माणना
म्न्यूडारत्ने [illegible] क्षीरकादिः समाप्तिम्॥ इति श्री नि

घंटुराजेक्षीरादिवर्गः पंचदशः समाप्तः॥ अथ शाल्यादिवर्गः॥ धा
न्यंभोगंचभोगार्हमनघंजीवसाधनं॥ तच्च तावत् त्रिधाज्ञेयं शूक
शिंबीतृणावहं॥१॥ व्रीह्यादिकं यदिह शूकसमन्वितं स्यात्तच्छू
कधान्यमथमुद्गमकुष्ठकादि॥ शिंबीनिगूढमितितत्त्ववदंति
शिंबीधान्यंतृणोद्भवनयातृणधान्यमन्यत्॥२॥ तत्र दोषघ्नमनं
लघुशूकधान्यंतेजोबलातिशयवीर्यविवृद्धिदायि॥ शिंबीभृशं
गुरुहिमंचविबंधदायिवातूलकंतुशिशिरं तृणधान्यमाहुः॥
॥३॥ देशेदेशेशूकधान्येषुसंख्याज्ञातुंशक्त्यानैवनदैवनैर्वा॥
तस्मादेषां येषुभोगोपयोगास्तान्यस्माभिर्व्यक्तियंतेकियंति॥४॥
शालयः कलमारुच्याव्रीहिश्रेष्ठानृपप्रियाः॥ धान्योत्तमाश्चविज्ञे
याः केदाराः सुकुमारकाः॥५॥ शालिगुणनाम॥ राजान्नंदीर्घशू
कः खरिपुदिवसजंषष्टिकोवर्णतोद्वैनिःशूकोमुद्गशालिः स
गुणविशदितः स्वाभिधानास्त्रयोन्यः॥ मासैर्योन्यस्त्रिधाभि
स्संभवतितिरयोवायित्र खांबुसाभूरेषास्याव्रीहिसंज्ञास्तदि
तिदशविधाशालयस्तुप्रसिद्धाः॥७॥ राजान्नादिशालिलक्षणं
॥ शालिर्नृपान्नंराजान्नंराजार्हंदीर्घशूककं॥ धान्यश्रेष्ठंराजधा
न्यंराजेष्टंदीर्घकूरकः॥८॥ राजान्नंतुत्रिदोषघ्नंसुस्निग्धंमधुरं
लघु॥ दीपनंबलकृत्पथ्यंकांतिदंवीर्यवर्द्धनं॥ राजान्ननामगुण
॥ राजान्नंत्रिविधंस्वशूकभिदयाज्ञेयंसितंलोहितंकृष्णंचेतिर
साधिकंचनदिदंस्यादोत्तरोत्तरयंततः॥ तैविध्यादिहतंडुलाश्चहरि
ताः पीतास्तथालोहिताः सामान्येनभवंतितेप्यथगुणैः स्युः पूर्वपू
र्वोत्तराः॥१०॥ राजान्नंकान्तीटकेप्रसिद्धं॥ षष्टिकः षष्टिशालिः स्या
त् षष्टिजः स्निग्धतंडुलः॥ षष्टिवासरजः सोयंज्ञेयोमासद्वयोद्भवः
॥११॥ गौरोनीलः षष्टिकोयंद्विधास्यादाद्योरुच्यः शीतलोदोषहारी
॥ बल्यः पथ्योदीपनोवीर्यवृद्धिंदत्तेचास्मात्किंचिदूनोद्वितीयः॥
॥१२॥ षष्टिशालिर्मालवेप्रसिद्धः॥ कृष्णशालिः कालशालिः श्या
मशालिः सितेतरः॥ कृष्णशालिस्त्रिदोषघ्नोमधुरः पुष्टिवर्द्धनः॥
॥१३॥ वर्णकांतिकरोबल्योदाहजिद्दीर्घदिकः॥ कृष्णशाली॥

करियनेलु॥रक्तशालिस्ताम्रशालिः शोणशालिश्च लोहितः॥र
क्तशालिः सुमधुरो लघुः स्निग्धो बलापहः॥१४॥रुचिकृद्दीपनः
पथ्यो मुखजाड्यरुजापहः॥सर्वामयहरो रुच्यो पित्तदाहानिला
स्रजित्॥रक्तशाली॥केदनेलु॥मुंडशालिर्मुंडनको निःशूकोथव
शूकजः॥मुंडशालिस्त्रिदोषघ्नो मधुराम्लो बलप्रदः॥१५॥निःशू
कशालिः॥वोम्लनलु॥स्थूलशालिर्महाशालिः स्थूलांगः स्थूलतं
डुलः॥एवं गंधाद्यशालेश्च नामान्यूह्यानि सूरिभिः॥१६॥महाशा
लिः स्वादुर्मधुरः शिशिरः पित्तशमनो ज्वरं जीर्णदाहं जठररुजमन्हा
यशामयेत्॥शिशूनां यूनां वा यदपि जरतां वा हितकरः सदासे
व्यः सर्वैरनलबलवीर्याणि कुरुते॥१७॥वडीशालि॥दोड्डनेलु
॥सूक्ष्मशालिः सूचिशालिः पोतशालिश्च सूचकः॥सूक्ष्मशालिः
सुमधुरो लघुपित्तास्रदाहनुत्॥१८॥दीपनः पावनश्चैव किंचि
द्धानविकारजित्॥छोटाधान॥सणनेलु॥गंधशालिस्तु कल्माषो
गंधालुः कलमोत्तमः॥सुगंधिर्गंधबहलः सुगंधिर्गंधितंडुलः
॥१९॥सुगंधशालिर्मधुरोतिवृष्यदः पित्तश्रमास्रारुचिदाहशां
तिदः॥स्तन्यस्तु गर्भस्थिरतां स्ववातदः पुष्टिप्रदश्चाल्पकफश्च व
ल्यदः॥२०॥गंधशालि॥कम्मकलवे॥निरापोमधुरः स्निग्धः शी
तलो दाहपित्तजित्॥त्रिदोषशमनो रुच्यः पथ्यः सर्वामयापनुत्
॥२१॥रूपशालि॥तुरुनेलु॥व्रीहिर्गौरो मधुरशिशिरः पित्तहारी
कुवापः स्निग्धो वृष्यः कृमिकफहरः स्तापरक्तापहश्च॥पुष्टिं दत्तेश्र
मशमनकृद्वीर्यवृद्धिं विधत्ते रुच्योत्यंतं जनयति मुदं वातकृन्मेचको
न्यः॥२२॥सालुवे॥केइयनेलु॥अथ पृथक् शालिनामानि॥मंडकः
स्थूलशालिश्च स्याद्धिंबशालिकस्तथा॥निजानिशाणहल्याश्च बिं
बीकोसेंदुकस्तथा॥२३॥प्रसाधिकाजीरकाख्या सप्तशामा मधुराम
ता॥राजानां मौलिकस्यापि शालिः स्याद्बुर्बरीयथा॥२४॥सूक्ष्मशा
लिः कुदितिकासु शालिर्गुरुशालयः॥वनशालिर्गुंड्रुरुकौसीरिका
पंक्तयः पृथक्॥२५॥एतानि शालिनामानि प्रख्यातानि प्रसिद्धतः
॥अशोच्यापटलाव्रीहिर्व्रीहिको व्रीहिधान्यकः॥व्रीहिसंधान्यमहि

ष्टअर्धधान्यस्तुव्रीहिकः॥२६॥व्रीहिधान्यं॥गर्भेपाकणिकःष
ष्टिःषष्टिकोबलसंभवः॥सुधान्यंपथ्यकारीचसुपविप्रजनवि
प्रियः॥२७॥साठी॥शालिस्तुकलमाघस्तुकलमोनाकलायकः
॥कदंबपुष्पगंधश्चकलजानाकलोद्भवाः॥कलम॥पित्तश्लेष्म
करोवृष्यःकलमोमधुरस्तथा॥लोहितोरक्तशालिःस्यात्का
ष्ठलोहितशालयः॥२८॥रुणालिरुणशालिस्तुरक्तशाल्यःसुशा
ल्यकः॥रक्तशालि॥तृष्णाघ्नोमलकृत्तस्योहृद्यस्तुमतितापरे॥
महाशालिःसुगंधास्यात्सगंधागंधसंभवा॥२९॥गंधाढ्यागंध
माल्याचगंधानीगंधमालिनी॥सुगंधशालि॥सुगंधामधुराहृ
द्याकफपित्तज्वरास्रजित्॥जलोद्भवाजलरुहाजलजात्तासुजा
तका॥३०॥रक्तांगुलंसुकारंचकुंकुमंसमवर्णजा॥कुंकुमशालि
॥कुंकुमामधुराशीतारक्तपित्तातिसारजित्॥तिलजातिलना
मास्याद्दीर्घकृष्णासपूजका॥३१॥मधुराचसुगंधाचतिलवा
सीनिगद्यते॥राजादनीराजप्रियाराजभावामुनिप्रिया॥तिल
नीतिलपर्णीचआमगंधाप्रवासिनी॥३२॥तिलवासिनीशालिः
॥कफपित्तहराःस्निग्धाःकासश्वासहराःपराः॥शीघ्रपाकक
राहृघालघवःशुक्रवर्धनाः॥३३॥कोमलाहारसंभूताःतिल
वासीमहागुणाः॥पांडुरोगेषुशूलेषुआमवातेप्रशस्यते॥३४
वक्रकोवक्रशालिःस्यात्दीर्घस्तुआशुकोपितः॥राजप्रिया
पथ्यकरामध्यदेशसमुद्भवा॥३५॥धकोड्धान॥वक्तिकालघ
वःप्रोक्तामुखपाककरास्तथा॥कलाटकःकलुर्वास्यागुरुसो
गरुडःस्मृतः॥गुरुवकोगुरडकःसुखभोजीसुभोजकः॥कवि
लागरुडशालि॥कविलोगंधकारीचलघुपाककरापिच॥क
फपित्तहरास्वादशूलश्वासनिवारणाः॥३६॥ग्रहणीगुल्मकु
ष्ठघ्नंविकलंभोजनेशुभं॥कूष्मांडिकाकुंभडिकारक्तासुमधुरा
गुरुः॥३७॥सुगंधादुर्जरापीतास्थूलतंडुलकोमला॥कूष्मांड
शालि॥कुंभिकामधुरास्निग्धावातपित्तनिवर्हिणी॥३८॥कुंभशा
लि॥सौरभश्चटिकःसंडीकासंभीकटिनोफलः॥कोसुंभीशालि॥

कौसुंभीलघुपाकाचवातपित्तनिबर्हिणी॥उंपासउपिकाशालिर्म
धुरागुरुतंडुला॥बहुशूकासुगंधाढ्यातारुण्यजनवल्लभा॥४०॥
उंपाशालि॥उंपिकामधुरास्निग्धासुगंधाचकषायका॥पित्तश्ले
ष्महरारूक्षाझंपिकानीलनाशना॥पक्षिकःपक्षिनाबल्यःपक्षिरा
ष्महरारूक्षाझंपिकानीलनाशना॥पक्षिकःपक्षिनाबल्यःपक्षिरा
जोमुनिप्रियः॥४१॥स्थूलतंडुलसंभूतागंधोवहलगंधकृत्॥पां
वियाशालि॥दग्धायामवनौजाताःशालिनोलघुपाकिनः॥किंचि
त्सतिक्तामधुराःपाचनाबलवर्द्धनाः॥४२॥केदारामाधुरावृष्या
बल्याःपित्तविवर्द्धनाः॥ईषत्कषायाल्पमलागुरवःकफनाशनाः
॥४३॥शालयोयेछिन्नरुहारूक्षास्तेबद्धवर्चसाः॥रोप्यानिरोप्या
लघवःशीघ्रपाकागुणोत्तराः॥४४॥विदाहिनोदोषहराबल्यामू
त्रविवर्धनाः॥इतिसंपूर्णशालिभेदाः॥इतिशालयः॥यावना
लोयवनालःशिखरीवृत्ततंडुलः॥दीर्घनालोदीर्घशरःक्षेत्रेक्षु
श्चसुपत्रकः॥४५॥सामान्यजुवारि॥जोलदहेसरु॥धावलोया
वनालस्तुपांडुरस्तारतंडुलः॥नक्षत्राकृतिविस्तारोवृत्तोमौक्ति
कतंडुलः॥४६॥जूर्णाह्वयोदेवधान्यंजूर्णलोबीजपुष्पकः॥जून
लःपुष्पगंधश्चसुगंधःसेगुरुंदकः॥४७॥जवारिनाम॥धवलो
यावनालस्तुगौल्योवल्यस्त्रिदोषजित्॥वृष्योरुचिप्रदोर्शोघ्नःप
थ्यंगुल्मव्रणापहः॥४८॥स्वेतजुवारि॥विलियजोल॥अथतुवर
यावनालस्तुवरश्चकषाययावनालश्च॥सरक्तयावनालोहित
लोहितस्तुवरधान्यश्च॥४९॥तुवरोयावनालस्तुकषायोष्णोवि
शोफकृत्॥संग्राहीवातशमनोविदाहीशोषकारकः॥५०॥तूरे
जोंधले॥ॐगरजाल॥शारदोयावनालस्तुश्लेष्मदःपिछलोगुरुः
॥शिशिरोमधुरोवृष्योदोषघ्नोबलपुष्टिदः॥५१॥कारमांगसजोंध
ले॥कारुजोल॥इतियावनालः॥गोधूमोबहुदुग्धःस्यात्अरूपो
म्लेछभोजनः॥यवनोनिस्तुषःक्षीरीरसालःसुमनश्चसः॥५२॥
गोधूमःस्निग्धमधुरोवातघ्नःपित्तदाहकृत्॥गुरुश्लेष्मामदोबल्यो
रुचिरोवीर्यवर्द्धनः॥५३॥गहुं॥गोधि॥स्निग्धोन्योलघुगोधूमोगुरु
वृष्यःकफापहः॥आमदोषकरोबल्योमधुरोवीर्यपुष्टिदः॥५४॥क्षे

टागोहूं॥सणगोधी॥इतिगोधूमः॥यवस्तुमेध्यःसितशूकसंज्ञोदि
व्योक्षतःकांचुकिधान्यराजौ॥स्यात्तीक्ष्णशूकस्तुरगप्रियश्चशक्तुहे
तेष्टश्चपवित्रधान्यं॥५५॥यवःकषायोमधुरःसुशीतलःप्रमेहजि
त्कफापहारकः॥अशूकमंडस्तुयवोबलप्रदोवृष्यश्चनृणां
बहुवीर्यपुष्टिदः ॥५६॥जव॥मुंडजयवे॥वेणुजोवेणुबीजश्चवं
शजोवंशतंडुलः॥वंशधान्यंचवंशाह्वोवेणुवंशाह्वधायवः॥५७॥
शीतःकषायोमधुरस्तुरूक्षोमेहक्रियाश्लेष्मविषापहश्च॥पुष्टिं
चवीर्यंचबलंचदत्तेपित्तापहोवेणुजवःप्रशस्तः॥५८॥वेणुजव
॥बिदरकी॥इतियव॥मुद्गस्तुरूपश्रेष्ठःस्याद्वर्णार्हश्चरसोत्तमः॥
भुक्तिप्रदोहयानंदोभूबलोवाजिभोजनः॥साधारणमुंग॥हेसयेरु॥
कृष्णमुद्गस्तुबासंतोमाधवश्चसुराष्ट्रजः॥कृष्णमुद्गस्त्रिदोषघ्नो
मधुरोवातनाशनः॥६०॥लघुश्चदीपनःपथ्योबलवीर्यांगपुष्टिदः
॥करियामुंग॥करियहेसरु॥शारदस्तुहरिन्मुद्गोधूसरोन्यश्चशार
दः॥हरिन्मुद्गःकषायश्चमधुरःकफपित्तहृत॥६१॥रक्तमूत्रामय
घ्नश्चशीतलोलघुदीपनः॥हरियरमुंग॥हसरुहेसरु॥तद्वच्चधूस
रोमुद्गोरसवीर्यादिषुस्मृतः॥कषायोमधुरोरुच्यःपित्तवातविबंध
कृत॥६२॥धूसरमुंग॥पीयरमूंग॥होंगेवणदहोगेसरु॥पित्तज्वरा
र्तिशमनंलघुमुद्गयूषंसंताप हारितदरोचकनाशनंच॥रक्तप्रसा
दनमिदंयदिसैंधवेनयुक्तंतदाभवतिसर्वरुजापहारि॥६३॥मूंगक
उण॥हेसरुकटु॥माषस्तुकुरुविंदःस्याद्धान्यवीरोवृषाकरः॥मां
सलश्चबलाढ्यश्चपित्र्यश्चपितृजोत्तमः॥६४॥माषःस्निग्धोबहु
मलकरःशोषणःश्लेष्मकारीवीर्यंणोष्णोझटितिकुरुतेरक्तपित्तप्र
कोपं॥हन्याद्वातंगुरुबलकरोरोचनोभक्ष्यमाणःस्वादुर्नित्यंश्रमसु
खवतांसेवनीयोनराणां॥६५॥उरिद॥उडु॥राजमाषोनीलमाषो
नृपमाषोनृपोचितः॥कफपित्तहरोरुच्योवातकृद्बलदायकः॥६६
॥लीलउरीद॥नीलउंडु॥इतिमाषाः॥चणस्तुहरिमंथःस्यात्सुगंधः
कृष्णचूचुकः॥बालभोज्योवाजिभक्ष्यस्सं[illegible]कंचुकीचसः॥६७॥
चणकोमधुरोरूक्षोमेहजिद्वातपित्तकृत॥दीप्तिवर्णकरोबल्योरु

च्यश्चाध्मानकारकः॥६८॥चणा॥कडले॥आमश्चणः शीतलरुच्य
कारीसंतर्पणोदाहतृषापहारी॥गोल्योश्मरीशोषविनाशकारी
कषायईषत्कटुवीर्यकारी॥६९॥कंचेओदे॥रहिला॥हसियडक
ले॥कृष्णस्तुचणकः शीतोमधुरःकासपित्तहृत्॥पित्तातिसारका
सघ्नोवल्यश्चैवरसायनः॥७०॥करियाचणा॥करियकडले॥ च
णोगोरस्तुमधुरोबलकृद्रोचनः परः॥श्वेतोवातकरोरुच्यः पित्त
घ्नःशिशिरोगुरुः॥७१॥स्वेतचणा॥विलियकडले॥सुभृष्टचण
कोरुच्योवातघ्नोरक्तदोषकृत्॥वीर्येणोष्णोलघुश्चैवकफशल्या
पहारकः॥फूटाभुंजा॥हुरुकडले॥चणस्ययूषंमधुरंकषायंक
फापहंवातविकारहेतु॥श्वासोर्ध्वकासक्लमपीनसानांकरोति
नाशंबलदीपनत्वं॥७२॥रहिलाकरजूस॥चणोदकंचंद्रम
रीचिशीतंपीतंप्रगेपित्तरुजापहारि॥पुष्टिप्रदंनैजगुणंचपा
केसंतर्पणंमंजुलमाधुरीयं॥७३॥रात्रिभिंजाचणाकरपाणि॥
हरुलननदकडलेपनीरु॥सकुष्ठकोमयष्टश्चवनमुद्गःकृमी
लकः॥अमृतोरण्यमुद्गश्चवल्लीमुद्गश्चकीर्तितः॥७४॥सकु
ष्ठकःकषायःस्यान्मधुरोरक्तपित्तजित्॥ज्वरदाहहरःपथ्यो
रुचिकृत्सर्वदोषहृत्॥७५॥मुंगहेसरुभेदमालवेप्रसिद्धः॥मसू
रोरागदालिस्तुमंगल्यःपृथुबीजकः॥सूरकल्याणबीजश्चगुरु
बीजोमसूरकः॥७६॥मसूरोमधुरःशीतःसंग्राहीकफपित्तजित्
॥वातामयकरश्चैवमूत्रकृच्छ्रहरोलघु॥७७॥चणई॥चणगि॥
कलायोमुंडचणकोहरेणुश्चसतीनकः॥त्रासनोनलकःकंठी
सतीनश्चहरेणुकः॥कलायःकुरुतेवातंपित्तदाहकफापहः॥
रुचिपुष्टिप्रदःशीतःकषायश्चामदोषकृत्॥७८॥बटुरा॥वट्टक
डले॥लंकाकरालात्रपुष्टाकांडिकारूक्षणात्मिका॥लंकोरुच्यो
हिमोगोल्योपित्तजिद्वातकृद्गुरुः॥८०॥मटुराचपटा॥लांक॥आ
ढकीतुवरीवर्याकरवीरभुजाचसा॥वृत्तबीजापीतपुष्पाश्वेतारक्ता
सितात्रिधा॥८१॥आढकीतुकषायाचमधुराकफपित्तजित्॥ई
षद्वातकरोष्णाचविदुलोगुरुग्राहिक:॥८२॥साधारणतूरी॥तोग

रि॥साचश्वेतादोषहंत्रीहिताचेदुच्याबल्यापित्ततापादिहंत्री॥सा
श्यामाचेद्दीपनीपित्तदाह ध्वंसाबल्यंचाढकीयूषमुक्तं॥८३॥अर
हर॥कालिश्वेतविलियकटणाकटु॥कुलित्थस्ताम्रबीजश्चश्वेत
बीजःसितेतरः॥कुलित्थस्तुकषायोष्णोरूक्षोवातकफापहः॥
॥८४॥कुलत्थि॥हुलवले॥नीसीएकगुण॥स्तुवःस्तुधाभिजनन
श्चपलोदीर्घशिंबिकः॥सुकुमारोवृत्तबीजोमधुरःस्रवकश्चसः
॥८५॥स्रवःकषायमधुरःशीतलःकफपित्तहृत॥वृष्यःश्रमहरो
रुच्यःपवनाध्मानकारकः॥८६॥रत्तरा॥राजमाष॥वरवटा॥अ
लसंदे॥मधुरःश्वेतनिष्पावोमाधिकामधुशर्करा॥पलंकषास्थू
लशिंबीवृत्तामधुशिनासिता॥८७॥मधुशर्करासुरुच्यामधुराल्प
कषायका॥शिशिरावातुलावल्याप्याध्मानगुरुपुष्टिदा॥८८॥
निवारानिः॥आवरे॥वर्णे॥सोन्यश्चकटुनिष्पावोखर्वुरोनदिज
स्तथा॥नदीनिष्पावकस्तिक्तःकटुकोस्लप्रदोगुरुः॥८९॥वातु
लःकफदोरूक्षःकषायोविषदोषनुत्॥नदीचेवर्णे॥तोरेआवरे
॥तिलस्तुहोमधान्यंस्यात्पवित्रःपितृतर्पणः॥पापघ्नःपूतधान्यं
चजटिलस्तुवनोद्भवः॥९०॥स्निग्धोवर्णबलाग्निवृद्धिजननोस्त
न्यानिलघ्नोगुरुःसोष्णःपित्तकरोल्पमूत्रकरणःकश्योतिपथ्यो
व्रणे॥संग्राहीमधुरःकषायसहितस्तिक्तोविपाकेकटुःकृष्णः
पथ्यतमःसितोल्पगुणदःक्षीणास्तिलान्येतिला:॥९१॥तिल॥ए
लु॥पललंतिलकल्कंस्यात्तिलचूर्णंचपिष्टकं॥पललंमधुरंरुच्यं
पित्तास्लबलपुष्टिदं॥९२॥पिना॥गसियमेसरु॥तैलकिट्टंतुपि
ण्याकःखलःस्यात्तैलकल्कजः॥पिण्याकःकटुकोगोल्यःकफवा
तप्रमेहनुत्॥९३॥खरी॥हिंडि॥अतसीपिक्कुलादेवीमदगंधाम
दोत्कटा॥उमासुमाहैमवतीसुनीलानीलपुष्पिका॥९४॥अतसी
मदगंधास्यान्मधुराबलकारिका॥कफवातकरीचेषत्पित्तहृत
कुष्ठवातनुत्॥९५॥अलसी॥असगे॥आसुरीराजिकाराजीरक्ति
कारक्तसर्षपः॥तीक्ष्णगंधामधुरिकास्रवकःस्तुतकःस्रवः॥९६॥
आसुरीकटुतिक्तोष्णानाशीलार्तिशूलनुत्॥दाहपित्तप्रदाहंति

कफगुल्मकृमिव्रणान्॥९७॥मदुरी॥सासिराई॥राजक्षवकः कृष्णसर्षपाख्याविज्ञेया
ष्णसीक्ष्णफलाराजराजिकाराज्ञी॥साकृष्णसर्षपाख्याविज्ञेया
राजसर्षपाख्याच॥९८॥राजसर्षपकस्तिक्तः कटूष्णोवातमूलनु
त्॥पित्तदाहप्रदोगुल्मकंडूकुष्ठव्रणापहः॥९९॥तीक्ष्णकश्चद्
राधर्षोरक्षोघ्नःकुष्ठनाशनः॥१००॥सिद्धप्रयोजनःसिद्धसाधनः
सितसर्षपः॥सिद्धार्थःकटुतिक्तोष्णोवातरक्षग्रहापहः॥१॥त्व
ग्दोषशमनोरुच्योविषभूतव्रणापहः॥श्वेतसरिसो॥विलियसा
सवे॥इतिसर्षपाः॥धान्यानांकंचुकीशिंबीबीजगुप्तिश्चशांभवी॥
तुदुणानिचधान्यानिशिंबीधान्यानिचसत्ते॥२॥इतिशिंबीधान्य
प्रकरणं॥अथतृणधान्यानि॥श्यामाकःश्यामकःश्यामस्त्रिबी
जःस्याद्धिप्रियः॥सुकुमारोराजधान्यंतृणबीजोत्तमश्चसः॥३॥
श्यामकोमधुरःस्निग्धःकषायोलघुशीतलः॥वातकृत्कफपि
त्तघ्नःसंग्राहीविषदोषनुत्॥४॥सांवां॥सावे॥कोद्रवःकोरदूष
श्चकुद्दालोमदनाग्रजः॥सचदेशविशेषेणनानाभेदःप्रकीर्त्ति
तः॥५॥कोद्रवोमधुरस्तिक्तोव्रणीनांपथ्यकारकः॥कफपित्तह
रोरूक्षोमोहकृद्वातलोगुरुः॥६॥कोद्रव॥हारकः॥वरकंस्थूल
कंगुश्चरूक्षस्थूलप्रियंगुलः॥वरकोमधुरोरूक्षःकषायोवात
पित्तकृत्॥७॥वरगु॥प्रियंगु॥कंगुणीकंगुनीप्रोक्ताचीनकःपीतनंडु
लः॥वातुलःसुकुमारश्चसचनानाविधाभिधः॥८॥प्रियंगुर्मधुरोरूच्यः
कषायःस्वादुशीतलः॥वातकृत्पित्तदाहघ्नोरूक्षोभग्नास्थिबंध
कृत्॥९॥कांकु॥नवणे॥नीवारोरण्यधान्यंस्यान्मुनिधान्यंतृणो
द्भवं॥नीवारोमधुरःस्निग्धःपवित्रःपथ्यदोलघुः॥१०॥नीवार॥
ज्यरहमेधे॥वारिरागितुलातुलाकुन्नस्याद्दुदलकणिशश्च॥ति
क्तोमधुरकषायःशीतःपित्तास्रनाशनोवलदः॥११॥नाचणे॥र
पिगुचणे॥कुरीतुतृणधान्यंस्यान्मधुरंतद्दलप्रदं॥हरितंवार्धकंप
कंवाजिनांपुष्टिदायकं॥१२॥कुरिधान्याहळूळे॥यमुनातीरेप्रसि
द्धा॥इतितृणधान्यानि॥येकेचव्रीहयोभ्रष्टास्तेलाजाइतिकीर्त्ति
ताः॥यवाश्च...॥१३॥लाजानाम॥ला

जाश्चयवधान्याश्चनर्पणीपित्तनाशिनी॥लाजाधान्य॥लाईकर
अन्न॥शीतने॥गोधूमयावनालाद्याः किंचिदुष्णाश्चदीपनाः॥रसे
रपक्वगोधूमैराकुलाः परिकीर्त्तिताः॥१५॥व्रीहयोप्यर्धपक्वाश्चत
प्तास्तेपृथुकाः स्मृताः॥चिउरा॥पहुे॥आकुलागुरुवोवृष्यामधुरा
बलकारिणः॥पृथुकास्वादवःस्निग्धाहृद्यामदनवर्धनाः॥येवे॥
पुपालामधुराः प्रोक्तावृष्यास्तेबलदाः स्मृताः॥१६॥पित्तहृत्तर्प
णाहृद्याःस्निग्धास्तेबलवर्द्धनाः॥ओफली॥हरिणतने॥दुग्धबी
जासुमधुरादुर्जरावीर्यपुष्टिदा॥येचान्येयावनालाद्याश्चिपिटास्त
प्ततंडुलाः॥१७॥अतप्ततंडुलास्तेतुदुग्धबीजाः प्रकीर्त्तिताः॥शाले
यपावनालीयचिपिटाः पुष्टिवर्धनाः॥१८॥गादाजोणरीकरसित
ने॥दुग्धबीजासुमधुरादुर्जरावीर्यपुष्टिदा॥वेलुवसेयेनीवक॥तप्ता
स्तुमुद्गचणकाः सुमनादिलकासद्यस्तषार्त्तिरुचिपित्तकृतश्चद
ग्धाः॥वानात्सदाः सुखकराह्यबलाश्चरूक्षाहृद्याभवंतियुवज
जरबालकानां॥१९॥फूटाचणाकरलावा॥मुद्गगोधूमचणका
यावनालादयः स्मृताः॥यदर्धपक्वंयद्धान्यंविष्टंभाध्मानदोषकृ
त्॥२०॥घुघुनी॥शुष्कगोधूमचूर्णंतुकणिकासमुदाहृता॥कणि
कि॥स्फोटस्तुचणकादीनांदालिस्तुपरिकीर्त्तिताः॥२१॥दालि
चणाकी॥पक्वंहरितलूनंचधान्यंसर्वगुणावहं॥हिरवेंसांवगिलें
॥शुष्कलूनंतुनिःसारंरूक्षंतत्सत्वनाशनं॥२२॥शुष्कअन्न॥कोश
धान्यंनवंबल्यंमधुरंवत्सरोषितं॥राखपुरानाअन्नकरगुणः॥
निर्दोषंलघुपथ्यंचतद्वर्षादवरंभवेत्॥पुरानाअन्न॥नवधान्य
मभिष्यंदिलघुसंवत्सरोषितं॥यद्युषितंलघुपथ्यंत्रिवर्षादबलं
भवेत्॥इतिनवादिधान्यगुणाः॥२३॥चणास्तुयवगोधूमतिल
माषानवाहिताः॥नवाधान्यकरगुण॥पुराणाविरसारूक्षास्त
हिताढुर्जराबलाः॥२४॥जीर्णधान्यगुण॥धान्यंवापित्तमुत्तमंतद
खिलंछिन्नोद्भवंमध्यमंज्ञेयंयद्यपिवापितंतदधमंनिःसारदोष
प्रदं॥दग्धायांभुवियत्ततोपिविपिनेयेवापिताःशालयोयेतुछिन्न
भुवाभवंतिखलुतेविण्मूत्रबंधप्रदाः॥२५॥धान्यानांस्थानविशेषा

द्गुणविशेषः॥क्षारोदकसमुत्पन्नंधान्यंश्लेष्मरुजापहं॥क्षारोद
कोद्भूतधान्यगुण॥सुस्निग्धमृत्तिकोद्भूतंधान्यमोजोबलावहं॥कृ
ष्णभूमिसमुद्भवधान्यगुण॥वलपुष्टिप्रभावघ्नंवालुकामृत्तिको
द्भवं॥भरडभूमिधान्यगुणाः॥धान्यंश्रेष्ठंषष्टिकंराजभोग्यंमांसंला
जंतैत्तिरंलावकीयं॥पानीयंस्यात्कृष्णमृत्स्नासमुत्थंक्षीराज्यादि
गव्यमाजंप्रशस्तं॥२६॥धान्यमांसोदकक्षीराज्यादिचतुष्टयगु
णविशेषः॥इत्थंप्रसिद्धतरधान्यगुणादिवीर्यरूपाभिवर्णन
विस्रंखलवाग्विलासं॥आम्नायवर्गनिगमात्तुलभेतवैद्योविद्या
विस्रंखलपुराचनवीनधान्यं॥२७॥यानिसदाभुज्यंतेभूजानिज
नाश्चयानिभुज्यंते॥तेषांखलुधान्यानांवर्गोयंभोज्यवर्गइतिक
थितः॥२८॥ ॥इतिश्रीनरहरिपंडितविरचितेनिघंटुराजापरना
म्न्यभिधानचूडामणौभोज्यवर्गापरनामाधान्यवर्गःषोडशः॥
॥१६॥अथमांसवर्गः॥मांसंतुपिशितंक्रव्यंपललंतुसरमस्त्रजं॥प
ललंजांगलंकीरमामिषंचनदुच्यते॥१॥होसमांसनाम॥सद्यो
हतस्यमांसंश्रेष्ठंहरिणादिकस्यपूतस्तु॥ज्ञेयंसुगंधिपथ्यंजांग
लदेशसंस्थितस्यपथ्यसमं॥२॥होमल्लतत्कालमांस॥बालस्य
वृद्धस्यकृशस्यरोगिणोविषाग्निदग्धस्यमृतस्यचांबुषु॥त्याज्यं
मृगादेःपिशितंतुतस्यविगंधिशुष्कंचचिरस्थितंच॥३॥त्याज्यमां
स॥सर्वमांसंवातविध्वंसिवृष्यंबल्यंरुच्यंवृंहणंतच्चमांसं॥देश
स्यानात्वात्मसंस्थंचसर्वंभूयोनानारूपतांयातिनूनं॥४॥साधा
रणदेशमांसगुणाः॥तत्रानूपीयमांसंगवयरुरुमृगक्रोडगंडा
दिकानांस्निग्धंपथ्यंचवल्यंलघुसशिखिखराज्जुद्भवंजांगलीयं
॥पुष्टिंदीप्तिंचदत्तेरुचिकृदथलघुस्वादुसाधारणीयंवृष्यंबल्यं
चरुच्यंरुरुहरिणमृगक्रोडसारंगकानां॥५॥अनूपादिदेशत्रय
पक्षिमांस॥मांसंसारसहंसरात्रिविरहिपक्षादिजंशीतलंस्निग्धं
वातकफापहंगुरुततःस्वादुत्रिदोषापहं॥पथ्यंलावकतित्तिरादि
जनितंवृष्यंलघुस्यात्परंचक्रक्रौंचमयूरतित्तिरभवंदेशत्रयादीह
शं॥६॥अथप्रकुमारिमांसगुणान्याख्यास्यामः॥इतिस्थानस्वभावे

श्चविविधामृगपक्षिणः॥तेषांयथायथंलक्ष्मवक्ष्येसामान्यतःक्र
मात्॥७॥द्रुतोःविलंविनश्चैवप्लवश्चैनिगतेस्नयः॥स्थानतोपित्र
यस्तेतुविलस्थलजलाश्रयाः॥८॥प्रजस्तेतुप्रसहनाप्रतुदाविष्कि
राइति॥स्वभावतस्त्रयःप्रोक्ताःक्रमशोमृगपक्षिणः॥९॥अथैतां
क्रमशोलक्ष्मगुणान्वक्ष्यामिवर्गशः॥एवंनवविधाःप्रोक्ताःनएव
मृगपक्षिणः॥१०॥नवविधमृगपक्षिणांभेदः॥अथशशहरिणा
दयःस्वयंद्रुतगमनात्द्रुतसंज्ञकाःस्मृताः॥तदुदितपललंचप
थ्यवल्यंरचयतिवीर्यमदप्रदंलघुस्यात्॥११॥द्रुतगतिमृगमांस॥
गजखड्गमृगादयोहिसर्वेगमनेनैवविलंविताःस्मृताः॥बलकृ
तिपिशितंचपिच्छलंकफकासानिलमांद्यदंगुरुस्यात्॥१२॥वि
लंवितमृगमांसगुण॥सारसहंसवलाकाश्चक्रक्रौंचादयोजल
प्लवनात्॥प्लवसंज्ञाःकथितास्तेतन्मांसंगुरूष्णबलदायि॥१३॥
विलेशयस्यमांसगुणाः॥अहिनकुलशल्यगोधामुखमुख्याविले
शयाःकथिताः॥श्वासानिलकासहरंतन्मांसंपित्तदाहहरं॥१४॥
स्थलेशयमृगमांसगुणाः॥क्रोडरुरुकुरंगाद्याविविधायेमृगाद
यः॥स्थलेशयास्तुतेसर्वेमांसंसर्वगुणावहं॥१५॥जलेशयानांमां
सगुणाः॥झषमकरनक्रकर्कटकूर्मप्रमुखाजलेशयाःकथिताः
॥मांसंतेषांतुसरंवृष्यंगुरुशिशिरंबलसमीरकरं॥१६॥शार्दूला
दिप्रसहनमांसगुण॥शार्दूलसिंहशरभक्षतरक्षुमुख्यायेन्येप्र
सह्यविनिहंत्यभिवर्तयंति॥तेकीर्तिताःप्रसहनाःपललंतदीय
मर्शःप्रमेहजठरामयजाड्यहारि॥१७॥प्रतुदपक्षिमांसगुण॥
प्रोक्तानिकृष्यामिषंसप्रतुदाःप्रोक्तागरुड्श्येनकाकादिकायेः॥
मांसंसद्यःस्वादुतेषांगुरूष्णंस्निग्धंबल्यंपित्तदाहास्रदायि॥१८
विष्किरमांसगुणाः॥अक्ष्याश्चकुक्कुटकपोतकतित्तिराद्याःस्तोणीं
विलिख्यनखरैःखलुवर्तयंति॥तेविष्किराःप्रकथिताःपिशितं
तदीयंरुच्यंकषायमधुरंशिशिरंचरुच्यं॥१९॥अयमेवगुणोज्ञे
यःपक्षिणांचयथाक्रमं॥सर्वस्थानविशेषेणसंख्याचगतिरुच्य
ते॥२०॥संस्थानस्वभावविशेषगुणः॥पक्षिमृगमांस॥यत्रस्थिता

येगनित्तोपिदेशादन्यत्रयातामृगपक्षिमुख्याः॥स्वस्वोचितस्था
नविवर्तनेनमांसेपितेषांगुणपर्ययाःस्युः॥२१॥अथपृथक्पृथङ्मां
सगुणाःकथ्यंते॥मांसंखड्गमृगोत्थंतुबलकृद्बृंहणंगुरु॥गवयस्या
मिषंबल्यंरुच्यंवृष्यंचबृंहणं॥२२॥अनायु॥रुरोःकव्यंगुरुस्निग्धं
मंदवन्हिबलप्रदं॥रोझु॥अपूतंगोभवंकव्यंगुरुवातकफप्रदं॥२३
गायआंकेल॥वनमाहिषामिषंस्यादीषल्लघुदीपनंचबलदायि॥
वनभैंसाः॥ग्रामिणमाहिषमांसंस्निग्धंनिद्राकरंचपित्तहरं॥ग्राम
भैंसाकरमांस॥हस्तिकव्यंगुरुस्निग्धंवातलंश्लेष्मकारकं॥बहुपु
ष्टिप्रदंचैवदुर्जरंमंदवन्हिदं॥२४॥हस्तिमांस॥अश्वमांसंभवेदुष्णं
वातघ्नंबलदंलघु॥पित्तदाहप्रदंनृणांनदेत्त्वातिसेवनात्॥२५॥
अश्वमांस॥उष्ट्रमांसंतुनभवेत्त्रिदोषशमनंलघु॥बलपुष्टिप्रदंरु
च्यंमधुरंवीर्यवर्धनं॥२६॥ऊंटेयमांस॥गर्दभप्रभवंमांसंकिंचिद्गु
रुबलप्रदं॥रुच्यंतुवनजंशैत्यबहुवीर्यबलप्रदं॥२७॥गर्दभ॥वन
गर्दभ॥एणस्यमांसंलघुशीतवृष्यंत्रिदोषहृत्स्यद्रसजंचरुच्यं॥कुरं
गमांसंमधुरंचतद्वत्कफापहंमांसदपित्तनाशि॥२८॥सारंगमांस
॥सारंगंजांगलंस्निग्धंमधुरंलघुवृष्यदं॥शिखरिमांसचित्तव॥शि
खरीसंभवंमांसंलघुहृद्यंबलप्रदं॥२९॥हंदीपमांस॥वराहमांस॥
वराहमांसंगुरुवातहारिवृष्यंबलस्वेदकरंवनोत्थं॥गढसूरो॥न
स्यादुरुग्रामवराहमांसंनतोनिमेदोबलवीर्यवृद्धिं॥३०॥शशशृंग
स्यमांसंतुगुरुस्निग्धंकफप्रदं॥बल्यंवृष्यकरंपुष्टिकिंचिद्दाहकरं
परं॥३१॥आडिनमांस॥छागमांसंलघुस्निग्धंनातिशीतंरुचिप्रदं
॥निर्दोषवातपित्तघ्नंमधुरंबलपुष्टिदं॥३२॥आडिनमरीयमांस॥
छागपोतंवरंमांसंलघुशीतंप्रमेहजित्॥ईषल्लघुबलंदत्तेतद्देवन्त
णचारिणः॥३३॥करवलकुरीयमांस॥ओरभ्रमधुरंशीतंगुरुविष्टं
भिबृंहणं॥भेडीकरमांस॥आविकंमधुरंमांसंकिंचिद्गुरुबलप्रदं
॥३४॥एडुकियमांस॥शल्यमांसंगुरुस्निग्धंदीपनंश्वासकासजि
त्॥मंगुलीयमांस॥पिच्छलंनाकुलंमांसंवातघ्नंश्लेष्मपित्तकृत्॥
॥३५॥वुडु॥गोधामांसंतुवातघ्नंश्वासकासहरंचयत्॥मोलनमां

स॥शशमांसंत्रिदोषघ्नंदीपनंश्वासकासजित्॥३६॥खरहा॥अ
न्येविलेशयायेस्युःकोकडोंदुरिकादयः॥गर्हितंतस्यमांसंचमांद्यं
गौरवदुर्जरं॥३७॥मूषकरमांस॥इतिमृगाः॥अथपक्षिणोमांसं॥
अरण्यकुक्कुट॥अरण्यकुक्कुटंहृद्यंकव्यंश्लेष्महरंलघु॥ग्रामकु
क्कुट॥ग्राम्यकुक्कुटजंस्निग्धंवातहृद्दीपनंगुरु॥हारीतमांस॥हारी
तपललंस्वादुकफपित्तास्रदोषजित्॥३८॥कपोतमांस॥वर्द्ध
नंवीर्यबलयोस्तद्वदेवकपोतजं॥परेवामांस॥पारावतपलंस्नि
ग्धंमधुरंगुरुशीतलं॥३९॥पित्तास्रदाहनुद्बल्यंतथान्यद्वीर्यवृ
द्धिदं॥तित्तिरिमांस॥स्निग्धंतित्तिरिजंमांसंलघुवीर्यबलप्रदं
॥कषायंमधुरंशीतंत्रिदोषशमनंपरं॥४०॥लावुगे॥तद्वल्लाव
कंमांसंपथ्यंग्राहिलघुस्मृतं॥तद्वच्चवार्तकंमांसंनिर्दोषंवीर्यपु
ष्टिदं॥४१॥गुड्डि॥चटकायाःपलंशीतंलघुवृष्यंबलप्रदं॥चिरै
या॥तद्वच्चारण्यचटककव्यंलघुचपथ्यदं॥४२॥वनचीरई॥च
टकानशीतलंरुच्यंवृष्यंकापिंजलामिषं॥कपिंजलाकरमांस॥
तद्वच्चकोरजंमांसंवृष्यंचबलपुष्टिदं॥४३॥क्रव्यंतुचक्रवाकस्य
लघुस्निग्धंबलप्रदं॥वन्हिकृत्सर्वशूलघ्नंउष्णंवातामयापहं॥४४
सारसस्यतुमांसंचमधुराम्लकषायकं॥महातीसारपित्तघ्नंग्रह
ण्यर्शोरुजापहं॥४५॥जलपक्षिमांस॥स्निग्धंहिमंगुरुवृष्यंमांसं
जलपक्षिणांतुवातहरं॥तेषुपिचहंसमांसंवृष्यतमंतिमिरहरणं
च॥४६॥वेल्लकि॥अन्येबकबलाकाद्यागुरवोमांसभक्षणात्॥अ
नुक्तंतुमृगादीनांमांसंग्राह्यंहितादिषु॥४७॥इतिपक्षिमांसगुणाः
॥अथमत्स्याः॥मत्स्यगलु॥मत्स्याःस्निग्धोष्णगुरवोवातघ्नारक्तपि
त्तदाः॥तत्रकांश्चिदपिब्रूमोविशेषगुणलक्षणात्॥४८॥रोहितो
गर्गरोभीरुर्बालकोबर्बरस्तथा॥छागलोरक्तमत्स्योथमहिषश्चा
विलस्तथा॥४९॥वातूखस्खलमोसाचज्ञेयागर्भविशादयः॥लक्ष
लक्षणवीर्यादीन्कथयामियथाक्रमात्॥५०॥कृष्णःशुक्लश्चेत
कुक्षिस्तुमत्स्योयःश्रेष्ठोसौरोहितोरक्तवक्त्रः॥कोष्णंबल्यंरोहित
स्यापिमांसंवातंहंतिस्निग्धमाप्नोतिवीर्यं॥५१॥यःपीतवर्णोपिच

पिङ्गलांगः पृष्ठेतुरेखाबहुलःसशल्कः॥सममर्वरोगार्गलनादवस्यो
जडश्चशीतःकफवानदायि॥५२॥भीरुमत्स्य॥पृष्ठेपक्षौहंगलेपुच्छ
तोचेत्सर्पाभःस्यात्सर्वतोवृत्ततुंडः॥ज्ञेयःशल्कोमत्स्यकोभीरुरुक्तः
स्निग्धोवृष्योदुर्जरोवातकारी॥५३॥अहिरु॥हेमलगः॥नातिस्थू
लोवृत्तवक्त्रोपिशस्तोधत्तेदंतानुच्चमुलोदीर्घकायः॥संध्यायांवा
रात्रिशेषेचवर्गःप्रोक्तोवालःपथ्यबलःसुवृष्यः॥५४॥वालमत्स्य
॥पृष्ठेकुक्षौकंटकीदीर्घतुंडःसर्पाभोयःसोप्ययंबर्बराख्यः॥वात
टोपंसोपिदत्तेजडश्चबल्यःस्निग्धोदुर्जरोवीर्यकारी॥५५॥छाग
लमत्स्य॥श्वेतंसुकायंसमदीर्घवृत्तंनिःशल्ककंछागलकंवदंति
॥गलोद्धकंठःकिलतस्यपृष्ठेकंठःसुपथ्योरुचिदोबलप्रदः॥५६॥
रक्तमत्स्य॥योरक्तांगोनातिदीर्घोनचाल्योनातिस्थूलोरक्तमत्स्यः
सचोक्तः॥शीतोरुच्यःपुष्टिकृद्दीपनोसौनाप्यंधत्तेकिंचदोषत्रय
स्य॥५७॥महिषमत्स्य॥यःकृष्णोदीर्घकायःस्यात्स्थूलशल्कोब
लाधिकः॥मत्स्योमहिषनामासौदीपनोबलवीर्यदः॥५८॥आ
विलमत्स्य॥शुक्लांगस्ताम्रपक्षोयःस्वलांगश्चाविलाह्वयः॥सुरु
च्योमधुरोबल्योगुणाढ्योवीर्यपुष्टिदः॥५९॥[illegible]ःस्थूलांगोमाहि
षाकारकोयस्तालुस्थानेनीरजाभांदधाति॥शल्कंस्थूलंयश्चवी
नूषकोसौदत्तेवीर्यंदीपनंवृष्यदायी॥६०॥जलमत्स्य॥वितस्ति
मानःश्वेतांगःसूक्ष्मशल्कःसुदीपनः॥अलमोसाह्वयोमत्स्यो
बलवीर्यांगपुष्टिदः॥६१॥योवृत्तगोलःकृष्णांगःशल्कीकर्ण
वशाभिधः॥दीपनःपाचनःपथ्योवृष्योसौबलपुष्टिदः॥६२॥निः
शल्कानिंदितामत्स्याःसर्वेशल्कयुताहिताः॥वपुःस्थैर्यकरावी
र्यबलपुष्टिविवर्धनाः॥६३॥ह्रदकुल्याजलधिनिर्झरतडागवा
पीजलेचयेमत्स्याः॥तेतुजडानादेयायथोत्तरलघूत्तरास्तुनादे
याः॥६४॥समुद्रमत्स्याः॥क्षारांबुमत्स्यागुरवोस्लदाहदाविष्टंभ
दास्तेलवणांबुजाताः॥तेनान्यजाःस्वादुजलस्थिताअपिज्ञेया
जडास्तेपिययाश्रुतानिमान्॥६५॥इतिमत्स्याः॥शैलाटवीन
गरभूजलचारिणोयेयेकेपिसन्तिविहगाःखलुसप्रसंख्याः॥त

न्मांसमत्रनविनथ्यमथाभ्यधायिग्रंथस्यविस्तरभयाञ्चनवोपयो
गात्॥ ६६॥ पक्वभृष्टमांसगुण॥ पक्वंमांसंहितंसर्वंबलवीर्यविव
र्धनं॥ भृष्टमांसंविदाहिस्याद्रुक्षवातादिदोषकृत्॥ ६७॥ पूर्वार्धपु
रुषस्यतद्गुरुत्तरंपश्चार्द्धभागाःस्त्रियः स्त्रीगुर्वीकिलगुर्विणीय
दितथायोषित्तुतुल्यालघु॥ पक्षीचेत्पुरुषोलघुःशृणुशिरःस्कंधो
श्चपृष्ठेक्रमात्मांसंयच्चकटिस्थितंतदखिलंगुर्वेवसंतात्मना॥ ६८॥
रसरक्तादिधातूनांगुरुस्यादुत्तरोत्तरं॥ मेढ्रवृक्कयकृन्मांसंवार्षणं
चातिमात्रतः॥ ६९॥ इत्थंप्रतिस्थलविलांवुनभःप्रचारःप्राणप्रमां
सगुणनिर्णयपूर्णमेनं॥ वर्गंविचार्यभिषजाविनियुज्यमानोभु
क्ताशनंनविकृतिंसमुपैतिमर्त्यः॥ ७०॥ यस्यासीत्सुमतिर्द्विपाधिप
वृहत्कुंभांतरस्थामिषंप्रायाभ्याससिपासयेवतरुणीनेत्रांबुधतेद्वि
षां॥ तस्यायंपुरुषःप्रतापसुहृदःश्रीमन्नृसिंहेशितुर्वर्गःसप्तदशो
निषीदतिकृतौनामानिचूडामणौ॥ ७१॥ ॥ इतिवैद्यराजराजिराजी
वनिताजितराजहंसश्रीमदीश्वरसूरिसूनुश्रीकाश्मीराद्यवंशा
चार्यपरंपरान्वयश्रीनरहरिपंडितविरचितेनिघंटुराजापरा
भिधानचूडामणौमांसवर्गःसप्तदशःसमाप्तः॥ १७॥ अथमनुष्या
दिवर्गः॥ मनुष्यामानुषामर्त्यामनुजामानवानराः॥ द्विपादश्चेतना
भूस्थाभूमिजाभूस्पृशोविशः॥ १॥ पुरुषःपूरुषोनाचनरःपंचज
नःपुमान्॥ अर्थाश्रयोधिकारीस्यात्कर्माईश्चजनोर्थवान्॥ २॥ हेतु
सु॥ स्त्री॥ स्त्रीयोषावनिताबलासुनयनानारीचसीमंतिनीरामा
वामदृगंगनाचललनाकांतापुरंध्रीवधूः॥ सुभ्रूःसावरवर्णिनीच
सुतनुस्तन्वीतनुः कामिनीतन्वंगीरमणीकुरंगनयनाभीरुःप्रि
याभामिनी॥ ३॥ योषिन्महेलामहिलाविलासिनीनितंबिनीसापि
चमत्कारिणी॥ जनीसुनेत्राप्रमदाचसुंदरीस्याद्दंचितभ्रूर्ललिता
विलासिनी॥ ४॥ मानिनीचवरारोहातन्वंगीचतनोदरा॥ प्रतीपद
र्शिनीश्यामाकामिनीदर्शनीचसा॥ ५॥ भर्त्ता॥ भर्त्तापतिर्वरःकांतः
परिणेताप्रियोगृही॥ हेंडतीयहेसरु॥ भार्यापत्नीप्रियाजायादारा
श्चगृहिणीचसा॥ नपुंसकंभवेत्क्लीबंतृतीयाप्रकृतिस्तथा॥ षंढः

पंडश्चनारीनुपोटास्त्रीपुंसलक्षणा॥६॥पट्टराणी॥अथराज्ञी
चपट्टाहीमहिषीराजवल्लभा॥काहिनवह॥भोगिन्योन्याविला
सिन्योसंभुंक्तेयास्तुपार्थिवः॥७॥राजभोग्याःसपुंस्त्र्यायास्ताभ
रिण्यइतिस्मृताः॥मूले॥वेश्यातुगणिकाभोग्यावारस्त्रीस्मर
दीपिका॥८॥ब्राह्मण॥ब्रह्मात्रब्राह्मणोविप्रःषट्कर्माचद्विजोत्त
मः॥अरसु॥राजातुसार्वभौमःस्यात्पार्थिवःक्षत्रियोनृपः॥९॥वै
श्यव्यवहारिक॥वैश्यस्तुव्यवहर्तावैवार्तिकोवाणिजोवणिक्॥
उ॰क्कलिंगन्॥शूद्रःपज्जश्चतुर्थःस्यात्द्विजदासउपासकः॥वि
प्रःक्षत्रीवैश्यशूद्रोचवर्णाश्चत्वारोमीतत्रपूर्वेद्विजाःस्युः॥एषा
मेवप्रातिलोम्यानुलोम्याज्जायंतेन्याजातयःसंकरेण॥१०॥सा
मान्यशिशुनाम॥बालःपाकोर्भकोगर्भःपोतकःपृथुकःशिशुः॥
शावोर्भोवालिशोडिंभःपटुर्माणवकोत्तमः॥११॥शिशुविशेषना
म॥जातोर्भकःपक्षदिनेनमासस्ततःपाकस्त्रिभिस्तैरथपोतकाभि
धः॥षड्भिस्तुमासैःपृथुकोब्दतःशिशुस्त्रिभिर्बटुर्माणवकश्चसप्त
भिः॥१२॥वालोब्दैःपंचदशभिःकुमारस्त्रिंशतास्मृतः॥युवापंचा
शतावर्षैर्वृद्धःस्यादतउत्तरैः॥१३॥कौमारंपंचमाब्दांतंपौगंडं
दशमावधि॥कैशोरमापंचदशाद्यौवनंतुततःपरं॥१४॥युवाव
यस्थस्तरुणोवृद्धस्तुस्थविरोजरन्॥प्रवयायातयामश्चजीनो
जीर्णश्चजर्जरः॥१५॥इतिपुरुषवयोवस्था॥चिक्कवतु॥बालोत्ता
नशयोडिंभस्तनपाचस्तनंधयी॥कन्याकेयहेसरु॥कन्याकुमा
रीगौरीतुनग्निकाऽनागतार्तवा॥१६॥मध्यमा॥प्रयानआदहे
गुसु॥सामध्यमावयस्थाचयुवतीसुस्तनीचसा॥चिरंटीसुवया
श्यामाप्रौढाहृष्टरजाचसा॥१७॥गुर्विण्यापन्नसत्त्वासादंतर्वत्नी
चगर्भिणी॥वृद्धा॥निष्कलाचातिवृद्धास्यात्स्थविराचगतार्तवा
॥१८॥रजस्वला॥पुष्पितामलिनाम्लानापांसुलाचरजस्वला॥वं
ध्याचकेशिनीभून्यामोघपुष्पावृथार्तवा॥१९॥तनुस्तनूःसंहननं
शरीरंकलेवरंक्षेत्रवपुःपुराणि॥गात्रंचमूर्तिर्घनकायदेहावष्टं
गपीडानिचविग्रहश्चा॥२०॥अथावयव॥अंगमंकं प्रतीकश्चजघनो

वयवोपिच॥शिरःशीर्षकमुंडास्तुमूर्धामौलिश्चमस्तकं॥२१॥व
रांगमुत्तमांगंचकपोलंकेशभृत्स्मृतं॥कूटलु॥केशाःशिरसिजा
वालाःकुंतलामूर्धजाःकचाः॥चिकुराःकुरवश्चाथतद्वृष्टाःकक
रीमुखाः॥२२॥कणु॥दृग्दृष्टिर्लोचनंनेत्रंचक्षुर्नयनमंबकं॥ईक्षणंग्र
हणंचाक्षिदर्शनंचविलोचनं॥२३॥अपांगोनेत्रपर्यंतोनयनोपांत
इत्यपि॥तयोर्मध्यगतास्ताराबिंबिनीचकनीनिका॥२४॥हणे॥भालंल
लाटमलिकंकथ्यंतिगोधिर्भ्रूश्चिल्लिकाचनयनोर्ध्वगरोमराजिः॥
किवि॥मध्यंतयोर्भवतिकूर्चमथश्रुतिस्तुश्रोत्रंश्रवःश्रवणकर्णव
चोर्गहोश्च॥२५॥तुटि॥ओष्ठोधरोदंतवासोदंतवस्त्ररदच्छदः॥त
योरुभयतोदेशौयौप्रांतौसृक्किणीचतौ॥२६॥मुग॥घ्राणंगंधवहा
घोणासिंघिणीनासिकाचसा॥शंख॥शंखःकर्णसमीपःस्यात्सिंघा
णंनासिकामलं॥२७॥मुखं॥तुंडमास्यंमुखंवक्त्रंवदनंलपनानने
॥ओष्ठाधरस्तुचिबुकंगंडोगल्लःकपोलकः॥२८॥हलु॥हनुस्तदू
र्ध्वंदशनाश्चदंताद्विजारदास्तेरदनास्तथोक्ताः॥नागले॥जिह्वा
रसज्ञारसनाचसोक्तास्यात्काकुदंतालुचतालुकंच॥२९॥किरुना
लगे॥तदूर्ध्वसूक्ष्मजिह्वायांघंटिकालंबिकाचसा॥अन्याधोमूल
जिह्वास्यात्प्रतिजिह्वोपजिह्विका॥३०॥अवटस्तुशिरःपश्चात्संधि
र्घाटाकृकाटिका॥कोरलु॥कंबुग्रीवाकंधराचशिरोधिश्चशिरोध
रा॥३१॥हेडतले॥आन्नकोरलु॥कंठोगलोनिगालोथघंटिकागल
शुंठिका॥हेन्नर॥धमनीतुशिरासंतुस्कंदोधोशिखरंतथा॥३२॥त
स्यसंधिस्तुजत्रुस्यात्कक्षादोर्मूलसंज्ञिका॥तदधस्ताद्भवेत्पार्श्वंपृ
ष्ठंपश्चात्तनोःस्मृतं॥३३॥दोर्दोषाचप्रवेष्टाश्चबाहुर्बाहाभुजोभुजा
॥पाणिस्तुपंचशाखःस्यात्करोहस्तःशयस्तथा॥३४॥करमूल॥कर
मूलेमणिबंधोभुजमध्येकूर्परःकफोणिश्च॥तस्मादधःप्रकोष्ठःप्रगं
डकःकूर्परांसमध्यंस्यात्॥३५॥केरलु॥अंगुल्यःकरशाखाःस्युःप्रदे
शिन्यांतुतर्जनी॥परुःस्यादंगुलीसंधिःपर्वसंधिश्चकथ्यते॥३६॥अ
थांगुष्ठप्रदेशिन्यौमध्यमानामिकातथा॥कनिष्ठाचेतिपंचस्युःक्रमे
णांगुलयःस्मृताः॥३७॥कामांकुशाःकररुहाःकरजानखरानखाः॥

पाणिजांगुलिसंभूताः पुनर्भवपुनर्नवाः॥३८॥करस्याथप्रमाणं
स्यादूर्ध्वकरतलंस्मृतं॥रेखाःसामुद्रिकेज्ञेयाःशुभाशुभनिवेदि
काः॥३९॥मोले॥स्तनोरसिजवक्षोजपयोधरकुचस्तथा॥स्तना
ग्रंचूचकंरत्नंशिखास्तनमुखंचतत्॥४०॥एदे॥वक्षोवत्समुरःक्रो
डोहृदयंहृदुजांतरं॥होकुलु॥कुक्षिःपिचंडोजठरंतुंदंस्यादुदरंच
तत्॥जीवस्थानंतुमर्मस्यात्कटिप्रांतेत्रिकंस्मृतं॥४१॥मर्मस्थान॥
नाभिःस्यादुदरावर्तस्तनोधोवस्तिरुच्यते॥वस्तिश्चवातशीर्षंस्या
द्गर्भस्थानंचतत्त्रियः॥४२॥गर्भाशयोजरायुश्चगर्भागारश्चसःस्मृ
तः॥गर्भस्थान॥नाभिस्तनांतरंजंतोरामाशयइतिस्मृतः॥४३॥पक्वा
शयोह्यधोनाभेर्वस्तिर्मूत्राशयःस्मृतः॥कटिःककुद्मतीश्रोणी
नितंबश्चकटीरकं॥४४॥आरोहंश्रोणिफलकंकलत्रंरसनाप
दं॥नितंबश्चरमंश्रोणेःस्त्रीणांजघनमग्रतः॥४५॥कुकुंदरेतु
सर्वेषांस्यातांजघनकूपकौ॥कटिप्रोथौस्फिजौपायुर्गुदापा
नंतुदासनं॥४६॥गुदमुष्कद्वयोर्मध्येयोभागःसभगःस्मृतः॥
मुष्कोंडमंडकोशश्चवृषणोवीजपेशिका॥४७॥लिंगनाम॥शि
श्नंशेफश्चलिंगंचमेढ्रंसाधनमेहने॥योनिर्भगोवरांगंस्यादुप
स्थंस्मरमंदिरं॥४८॥ऊरू॥ऊरूतुसक्थिनीश्रेणिःसक्थ्नोःसंधि
स्तुवंक्षणः॥जंघोरूमध्यपर्वस्याज्जान्वष्ठीवच्चवक्रियः॥४९॥
जंघातुप्रसृताज्ञेयातन्मध्येपीडिकातथा॥जंघांघ्रिसंधिग्रंथीतु
घुटिकागुल्फइत्यपि॥५०॥गुल्फस्याधस्तुपार्ष्णिःस्यात्पादाग्रंप्र
पदंमतं॥विक्रमश्चरणःपादःपदांघ्रिश्चपदंक्रमः॥५१॥क्रोडमं
कस्तथोत्संगःप्राग्भागोवपुषःस्मृतः॥करोभवेत्संहतविस्तृतांगुलो
तलश्चपेटःप्रतलप्रहस्तकः॥मुष्टिर्भवेत्संहतपिंडितांगुलावाकुं
चितोयंमुनिभिःप्रकीर्तितः॥५२॥प्रादेशाद्यंगुलिनाम॥स्यात्तर्जनी
मध्यमिकात्वनामिकाकनिष्ठिकांगुष्ठयुताप्रदानदा॥प्रादेशता
लाभिधगोस्तवातदावितस्तिरित्यर्थमिहक्रमादियं॥५३॥हस्त
स्तुविस्तृतेपाणावामध्यांगुलिकूर्परे॥वद्धमुष्टौसरत्निःस्यादर
त्निरकनिष्ठकः॥५४॥व्यामः सह स्ततस्तु नयोस्तिर्यग्नाहोपदंन

रं॥ऊर्ध्वविस्तृतदोः पाणिर्नृमानंपौरुषंविदुः॥५५॥जीवनहेसरु॥
जीवस्थानंतुमर्मस्याज्जीवागारंतदुच्यते॥मर्मस्थानंतुचोक्तंस्या
द्भ्रूमध्यादिष्वनेकधा॥५६॥भ्रूमध्यकंठगलशंखरुचीकूर्चग्री
वागुदांडपदपाणिगुणास्थिसंधीन्॥वैद्याः शरीरक्षणविदोभिवदं
तिमर्मस्थानानिचांगगतिनाशकराणिमन्या॥५७॥लालाभवेत्तु
स्वहावः सृणिकास्यंदिनीचसा॥वेरतु॥स्वेदोघर्मश्चघर्माभोदूषि
कानेत्रयोर्मलं॥५८॥मलंविष्ठापुरीषंचविट्किट्टंपूतिकंचतत्॥मूत्रं॥
मूत्रंतुगुह्यनिष्यंदः प्रस्रावः स्रवणंस्रवः॥५९॥वलीचर्मतरंगः स्या
त्वग्भिस्त्वक्तरंगकः॥पलितंचजरालक्ष्मकेशशौक्ल्यंचतद्भवेत्
॥६०॥रसासृङ्मांसमेदोस्थिमज्जानंशुक्रसंयुताः॥शरीरस्येर्यदा
सस्यक्विज्ञेयाः सप्तधातवः॥६३॥रसधातु॥रसस्तुरसिकाप्रो
क्तस्वेदमातावपुःस्रवः॥चर्माभश्चमेसारस्यरक्तसूरसमातृका
॥६४॥रक्तं॥रक्तास्रंरुधिरंत्वग्जंकीलालक्षतजानितु॥शोणितं
लोहितंचासृक्शोणंलोहंचचर्मजं॥६५॥मांसंतुपिशितंक्रव्यंपलं
नरस्यमस्रजं॥पललंजांगलंकीरमामिषंचतदुच्यते॥६६॥मेदस्तु
सु॥मेदस्तुमांससारः स्यान्मांसस्नेहोवसावया॥मेदोजमस्थिधातुः
स्यात्कुल्यंकीकसकंचतत्॥६७॥अस्थिसारस्तुमज्जास्यात्तेजोबी
जंतथास्थितं॥जीवनंदेहसारश्चतथास्थिस्नेहसंज्ञकं॥६८॥शुक्र
॥शुक्रंपुंस्त्वंरेतोबीजंवीर्यंचपौरुषंकथितं॥इंद्रियमन्नविकारो
मज्जारसोहर्षणंबलंचैव॥६९॥रसाद्रक्तंततोमांसंमांसान्मेदो–
स्थितद्भवं॥अस्थ्नोमज्जाततः शुक्रमित्थमेषांविनिर्क्रमः॥७०॥म
स्तकं॥स्नेहस्तुतिक्तकंक्लोममस्तिष्कंमस्तकोद्भवं॥क्रकलु॥अंत्रंपु
रीतदाख्यातंप्लीहागुल्मइतिस्मृतः॥७१॥वसातुवस्नसास्नायुर्वस्नो
कादेहवल्कलं॥शिरा॥भाषा॥सत्वक्शिरोधिजामन्याधमनीधर
णीधरा॥तंतुकीजीवितज्ञाचनाडीसिंहीचकीर्तिता॥७२॥नाडि॥
कंडरातुमहास्नायुर्महानाडीचसास्मृता॥शरीरास्थितुकंकालंस्या
त्करंकोस्थिपंजरः॥७३॥स्रोतांसिखानिछिद्राणिकालखंडयकृ
न्मतः॥शिरोस्थितुकरोटिः स्यात्शिरस्त्राणंतुशीर्षकं॥७४॥ततं

इखर्परंप्राहुःकपालंचतदीरितं॥वन्ननिहृत्तु॥पृष्ठास्थित्रुकसेरुः
स्यात्शृंखलास्थिनलकंस्मृतं॥७५॥पार्श्वदृटालु॥पार्श्वास्थिपार्श्वकं
प्रोक्तंइतिदेहांगनिर्णयः॥आत्मनु॥आत्माशरीरीक्षेत्रज्ञोपुद्गलः
प्राणदंगलः॥७६॥जीवोविभुःपुमानीशःसर्वज्ञःशंभुरव्ययः॥प्र
धानंप्रकृतिर्मायाशक्तिश्चैतन्यमित्यपि॥७७॥अहंकार॥अहंका
रोभिमानःस्यादहंताहंमतिस्तथा॥मनस्तुहृदयंस्वांतंचित्तंचेतो
मनश्चहृत्॥७८॥सत्वंरजस्तमश्चेतिप्रोक्ताःपुंसस्त्रयोगुणाः॥अ
क्षिपंचकं॥श्रोत्रंत्वग्रसनानेत्रंनासाचेत्यक्षिपंचकं॥७९॥विष
येंद्रिय॥अक्षंहृषीकंकरणंबर्हणंविषयेंद्रियं॥शब्दःस्पर्शोर
सोरूपंगंधश्चविषयाअमी॥८०॥पंचभूतगुण॥इंद्रियास्तेगो
चरास्तेपंचभूतगुणाःखलु॥आकाशमनिलस्तोयंतेजःपृथ्वी
चतान्यपि॥८१॥क्रमेणपंचभूतानिकीर्तितानिमनीषिभिः॥
इत्येवमानुषवयोनरवर्णगात्रधात्वंगलक्षणनिरूपणपूर्वमा
णः॥वर्गःकृतस्तुभिषजांबहुदेहदोषनामाभिदानगणनिर्ण
यधीनिवेशः॥८२॥इतिपशुपतिपादांभोजसेवासमाधिप्रति
समयसमुत्थानंदसौरभ्यैकसीम्ना॥नरहरिकृतिनायंनिर्मिते
यातिनामप्रचयमुकुटरत्नेशांतिमष्टादशांकः॥८३॥इतिवै
द्यराजिराजहंसश्रीमदीश्वरसूरिसूनुश्रीकाश्मीराद्यवंशा
चार्यपरंपरान्ववायश्रीनरहरिपंडितविरचितेनिघंटुराजापर
नाम्न्यभिधानचूडामणौमनुष्यादिवर्गोष्टादशः॥१८॥अथसिं
हादिवर्गः॥सिंहःपंचमुखोनखीमृगपतिर्मानीहरिःकेसरी
क्रव्यादोनखरायुधोमृगरिपुःशूरश्चकंठीरवः॥विक्रांतोद्विर
दांतकोबहुबलोदीप्तोबलीविक्रमीहर्यक्षःसचदीप्तपिंगलइ
तिख्यातोमृगेंद्रश्चसः॥१॥महामृगस्तुशरभोमेघस्कंदोमहा
मनाः॥अष्टापदोमहासिंहोमनस्वीपर्वताश्रयः॥२॥कुलि॥व्या
घ्रःपंचनखोव्यालःशार्दूलश्चगुहाशयः॥तीक्ष्णदंष्ट्रःपुंडरीको
द्वीपिभीरुर्नखायुधः॥३॥चित्रकश्चित्रकायःस्यादुपव्याघ्रोमृगां
तकः॥सूरश्चसुदृग्शार्दूलश्चित्रव्याघ्रसमःस्मृतः॥४॥रिक्षोभल्लू

कोप्यभल्लः शशल्योदुर्घोषः स्याद्भल्लकः स्पष्टदृष्टिः॥ द्राघिष्ठास्या
द्दीर्घकेशः शिराघ्रज्ञेयः सोयं दुश्चरो दीर्घकेशी॥५॥ नरि॥ मृगाद
स्तु सविज्ञेयस्तरक्षुर्घोरदर्शनः॥ शिवानुभूरिमायुः स्यान्गोमा
युर्मृगधूर्त्तकः॥६॥ शृगालोवंचकः क्रोष्टाफेरवः फेरुजंबुको॥
शालावृकः शिवालुश्च फेरंडोप्याघ्रसेवकः॥७॥ आड्नापि॥ ई
हामृगस्तु कोकाह्वकोवदस्तादनो विरुक्॥ गोवत्सारिश्छागला
रिश्छागलांतो जलाश्रयः॥८॥ नापि॥ कुक्कुरः सारमेयः श्वाभष
णः शुनकः शुनः॥ भल्लूकोवक्रलांगूलो वृकेरो रात्रिजागरः॥९॥
कौलेयको ग्राममृगो मृगारिर्मृगदंशकः॥ शूरोबुधः शयालुश्चसो
पिंडसहकामुकः॥१०॥ बेकु॥ बिडालो मूषकाराति रैतुश्च वृषदं
शकः॥ सालावृकश्च मार्जारो मायावी दीप्तलोचनः॥११॥ कस्तूरी
मृगः॥ अन्योलोमशमार्जारः पूतिकोमालजानकः॥ सुगंधिमूत्र
पतनो गंधमार्जारकश्चसः॥१२॥ इति प्रहसाः॥ अथ विलंबिताः
॥ ह्विरदगजमतंगजेभकुंभिह्विरदनवारणहस्तिपद्मिनागाः॥ क
रिकरटिविषाणिकुंजरस्तेरदनिमदाबलसामजद्विपश्च॥१३॥
भद्रः स्तंबेरमो दंती दुमारिः षष्ठिहायनः॥ मातंगः पुष्करीदंतावब
लश्चानेकपस्त्विभः॥१४॥ त्रिविधानामगज॥ भद्रो मंदो मृगश्चे
ति विज्ञेयास्त्रिविधा गजाः॥ बनप्रचारसारूप्यसत्वभेदोपल
क्षिताः॥१५॥ अनेयमरि॥ सुदंतो बालओज्ञेयो दुर्दंतो व्यालउच्य
ते॥ प्रभिन्नो गर्जितो भ्रांतो मत्तो मदकलश्चसः॥१६॥ रुणाने॥ रूभी
तु करिणी ज्ञेया हस्तिनी धेनुका वशा॥ करेणुः पद्मिनी चैव मातंगी
वासिता च सा॥१७॥ खड्गमृग॥ खड्गः खड्गमृगः क्रोधी मुखशृंगो
मुखेबली॥ गंडको वज्रचर्मा च खड्गी बध्रीणसश्चसः॥१८॥ ऊंटे॥
उष्ट्रो दीर्घगति र्बली चक्रभोदासेरको धूसरो लंबोष्ठो लवणः क्र
मेलकमहाजंघो च बीजां घ्रिकः॥ दीर्घशृंखलको महान्श्च महाग्रीवो
महांगो महानादः सोपि महाध्वगः स च महापृष्ठो बलिष्ठश्चसः॥१९॥
कोण॥ महिषः कासरः क्रोधी कलुषश्चारिसैरिभः॥ लुलायरक्तम
नास्त्वा विषाणी गवली बली॥२०॥ रम्भे॥ महिषी मंदगमना महाक्षी

रापयस्विनी॥लुलायकांताकलुषातुरंगद्वेषिणीचसा॥रन्तु॥गौस्तु
भद्रोबलीबर्दोदम्योदांतःस्थिरोबली॥उक्षानड्वान्ककुद्मान्स्यादृ
षभोवृषभोवृषः॥२१॥धुर्योधुरीणोधौरेयःशांकरोहरवाहनः॥
रोहिणीरमणोवोढागोनासःसौरभेयकः॥२२॥धवलःशावलस्ता
म्रश्चित्रश्चधूसरस्तथा॥इत्यादिवर्णभेदेनज्ञेयागावोत्रभेदतः
॥२३॥विनीतःशिक्षितोदांतोधूर्योवोढाचधौरिकः॥वालोवत्स
तरःप्रोक्तोदुर्दांतोमङ्कुरुच्यते॥२४॥वृषभस्तुवृषःसेक्तामहोक्षः
पुंगवोबली॥गोनाथउक्षाऋषभोगोप्रियोगोपतिश्चसः॥२५॥चो
बुलासणिकः॥गोर्माताउस्राशृंगिणीसौरभेयीमाहेयीस्याद्रोहिणी
धेनुरघ्न्या॥दोग्ध्रीभद्राभूरिमत्यानडुह्योकल्याणीस्यान्मावनीवा
र्जुनीच॥२६॥वनगौर्गवयःप्रोक्तोबलभद्रोमहागवः॥गवयीवन
धेनुःस्यात्सैवभिल्लगवीमता॥चमरीयमृग॥चमरोव्यजनावत्यो
भोटभोवालधिप्रियः॥तस्यस्त्रीचमरीप्रोक्तादीर्घबालागिरिप्रिया
॥चवरीगाय॥हंहि॥वराहःस्तब्धरोमाचरोमशःसूकरःकिरिः॥
॥२८॥वक्रदंष्ट्रःकिरिर्दंष्ट्रीक्रोडोदंतायुधोबली॥पृथुस्कंधश्चभूदा
रःप्रोक्तोघोणांतभेदनः॥२९॥कोलःपोत्रायुधःशूरोवह्वरत्योदरायु
धः॥उरुहंदि॥अन्यस्तुविड्वराहःस्याद्ग्रामिणोग्रामसूकरः॥३०॥
ग्राम्यक्रोडोग्राम्यकोलोविष्ठाभूदारकश्चसः॥इतिविलंबिनमृ
गाः॥अथद्रुतमृगाः॥कुदुरे॥अश्वोघोटस्तुरंगोवातुरंगश्चतुरंग
मः॥वाहोवाजीमुद्गभोजीवीतिसप्तिश्चसैंधवः॥३१॥हरिर्हयश्चधा
राटोजवनोजीवनोजवी॥गंधर्वोवाहनःश्रेष्ठःश्रीभ्राताम्रतसोदरः
॥३२॥दशभेदगलकुदुरोगलुः॥आरट्टसिंधुजवनायुजपारसीक
कांबोजबाल्हिकमुखाविविधास्तुरंगाः॥साम्राणिधूपरिमुखाअ
पिदेशतःस्युर्वर्णैनतेपिचपुनर्बहुधाभवंति॥३३॥वर्णभेद॥गलकुं
दरे॥श्वेतःकर्कःसोश्वरक्तस्तुशोणोहैमःकृष्णोनीलवर्णस्तुनीलः॥
शुभ्रैर्नेत्रैर्मल्लिकाक्षोनिदिष्टःकृष्णोरक्तःसोयमिंद्रायुधाख्यः३४
इत्थंनानावर्णभेदेनवाजीज्ञातव्योयंलोकरूढैःसुधीभिः॥अश्वा
स्माभिर्नप्रवंकःकृतोमासाजानेयोमन्तवाजीकुलीनः॥३५॥सु

कुलः सुविनीताश्वः किशोरस्तुरगार्भकः॥कुद्दुरेयघोटिगे॥वाजि
नीवडवावापिप्रसूरश्वाश्विनीचसा॥इत्यश्वाः॥कर्त्ते॥गर्दभः॥शं
कुकर्णश्चबालेयोरासभोगर्दभः खरः॥भारवोभूरिगश्चैवचक्री
वान्धूसराहूयः॥३६॥हेसरकत्ते॥वेसरस्त्वश्वखरजः सकृद्गर्दभो
ध्वगः स्मी॥संतुष्टोमिश्रजः प्रोक्तोमिश्रशब्दोनिभागरः॥३७॥
होनु॥अजोवुक्कश्चमेधाः स्याल्लंबकर्णः पृथुश्रसः॥छागलोवर्क
रश्छागोस्तुभोवस्तः पयः छगः॥३८॥आडु॥अजापयस्विनीभी
रुश्छागोमेध्यागलस्तनी॥नागरु॥मेषोभेडोहुडोमेढः कर्णायु
रुणस्तथा॥३९॥एडकः शृंगिणोपिस्यादुरभ्रोरोमशोबली॥ना
नादेशविशेषेणमेषानानाविधाअमी॥४०॥सारंग॥मृगः कुरंगो
वानायुः कृष्णसारः सुलोचनः॥हरिणोजिनयोनिः स्यादेणः पृष
तइत्यपि॥४१॥कक्कवागश्चसारंगः शिखिशृंगश्चचित्तलः॥अन्य
श्चभारशृंगः स्यान्महाशृंगोवनप्रियः॥४२॥रुरुस्तुरोहिषोरोही
स्यान्यकुश्चैवशंबरः॥नीलकः पृष्ठनश्चैवशंकुः शवलपृष्ठकः॥४३॥
शिखर्युपकुरंगः स्यान्श्रीकारीचमहाजवः॥जवनेवेगिहरिणो
जंघालोजांघिकाहूयः॥४४॥वानरः॥वानरोमर्कटः कीशः कपिः
शाखामृगोहरिः॥प्लवंगमोवनौकाश्चचाध्वगः प्लवगः प्लवः॥४५॥
सिंगणका॥गोलांगूलस्तुगोपुच्छः कपिः कृष्णमुखोहिसः॥मदु
राभूषणाख्योयंविज्ञेयः कृष्णवानरः॥४६॥एलयमृग॥शल्यकः
स्यान्शल्यमृगोवज्रशुक्तिर्विलेशयः॥शल्योन्यः खाविदित्युक्तः
शलीचशललीचसः॥४७॥शल्यलोम्नीतुविज्ञेयाशललीशललं
शलं॥मरे॥कोकडोंगविनः प्रोक्तः कोकोवाचोविलेशयः॥४८॥
ज्ञेयश्चमरुपकुश्चलोमशोधूम्रवर्णकः॥नेउरा॥मंगुस॥नकुलः सू
चिरद्नः सर्पारिर्लोहितान्ननः॥४९॥हावु॥दर्वीकरोद्विरसनः पा
तालनिलयोबली॥नागश्चकाद्रवेयश्चवक्रगोदंदशूककः॥५०॥
चक्षुःश्रवाविषधरोगूढांघ्रिः कुंडलीफणी॥पन्नगोवायुभक्षश्चभो
गीस्याज्जिह्मगश्चसः॥५१॥सर्पोदंष्ट्रीभुजंगोहिर्भुजगश्चसरीसृपः
॥कंचुकीदीर्घपृष्ठश्चद्विजिह्वश्चागमस्तसः॥५२॥फणिनोधवलागा

येतेनागाइतिकीर्तिताः॥अन्येरक्तादिवर्णाद्यैर्बोध्याःसर्पादिनाम
भिः॥गोनासोमंडलीत्युक्तश्चित्रांगोव्यंतरोभवेत्॥आह्ले॥कुलिको
हरितोज्ञेयोराजिलंडुंडुभंविदुः॥५४॥अनंतोवासुकिःपद्मोमहा
पद्मोपितक्षकः॥कर्कोटःकुलिकःशंखइत्यमीनागनायकाः॥५५॥
तद्वंधवासुकुमुदकंबलाश्वतरादयः॥इतिहा॥आपहनहिमुखी
चैवधामिणीत्यादयःपरे॥५६॥इतिसर्पविशेषाः॥मूषिकोमूषकः
पिंगोप्याखुरुंदुरुकोनखी॥कनकोबिलकारीचधान्यारिश्चबहु
प्रजः॥५७॥दोडुइलि॥अन्योमहामूषकःस्यान्मोषीविघ्नेशवाह
नः॥महांगःसस्यमारीचभूपलोभित्तिपातनः॥५८॥छुछुंदरी॥छुछुं
दरीराजपुत्रीप्रोक्तान्याप्रतिमूषिका॥सुगंधिमूषिकागंधाछुंडि
नीछुंडमूषिका॥५९॥ऊडु॥गोधातुगोधिकाज्ञेयादारुमत्स्याहुया
चसा॥खरचर्मापंचनखीपुलकादीर्घपृष्ठिका॥गोरधास्यात्तुगोधे
योगोधेरोगोधिकासुतः॥६०॥बर्बुरीघोरिकाघोरादीर्घरूपाभया
वहा॥स्थूलचंचादीर्घपादासर्पभक्षीगुणारिका॥६१॥घुणारि॥
ब्राह्मणीगृहगोधाचसुपदीरक्तपृष्ठिका॥ब्राह्मणी॥अति॥सर
टःकृकलासःस्यात्प्रतिसूर्यशनायकः॥वृत्तिस्थःकंटकागारोदु
रारोहोद्रुमाश्रयः॥६२॥गोसुवे॥जाहकोगात्रसंकोचीमंडलीब
हुरूपकः॥कामरूपीविरूपीचयेलुवासःप्रकीर्तितः॥६३॥ह
लि॥पल्लीतुमुसलीप्रोक्तागृहगोधागृहालिका॥ज्येष्ठाचकुड्य
मत्स्याचपल्लिकागृहगोधिका॥६४॥तंतुवायस्तूर्णनाभोलूताम
र्कटकःकृमिः॥हालाहलस्त्वंजलिकासोक्ताकुटिलकीटकः॥६५
चेलु॥वृश्चिकःशूककीटःस्यादलिद्रोणश्चवृश्चिके॥अथकर्णज
लूकास्याच्चित्रांगीशतपद्यपि॥६६॥इरुहे॥पिपीलिकातुपीली
चश्रीसंज्ञाचपिपीलिका॥कहिरहे॥उदंघाकपिजंघिकाज्ञेयाते
लपिपीलिका॥६७॥कृष्णान्याचपिपीलीतुस्थूलारुक्षरुहाचसा
॥मत्कुणोरक्तपायीस्यादुक्तांगोमंचकाश्रयी॥६८॥इतिबिलेश
याः॥साधारणमत्स्यनाम॥यादस्तुजलजंतुःस्याज्जलप्राणीजले
प्रायः॥तत्रातिक्रूरकर्मा[illegible]सजलव्यालउच्यते॥६९॥मत्स्योवैसा

रिणोमीनः पृथुरोमाझषोंडजः॥ विसारश्च शलीशल्की पाठीनोनि
मिषस्तिमिः॥ ७०॥ मत्स्यविशेषनाम॥ राजीवः शकुलः शृंगीवागु
सः शल्यपल्लवौ॥ पाठीनः शकुलश्चैवनंद्यावर्त्तश्चरोहितः॥ ७१॥
मुद्गरस्तिमिरित्याद्यास्तेयास्तद्भेदजातयः॥ तद्भेदोमकरस्त्वन्यो
मानंगमकरोपरः॥ ७२॥ चिरिल्लश्चतिमिश्चैवनथान्यश्चतिमिंगि
लः॥ तिमिंगिलगिलश्चेतिमहामत्स्याअमीमताः॥ ७३॥ इतिम
त्स्याः॥ मोसलो॥ शिशुकः शिशुमारः स्यात्सचग्राहोवराहकः॥
भवेन्नक्रस्तुकुंभीरोगलग्राहोमहाबलः॥ ७४॥ आवे॥ कच्छपः
कमठः कूर्मोगूढांगोधरणीधरः॥ कच्छेष्टः पल्वलावासोवृत्तः क
ठिनपृष्ठकः॥ ७५॥ कर्कटः स्यात्कर्कटकः कुलीरश्चकुलीरकः॥
संदंशकः पंकवासस्तिर्यग्गामीसचोर्ध्वदृक्॥ ७६॥ मंडूकोदर्दुरो
मंडोहरिर्भेकश्चलूलकः॥ शलूरः सचवर्षाभूः प्लवः कटुरवस्त
था॥ ७७॥ सभीडन्यश्चशुंडीचप्लवंगश्चप्लवंगमः॥ पोतोन्योराजमं
डूकोमहामंडूकइत्यपि॥ ७८॥ पीतांगः पीतमंडूकोवर्षाघोषोम
हारवः॥ जिगुले॥ जलूकातुजलौकास्याद्रक्तपारक्तपायिनी॥ ७९॥
रक्तसंदोहिकातीक्ष्णाचर्मटीजलजीवनी॥ निरुकागे॥ जलका
कस्तुदात्यूहः सचस्यात्कालकंटकः॥ जलपारावतः कोपिप्रोक्तो
जलकपोतकः॥ ८०॥ स्थलेकरितुरंगाद्यायावंतः संतिजंतवः॥ ज
लेपितेचतावंतोज्ञातव्याजलपूर्वकाः॥ ८१॥ इतिजलेशयाः॥ अथ
प्रतुदाश्च॥ पक्षिगलु॥ खगविहगविहंगमाविहंगः पिपतिषुपत्रि
पतत्रिपत्रवाहाः॥ शकुनिशकुनविष्किरांडजाविः पतगपतत्र
भसंगमानगौकाः॥ ८२॥ पक्षी॥ वाजीपत्ररथः पक्षीद्विजोनीडोद्भ
वोनुगः॥ शकुंतः पतगोधिष्णन्पतंगोविकिरश्चसः॥ ८३॥ गिडिग
॥ गृध्रस्तार्क्ष्योवैनतेयः खगेंद्रोभुजगांतकः॥ वक्रतुंडश्चदाक्षायोग
रुत्मान्दूरदर्शनः॥ ८४॥ गिरिग॥ श्येनः शशादः क्रव्यादः क्रूरोवे
गीखरांतकः॥ कामांडस्तीव्रसंपातस्तरस्वीतार्क्ष्यनाशकः॥ ८५॥
सिद्धान्नः पक्षिभक्षीचमस्त्रायेरिसरूपकः॥ लघुशब्दकरश्चेतिसि
चाणोमांसभोजकृत॥ ८६॥ शशारिः शशमारीचशशकस्य मार

क:॥सिखणनाम॥काष्ठकुट्ट:काष्ठभंगीकाष्ठकूटश्चशब्दिन:॥८७॥
कठकुटा॥कुरंगोनीलपिच्छ:स्यात्लंबकर्णोरणप्रिय:॥रणपक्षी
पिच्छबाण:स्थूलनीलोभयंकर:॥८८॥रणगीध॥कंकस्तुलोहपृष्ठ:
स्यात्संदंशवदन:खर:॥रणालंकरण:क्रूर:सचस्यादामिषप्रिय:
॥८९॥कंकपक्षीरणपक्षीविशेष:॥कागे॥काकस्तुवायसोध्वांक्ष:
काणोरिष्ट:सकृत्प्रज:॥बलिभुक्बलिपुष्टश्चधूलिजंघोनिमित्तकृ
त्॥९०॥कौशिकारिश्चिरायुश्चकरटोमुखर:खर:॥आत्मघोषोम
हालोलश्चिरजीवीचलाचल:॥९१॥द्रोणस्तुद्रोणकाक:स्यात्काको
लोरण्यवायस:॥वनवासीमहाप्राण:क्रूररावीफलप्रिय:॥९२॥
गूगे॥उलूकस्तामकोघूकोदिवांध:कौशिक:कुवि:॥नक्तंचरोनि
शाटश्चकाकारि:क्रूरघोषक:॥९३॥वल्गुलीवक्तुविष्टासादिवांधा
चनिशाचरी॥स्वैरिणीचदिवास्वापामांसेष्टामातृवाहिनी॥९४॥न
चिलु॥चर्मकीचर्मपक्षीचचर्मांगीचर्मगंधिका॥कृत्याभूकारिणी
चामीचिर्मपक्षीचमेलिका॥९५॥दिनांधानक्तभोजीचआमणीकर्णि
काह्वया॥चमेडी॥मयूरश्चंद्रकीवर्हीनीलकंठ:शिखीध्वजी॥९६॥
मेघानंदीकलापीचशिखंडीचित्रपिच्छक:॥बर्हिण:प्रचलाकी
चभुजंगाशी:शिखावल:॥९७॥केकीभुजंगभोगीचमेघनादा
नुलासक:॥बर्हभार:कपोल:स्याद्बर्हिनेत्राणिचंद्रका:॥९८॥
प्रचलाक:शिखास्नेयाध्वनि:केकेतिकथ्यते॥कुरर:खरशब्द:
कुर्ट्क्रौंच:पंक्तिचर:खर:॥९९॥नीलक्रौंचस्तुनीलांगोदीर्घग्री
वोतिजागर:॥बेल्लकि॥वक:कंकोवकोटश्चतीर्थसेवीचताप
स:॥१००॥मीनघातीमृषाध्यानीनिश्चलांघ्रिश्चदांभिक:॥शाकुनी
पोनकीश्यामापांडवीश्वेतपक्षिणी॥१॥दुर्गाभगवतीचैवसेवो
क्तासत्यपांडवी॥शाकुनीविड्डाल॥दुर्गानाम॥वलाकाविसकं
ठीस्यात्शुक्लांगीदीर्घकंधरा॥२॥घर्मांतकामुकीश्वेतामेघना
दाजलाश्रया॥इतिप्रतुदा:॥अथप्लवा:॥चक्र:कोकश्चक्रवाको
रथांगोभूरिप्रेमाद्वंद्वचारीसहाय:॥कांत:कामीरात्रिविश्लेषगा

मीरामावसोजोपम:कामुकश्च॥३॥सारस:सरसकोकामीनीलांगो

अणितारवः॥नीलकंठोरक्तनेत्रःकाकवाक्कामिवल्लभः॥४॥टिट्टि
भीपीनपादश्चसदालूतानृजागरः॥निशाचरीचित्रपक्षीजलशा
यीसुचेतना॥५॥टिटेडी॥जलकुक्कुटकश्चान्योजलशायीजलस्थि
तः॥ठिकःपाशगडोठिक्कोजलसार्यतिलाशयः॥६॥जलपक्षीम
हापक्षीजलसाघनिवासकः॥ठीक॥जलशायीमंडलीनोमंदगः
श्लेष्मलोविषी॥७॥सराजीराजिमंतश्चजलसर्पःसदुंदुभिः॥द्विवि
गोडोनिसश्चैवचित्रीशल्पीचगोमुखः॥८॥अन्येचप्लवगायेयेते
सर्वेसुद्रसारसाः॥श्वेताश्चित्राश्चधूम्राद्यानानावर्णानुगाह्वयाः॥९
हंस॥हंसोधवलपक्षीस्यात्चक्रांगोमानसालयः॥कलहंस॥क
लहंसस्तुकादंबःकलनादोमरालकः॥१०॥एषोपिचंचुचरणेषु
सुराजहंसाबंधूकधूसरतरेषुचमल्लिकाक्षाः॥कालेषुतेषुधवलः
किलधार्त्तराष्ट्राःसर्वेषुधूसरतनुस्तुभवेद्भम्मः॥११॥हणुहंसो॥
हंसीतुवरटाज्ञेयावरलाबारलाचसा॥मरालीमंदगमनाचक्रांगी
मृदुगामिनी॥१२॥इतिप्लवाः॥अथविष्किराः॥कोलि॥कुक्कुटस्ता
म्रचूडःस्यात्कालज्ञश्चरणायुधः॥नियोद्धारुकवाकुश्चविष्किरो
नखरायुधः॥१३॥स्यात्कपोतःकौक्कुटिकोधूमरोधूम्रलोचनः॥दहनो
ग्निसहायश्चभीषणोगृहनाशनः॥१४॥मनेयपारिय॥पारावतः
कलरवोरुणलोचनश्चपारावतोमदनकाकुरवश्चकामी॥रक्ते
क्षणोमदनमोहनवाग्विलासीकंठीरवोगृहकपोतकएषउक्तः
॥१५॥पारावतोन्यदेशीयःकामुकोघुल्लुसारवः॥जलपारावतः
कामीज्ञेयोगलरवश्चसः॥१६॥कोकिलःपरपुष्टःस्यात्कालःप
रभृतःपिकः॥वसंतदूतस्ताम्राक्षोगंधर्वोमधुगायनः॥१७॥वासं
तःकलकंठश्चकामगःकाकुलीरवः॥कुहूरवोन्यपुष्टश्चमत्तोमद
नपाठकः॥१८॥किकालात्वन्यपुष्टास्यान्मत्तापरभृताचसा॥सुकं
ठीमधुरालापाकलकंठीमधूदया॥१९॥वसंतदूतीताम्राक्षीपि
कीसाचकुहूरवा॥वसंताकामगाचैवगंधर्वीनगभूषणा॥२०॥
शुकःकीरोरक्ततुंडोमेधावीमंजुपाठकः॥हेतिणि॥अन्योराजशु
कःप्राज्ञःशतपत्रोनृपप्रियः॥२१॥हैमगुणि॥सारिकामधुरालापा

दूतीमेधाविनीचसा॥कवरीकुत्सितांगीचकष्कलांगीसनालुकः
॥२२॥कवरीसालही॥पीतपादाह्युज्ज्वलाक्षीरक्तचंचुश्चसारि
का॥पठंतीपाठवाताचबुद्धिवंतीभुसारिका॥२३॥राजसालहिना
म॥गोराष्ट्रिकागोकिराटीगौरिकाकलहप्रिया॥अक्कवक्कि॥चको
रश्चंद्रिकापायीकौमुदीजीवनोपिसः॥२४॥चातकस्तोककःसोपि
सारंगोमेघजीवनः॥हसुरगुवी॥हारीनकस्तुहारीतोगंजलश्चक
पिंजलः॥२५॥धूसरीपिंगलासूचीभैरवीयोगिनीजया॥कुमारीसु
विचित्राचमात्ताकोटरवासिनी॥२६॥पिंगला॥धूसरी॥नैलपास्तुप
योष्णीस्याज्जंतुकाजिनपत्रिका॥गीजगुलु॥भृंगःकलिंगोधूम्याटो
दार्वाघाटःशतकुद्रः॥२७॥वालियतु॥व्याघ्राटःस्याद्भरद्वाजःखंजनः
खंजरीटकः॥समंतभद्रःकृष्णस्तुस्वल्पकृष्णःसुभद्रकः॥२८॥ह्वी
पवासीमुनिश्चैवचातुर्मास्यविदर्शनः॥चाषकोदीदिविःप्रोक्तोनी
लांगःपुण्यदर्शनः॥२९॥वर्तकोवार्त्तिकोवर्त्तिर्गंजीकायश्चकथ्यते
॥कलविंकस्तुचटकःकामुकोनीलकंठकः॥३०॥चटकाकलविंकी
स्यात्चाटकैरस्तुतत्सुतः॥अडवियगुव्वि॥धूसरोरण्यचटकःकुंजो
भूमिशयीचसः॥३१॥भारीटःश्यामचटकःशिरःकणभक्षकः॥धू
सरोन्योतिसूक्ष्मःस्यात्चटकोधान्यभक्षकः॥३२॥गृहकर्त्तास्तमोभी
रुःकृषिद्विष्टःकणप्रियः॥इतिचटकाः॥लावास्तुलावकःप्रोक्तोला
वःसचलवःस्मृतः॥तित्तिरि॥तित्तिरिस्तित्तिरश्चैवनैत्तिरोयाजुषोगि
रिः॥कृष्णोन्यस्तित्तिरेःशूरःसुभूतिःपरिपालकः॥३४॥गोत्रद्वे
षीभूमिपक्षःशतायुःसिद्धिकारकः॥क्षुद्रोलूकःशाकुनेयःपिंग
लोडुलश्चसः॥३५॥वृसाश्रयीरहद्रूपोविशालाक्षोभयंकरः॥श्या
मावराहीशकुनिःकुमारीतुगाविदावीचटकाचकृष्णा॥श्यासोतकी
पांडविकाचवामासाकथ्यतेत्वंसितविंविनीच॥३६॥अथकीटाः॥
मिंवुत्रुलु॥प्रभाकीटस्तुखद्योतःखज्योतिरुपसूर्यकः॥नैलीनोनैल
कीटःस्यात्षड्विवादटुनाशिनी॥३७॥इंद्रगोप॥शक्रगोपस्तुवर्षाभू
रक्तवर्णेंदुगोपकौ॥लुंब॥भ्रमरःषट्पदोभृंगःकलालापःशिलीमु
खः॥३८॥पुष्पंधयोद्विरेफोलिर्मधुकृन्मधुपोद्विभः॥भ्रमरश्चचली

कोलीकांकारीमधुपोलुपः॥३९॥हेननोण॥इंदिदीरश्चमधुलिट्म
लोघुमुघुमारवः॥चर्वणामक्षिकानीलासरघामधुमक्षिका॥४०॥अ
डवियनोण॥गंधोलीवरटाक्षुद्राक्रूरास्यात्क्षुद्रचर्वणा॥रंरिकम्ह
त्रकारीचनीक्ष्णदंष्ट्रोमहाविषः॥४१॥पीतवर्णोदीर्घपादोमत्सर्यः
क्रूरदंष्ट्रकः॥टांटाच्याकांडरा॥दंशोदुष्टमुखःक्रूरःक्षुद्रिकावनम
क्षिका॥मक्षिकात्वमृतोत्पन्नावमनीचापलाचसा॥नोरजु॥मश
कोवज्रतुंडश्चसूच्यास्यःसूक्ष्ममक्षिकः॥४३॥रात्रिजागरदोधूम्रो
नीलाभस्त्वन्यजातयः॥अष्टांघ्रिरष्टपाद्श्चगृहवासीचकृष्णकः
॥४४॥कालिकःकोकि ॑लःप्रोक्तःकालुचःकृष्णदंष्ट्रकः॥कसा
रिकादीर्घमूर्द्धागृहवासाविलाशयी॥४५॥कोलिया॥कसारी
॥हेत्रु॥यूकात्तुकेशकीटःस्यात्स्वेदजःषट्पदःस्मृतः॥येवेयहेत्रु॥
पक्ष्मजापक्ष्मयूकास्यात्सूक्ष्मःषट्चरणोपिसः॥४६॥कूरे॥श्वेत
यूकांगवस्त्रोत्थालिक्षायूकांडवल्लके॥कथितेष्वेषुयोजीवःसो
दीयान्वृश्चिकादिकः॥४७॥तत्रतत्रबुधैर्ज्ञेयःससर्वःकीटसंज्ञकः
॥कीटिकाचटिकाप्रोक्तावज्रदंष्ट्राबहुप्रजा॥४८॥कृशांगीताम्रसी
भूराकीरिभारामहाबला॥मकोरो॥मर्कटःकृष्णस्तीक्ष्णदंष्ट्रोविशा
लुकः॥४९॥षट्पादकस्तुमात्सर्योमाकोटस्तूर्ध्वगुह्यकः॥चिंउटा॥
माकोडा॥षड्विंदुर्विंदुकीटस्तुदीर्घकीटस्तुपादतः॥५०॥षड्विंदु
कीट॥इतिकीटाः॥प्रहसनबिलंविनटुत्तपशप्रचूडाश्चविष्किरः
॥कीटाइतिकथितानवधात्रतिर्यंचः॥५१॥इत्थंनानातिर्यगाख्या
प्रपंचव्याख्यापूर्णवर्गमेनंविदित्वा॥वुध्यासम्यक्नामधाथाभिधी
मान्वैद्यःकुर्यान्मांसवर्गप्रयोगं॥५२॥येनाभ्यस्यपिमान्कोंगमुकु
टःशार्दूलचर्मांबरःसर्वालंकरणःसुसंगपतितःपंचाननोभ्यस्यते
॥तस्यश्रीनृहरीशितुःखलुकृतावेकोनविंशाभिधाचूडापीठमणा
वगादवसतिंसिंहादिवर्गोमहान्॥५३॥इतिश्रीकाश्मीराद्यवंशा
चार्यपरंपरान्ववायश्रीनरहरिपंडितविरचितेनिघंटुराजापरना
म्न्यभिधानचूडामणौसिंहादिवर्गएकोनविंशतिः॥१९॥व्याधिसा
मान्यनाम॥गदेसूनो [illegible] योंसघातः॥

रुड्याधमंगार्निंतमोविकारग्लानिःक्षयानार्जवमृत्युमृत्या॥१॥अ
थप्रत्येकंरोगनाम॥अथराजयक्ष्मा॥राजयक्ष्माक्षयोयक्ष्मारोगरा
जोगदाग्रणीः॥ऊष्माशोषोतिरोगाद्योरोगाधीशोनृपामयः॥२॥पां
डुरोग॥पांडुरोगस्तुपांडुःस्याद्विसर्पःसचिरामयः॥शोफःशोथस्तु
श्वयथुःशोफःस्वथुरुच्यते॥३॥क्षीक॥क्षुतंतुक्षवथुःक्षुत्प्रति
श्यायस्तुपीनसः॥नेत्ररोग॥नेत्रामयोनेत्ररोगोमुखरोगोमुखा
मयः॥४॥त्वग्दोष॥दुश्चर्मामंडलंकोष्ठस्त्वग्दोषश्चर्मदूषिका॥कु
ष्ठंतुपुंडरीकःस्यात्श्वित्रंतुचर्मचित्रकं॥५॥किलाससिध्मेसिखी
श्वासःपामाविचर्चिका॥तीते॥कंडूःकंडूतिकंडूयाखर्जूकंडूयना
निच॥६॥संचारीशुंठिकास्फोटेपामपामेविचर्चिका॥पीनस्फो
टातुपामाचस्तुद्रस्फोटावचूर्चिका॥७॥पिटकापिठिकाप्रोक्तामसू
राभामसूरिका॥स्फोटक॥विस्फोटःस्फोटकःस्फोटः॥नरहु॥के
शघ्रस्त्विंद्रलुप्तकः॥८॥गलशुंडीतुशुंडास्याद्गलगंडोगलस्तनः॥
गलगंड॥दंतार्बुद॥दंतार्बुदोदंतमूलंदंतशोथोद्विजव्रणः॥९॥गु
ल्म॥गुल्मस्तुजाठरग्रंथिःपृष्ठग्रंथोसरुर्भवेत्॥पंक्तिशूलंतुशूलं
स्यात्पाकजंपरिणामजं॥१०॥नाडीव्रण॥लूताचर्मव्रणोरक्तंनाडी
नाडीव्रणोभवेत्॥श्लीपदंपादवल्मीकंपादस्फोटोविपादिका॥११॥
विष्टंभस्तुविबंधःस्यादानाहोमलरोधनं॥अर्शांसिगुदकीलंस्या
त्दुर्नामानिगुदांकुराः॥१२॥अतीसारग्रहणी॥मलवेगस्त्वतीसा
रोग्रहणीरुक्प्रवाहिका॥वमंचवमथूर्वांतिश्छर्दिविछर्हिकाव
मिः॥१३॥हृद्रोग॥हृत्तुहृद्रोगोहृदुजोहृदुल्माणःश्वासउच्यते
॥ज्वर॥ज्वरस्तुसज्वरातंकोरोगश्रेष्ठोमहागदः॥१४॥हृंहूज॥
हृंहूजाहृंहूदोषात्याःशीताद्याविषमज्वराः॥अतीत्यागंतवस्तेद्यो
काहिकत्र्याहिकादयः॥१५॥रक्तपित्त॥रक्तपित्तंपित्तरक्तंपित्तास्रं
पित्तशोणितं॥इत्येवंरक्तवातादिहृंहूदोषमुदाहृतं॥१६॥तृष्णा
॥तृष्णोदन्यापिपासातृट्महातंकोमदात्ययः॥पानात्ययोमदव्या
धिर्मदस्तूद्रिक्तचित्तकः॥१७मूर्छामूर्छातुमोहोमूढश्चस्वरसादःस्वर
स्यः॥अरोचक॥अरुच्यानभिलाषःस्या[illegible]परोचकः॥१८

प्रमेह॥ मूत्रदोषस्तु विज्ञेयः प्रमेहो मेह इत्यपि॥ मूत्रकृच्छ्र॥ कृच्छ्रं तु मूत्रकृच्छ्रं स्यान्मूत्ररोधोऽश्मरी च सा॥ १९॥ वातव्याधि॥ वातव्याधिश्चलातंको वातरोगो निलामयः॥ कंपस्तु वेपनं वेपः कंपनं वेपथुस्तथा॥ २०॥ आग्र॥ जंभा तु जंभिका जिंभा जिंभिका जंभिणी च सा॥ आलस्यं मंदता मांद्यं कार्यप्रद्वेष इत्यपि॥ २१॥ तुंदः स्थविष्ठ इत्युक्तो जठरघ्नो जलोदरः॥ आम॥ आमो मलस्य वैषम्याद्रक्तार्त्तिः शोणितामयः॥ २२॥ ज्वालागर्दभकः प्रोक्तो ज्वालारासभकामयः॥ ज्वालास्रगदो ज्ञेयः स गर्दभगदस्तथा॥ २३॥ ज्वालागर्दभः॥ विद्रधिः स्याद्विदरणं हृद्ग्रंथिर्हृद्व्रणश्च सः॥ विद्रधि॥ व्रणो भगप्रदेशे यः स भगंदरनामकः॥ २४॥ भगंदरः॥ शिरःशूलादयो ज्ञेयास्तत्तदंगाभिधानकाः॥ इत्यमन्येपि बोद्धव्या भिषग्भिर्देहनो गदाः॥ २५॥ ताप॥ संतापः संज्वरस्तापः शोषऊष्मा च कथ्यते॥ यश्चापि कोष्ठसंतापः सोंतर्दाह इति स्मृतः॥ २६॥ दाह॥ स दाहो मुखतालोष्ठे द्रवथुश्च सुरादिषु॥ पाणिपादांसमूलेषु शाखापित्तं तदुच्यते॥ २७॥ तंद्रा॥ तंद्रा तु विषयाज्ञानं प्रमीला तंद्रिका च सा॥ लज्जा॥ प्रायशस्त्विंद्रियस्तापश्चेष्टानाशः प्रलीनता॥ उन्मादो मत्तिविभ्रांतिरुन्मनायित्तमित्यपि॥ ॥ २८॥ आवेशो भूतसंचारो भूतिक्रांतिर्ग्रहागमः॥ अपस्मार॥ अपस्मारोंगविकृतिर्लालांगो भूतविक्रिया॥ २९॥ स्तैमित्यं जडता जाड्यं शीतलत्वमपाटवं॥ साधारणव्याधिनाम॥ वातिको वातजो व्याधिः पैत्तिकः पित्तसंभवः॥ श्लेष्मिकः श्लेष्मसंभूतः समूहः सांनिपातिकः ॥ ३०॥ इति गदाः॥ व्याधितो विकृतो ग्लास्नुर्ग्लानो मंदस्तथातुरः॥ अभ्यांतोऽभ्यमितो रुग्णश्चामयाव्यपटुश्च सः॥ ३१॥ रोगीसाधारणनाम ॥ तद्विशेषास्तु विज्ञेयास्तन्मत्वा कार्ययोगतः॥ यथा ज्वरितकंडूलवातकर्षसदृशां॥ ३२॥ उत्साही द्विजदेवभेषजभिषग्भक्तो नितप्येरतो धीरो धर्मपरायणः प्रियवचो मानी मृदुर्मानदः॥ विश्वासी कृतज्ञास्तिकः सुचरितो दाता दयालुः शुचिर्यस्यात्कामम वंचकः स विकृतो मुच्येत मृत्योरपि॥ ३३॥ चिकित्सा॥ उपचारास्तूपचर्या चिकित्सा रुक्प्रतिक्रिया॥ निग्रहो वेदनानिष्ठा क्रिया चोपक्रमश्च माः॥ ३४॥ औषधं॥

भैषज्यंभेषजंजैत्रमगदोजायुरौषधं॥आयुर्योगोगदारातिरमृतं
चनदुच्यते॥३५॥रसादियोगलक्षणं॥तच्चपंचविधंप्रोक्तंस्वस्वयो
गविशेषतः॥रसश्चूर्णंकषायश्चावलेहःकल्कइत्यपि॥३६॥रसो
दृषदिसंभिन्नद्रवद्रव्यसमन्वितः॥चूर्णंतुवस्तुभिःक्षुण्णैःकषायः
क्वथितैस्तुतैः॥३७॥तैःपक्वैरवलेहःस्यात्कल्कोमध्वादिमर्दितैः॥
क्वाथःसप्तविधःप्रोक्तस्तेषांनामचलक्षणं॥३८॥पाचनःशोधनीय
श्चक्लेदनश्चसमस्तथा॥दीपनस्तर्पणःशोषइतिसप्तविधाःस्मृताः
॥३९॥पाचनोर्धावशेषश्चशोधनोद्वादशांशकः॥क्लेदनस्तुरंशस्तु
समश्चाष्टांशकोमतः॥४०॥दीपनस्तुखंडशश्चतर्पणःपंचमांश
कः॥विशोषःशोडशांशश्चक्वाथभेदाइतीरिताः॥४१॥इत्येतच्छा
स्त्रतोज्ञात्वायथायोग्यंप्रयोजयेत्॥एतद्विशेषतोनोक्तंग्रंथबा
हुल्यतोमया॥४२॥ज्ञेयंरसादिकथनादनंतरंकिलानुपानंकथ
यंतिसूरयः॥विलंघ्यचक्रामणमेतदीरितंरसेत्रीपुनःपाचनमेत
दूचिरे॥४३॥आत्मनीनंतुपथ्यंस्यादायुष्यंचहितंचतत्॥पाटवंकि
लमारोग्यमगदंस्यादनामयं॥४४॥कल्यस्तुपटुरुल्लाघोनिरातंको
निरामयः॥अगदोनीरुजोनीरुक्स्वस्थःकथ्यते॥४५॥वैद्यःश्रे
ष्टोऽगदंकारोरोगहारीभिषग्विधिः॥रोगज्ञोजीवनोविद्वान्आ
युर्वेदीचिकित्सकः॥४६॥विप्रोवैद्यकपारगःसुचिरनूचानःकु
लीनःकृतीधीरःकालकलाविदास्तिकमतिर्दक्षःसुधीर्धार्मिकः॥
स्वाचारःसमदृग्दयालुरखलोयःसिद्धमंत्रक्रमःशांतःकाममलो
लुपःकृतयशावैद्यःसविद्योत्तमः॥४७॥अधीरःकर्कशःस्तब्धःसरो
गीनित्यशिक्षकः॥पंचवैद्यानयुज्यंतेधन्वंतरिसमाअपि॥४८॥पुम
र्थाश्चत्वारःखलुकरणसौख्येकसुभगास्तदेतद्द्वेषज्यानवरतनिषे
वैकवशगं॥तदप्येकायत्तंफलदमगदंकारकृपयाततोलोकेलोके
नपरमुपकर्त्तारममतं॥४९॥राजानोविजिगीषयानिजभुजप्रक्रांतमो
जोदयात्शौर्यैसंगररंगसद्मनियथासंबिभ्रतेसंगताः॥यस्मिन्नोष
धयस्तथासमुदिताःसिध्यंतिवीर्याधिकाविप्रोसौभिषगुच्यतेस्वय
मित्तिश्रुत्याप्रिमत्याषितं॥५०॥यत्तधमस्तवापयाचिप्रदेशजाद्विजेनको

लादिकतत्ववेदिना॥यथायथंचौषधयोगुणोत्तराः प्रत्याहरंतेयमगो
चरानपि॥५१॥येनत्वांखननेब्रह्मायेनत्वांखननेभृगुः॥येनेंद्रोयेन
वरुणोह्युपचक्रमकेशवः॥५२॥तेनाहंत्वांखनिष्यामिसिद्धिंकुरुम
हौषधि॥विप्रःपठन्निमंमंत्रंप्रयतात्मामहौषधीं॥खात्वाखादिरकी
लेनयथावत्तांप्रयोजयेत्॥५३॥वीर्यंप्रकाश्यनिजमौषधयःकिलोचुरन्यो
न्यमुर्वपिदिवोभुवमाव्रजंत्यः॥जीवंमुमूर्षुमपियंहिवयंमहिम्नासे
नस्तुवीमहिसजात्वपिनैवनश्येत्॥५४॥प्रत्यापिताःप्रमुदितामुदि
तेनराज्ञासोमेनसाकमिदमौषधयःसमूचुः॥यस्मैहिजोदिशतिभे
षजमाशुराजन्तंपालयामइतिचश्रुतिराहसाक्षात्॥५५॥इतिश्रु
तिवाक्यं॥आसामीशोलिखितपठितःसद्विजानांहिराजासिद्धैर्या
श्चद्विजसदृजिनंस्वाश्रयंकामयंते॥तास्वेवान्यःप्रसरतिमदाद्यस्तु
जात्याचगत्याहीनःशून्योजगतिकुपिताःपातयंत्येनमेताः॥५६॥द्र
व्याभिधानगतिनिश्चयकायसौख्यशल्यादिभूतविषनिग्रहबालवै
द्यं॥विद्याद्रसायनवरंदृढदेहकारीमायुस्ततेर्हिचतुरंगमिहाहशं
भुः॥५७॥अन्यच्च॥अष्टांगंशल्यशालाक्यकायभूतविषंतथा॥बालो
रसायनंवृष्यमिदंकेश्चिदुदाहृतं॥५८॥इत्यष्टांग॥अष्टांगज्ञःसुवै
द्योहिविपद्यानोपचारथः॥अंगहीनःसविज्ञेयोनश्लाघ्योराजमंदि
रे॥५९॥प्राज्ञोविज्ञःपंडितोदीर्घदर्शीधीरोधीमान्कोविदोलब्धवर्णः॥
दोषज्ञःसन्दूरदर्शीमनीषीमेधावीज्ञःसूरिविज्ञोविपश्चित्॥६०॥वै
ज्ञानिकःकृतमुखःसंधावान्मतिमान्कृती॥कुशाग्रीयमतिःकृष्टिःकु
शलोविदुरोबुधः॥६१॥विख्यातःशिक्षितोदक्षःसुदीक्षःकृतधीसु
धीः॥अभिज्ञोनिपुणोविद्वान्कृतकर्माविचक्षणः॥६२॥विदग्ध
श्चतुरश्चैवप्रौढोबोधविशारदः॥सुमेधाःसुमतिस्तीक्ष्णःप्रेक्षावा
न्विबुधोविदन्॥६३॥बुद्धि॥मनीषाधिषणाप्रज्ञाधारणाशेमुषी
मतिः॥धीबुद्धिःप्रतिपत्प्रेक्षाप्रतिपत्तिश्चचेतना॥६४॥संविज्ज्ञ
प्तिश्चोपलब्धिश्चिन्मेधामननंमनः॥भानंबोधश्चहृल्लेखःसंख्याच
प्रतिभाचसा॥६५॥आदानंरोगहेतुःस्यान्निदानंरोगलक्षणं॥चिकि
त्सानप्रतीकारआरोग्यंवन्हिवर्धनं॥६६॥मंडःपेयाविलेपीचयवा

गूः॥पथ्यभेदकाः॥भक्तैर्विनाद्रवोमंडःपेयंभक्तसमन्वितः॥६७॥
विलेपीवहुभक्तास्याद्यवागूर्विरलद्रवा॥विदलंमांसमाषादिप
क्वासूपाभिधायिका॥६८॥पथ्यादिलक्षणं॥पादाहारंपथ्यमाहु
श्चवैद्याविंद्यादर्धीहारमाहारसंज्ञं॥पादोनंस्याद्भोजनंभोगमन्य
हिंद्यात्शेषंवानदोषप्रसूत्यै॥६९॥अन्नंजीवनमाहारकरंगच्छि
ममोदनं॥अंभोभिःसाधनंह्योदमन्नाद्यमशनंतथा॥७०॥आहा
रभेदाः॥भोज्यंपेयंतथाचोष्यंलेह्यंखाद्यंचचर्वणं॥निष्पेयंचैवभ
क्ष्यंस्यादन्नमष्टविधंस्मृतं॥७१॥मेलोगः॥व्यंजनंसूपशाकादिमि
ष्टान्नंतेमनस्मृतं॥उपदंशोविदंशःस्यात्संधानोरोचकश्चसः॥७॥
भोजनं॥जेमनमभ्यवहारःप्रत्यवसानंचभोजनंजग्धिः॥बलान
मशनंखदनंनिघसाहारौचनिडारणान्यादः॥७३॥भक्षणं॥जक्ष
णंभक्षणंलेहःस्यास्वदंरसनंस्वदिः॥चर्वणंपानपीतिंचधयनंभूष
णंभिधा॥षड्रसं॥मधुरोलवणस्तिक्तःकषायोम्लःकटुस्तथा॥न
संतिरसनीयत्वादन्नाद्येषड्मीरसाः॥७५॥मधुरं॥मधुरंगौल्यमि
त्याहुरिक्ष्वादौचसलक्ष्यते॥लवणं॥लवणस्तुवरःप्रोक्तःसैंधवा
दौसदृश्यते॥७६॥तिक्तं॥तिक्तंचपिचुमंदादौव्यक्तमास्वाद्यतेर
सः॥कषाय॥कषायस्तुवरःप्रोक्तःसतुपूगीफलादिषु॥७७॥अ
म्लं॥अम्लस्तुचिंचाजंवीरमातुलिंगफलादिषु॥कटुकं॥कटुस्तु
क्षारसंज्ञःस्यान्मरीचादौसचेक्ष्यते॥इतिषड्रसलक्षणं॥मधुरश्चर
सश्चिनोतिकेशान्वपुषःस्थैर्यंवलौजःवीर्यदायी॥अतिसेवनतःप्र
मेहशैत्यंजडतामांद्यमुखान्करोतिदोषान्॥७९॥लवणोरुचिकृद्र
सोग्निदायीपवनःस्वादुकरश्चसारकश्च॥अतिसेवनतोजरांचपि
त्तंशिनिमानंचददातिकुष्ठकारी॥८०॥तिक्तोजंतून्हंतिकुष्ठंज्वरा
र्तिकासंदाहंदीपनोरोचनश्च॥मर्त्येगाढंप्रत्यहंसेवितश्चेत्तीव्रंदत्ते
राजयक्ष्माणमेषः॥८१॥कषायनामानिरुणद्धिशोफंवर्णंतनोदीप
नपाचनंच॥सत्वापहोसौशिथिलत्वकारीनिषेवितःपांडुकरोतिगा
त्रं॥८२॥अम्लाभिधःप्रीतिकरोरुचिप्रदःप्रपाचनोयंमृदुतांचयच्छ
ति॥भ्रांतिंचकुष्ठंकफपांडुतांचकार्ष्यंचकासंकुरुतेनिसेवितः॥८३॥

कटुःकफकंठजदोषशोफमंदानिलश्वित्रगदान्निहंति॥सपोपिद
त्तेबहुसेवितश्चेत्क्षयावहोवीर्यबलस्यंच॥८४॥द्वंद्वरसगुणाः॥क
टुःकषायश्चकफापहारिणौमाधुर्यतिक्तावपिपित्तनाशनौ॥कटू
म्लसंज्ञौचरसौमरुद्धरौद्वंद्वंद्विषोमीसकलामयापहाः॥८५॥इति
षड्रसवीर्यपाकः॥अन्योन्यंमधुराम्लौलवणाम्लौकटुतिक्तकौच
रसौ॥कटुलवणौचस्यातांमिश्ररसौतिक्तलवणौच॥८६॥लवण
मधुरौविरुद्धावथकटुमधुरौचतिक्तमधुरौच॥साधारणमेषक
षायःसर्वत्रसमानतांधत्ते॥८७॥संधत्तेमधुरोम्लतांचलवणोधत्ते
यथावस्थितिंतिक्तारव्यःकटुतांतथामधुरतांधत्तेकषायाह्वयः॥
अम्लस्तिक्तरुचिंदधातिकटुकोयात्यंततस्तिक्ततामित्येषांस्वव
विपाकतोपिकथितावण्णांरसानांस्थितिः॥८८॥मधुरोम्लंकटुस्ति
क्तःकटुस्तुवरइत्यमी॥क्रमादन्योन्यसंकीर्णानानात्वंयांतिषड्रसाः
॥८९॥आद्याद्यैर्मधुरादिश्चेदेकैकेनोत्तरेणयुक्॥द्विकभेदःपंचद
शपर्यायैःपंचभिस्तथा॥९०॥आद्यःसानंतरःप्राग्वदुत्तरेणयुतोयदा
॥चतुर्भिरपिपर्यायैराद्येप्रोक्ताभिदादश॥९१॥एवंद्वितीयेषट्भेदा
स्तृतीयेचत्रयःस्मृताः॥चतुर्थेचैकइत्येतेत्रिकभेदास्तुविंशतिः॥९२॥
आद्यौसानंतरौत्रिषडेकैकाग्निमयोगतस्त्यक्ते॥द्वितीयेचत्वारःसा
ग्निमेकैकसंयुते॥९३॥आद्येत्युक्तेतुपंचस्युःसाग्निमेकैकसंयुते॥च
तुष्कभेदाइत्येतेक्रमात्पंचदशेरिताः॥९४॥ततःपंचकभेदाःषडेकैक
त्यागतःस्मृताः॥एकःसर्वसमासेनआसेषडितिसप्तते॥९५॥एवंत्रिष
ष्टिराख्यातारसभेदाःसमासतः॥तारतम्येष्वसंख्यातांस्तान्वेत्तियदि
शंकरः॥९६॥बृंहणंपुष्टिदंपोष्यमुक्तंपीनत्वदंचतत्॥वीर्यवृद्धिक
रंवृष्यंवाजीकरणबीजकृत्॥९७॥आप्यायनंतर्पणंचप्रीणनंतोषणं
चतत्॥निष्यंदनभिष्यंदिनेत्रद्रावंसरंचतत्॥९८॥इतिबहुविधरो
गव्याधितोपक्रमोक्तिःप्रकृतभिषगनूक्ताहारपथ्यप्रयोगं॥इममखि
लमुदित्वावर्गमुत्सर्गसिद्धानप्रवदतुसचविद्वानामयप्रत्ययांस्तान्
॥९९॥येनव्याधिशतांधकारपटलंनिष्कासिताभास्करप्रायेणापिप्रल
स्तरांप्रवितताहंतद्विषांव्याधयः॥तस्यायंकृतिवाचिविंशतितमःश्री

मल्लसिंहेशितुःश्रीनिजनामकिरीटमंडनमणौ वर्गोगदादिर्गतः॥१००
॥ इति श्रीमल्लरहरिपंडितविरचिते निघंटुराजापरनाम्न्यभिधानचू
डामणौ रोगप्रकरणं नाम विंशोध्यायः॥२०॥ सत्वं रजस्तमश्चेति पुंसा
मुक्तास्त्रयो गुणाः॥ ते युक्रमाद्मी दोषाः कफपित्तानिलाः स्थिताः॥१
॥ सत्वं श्लेष्मा रजः पित्तं तमश्चापि समीरणः॥ न्यूनस्समानमुद्रिक्तं पुं
सि पुंस्यनुवर्त्तते॥२॥ सत्वं मनोविकाशः स्यात्सत्वायत्ता तथास्थि
तिः॥ रजोरूषणमुद्रेकः कालुष्यं मनिविभ्रमः॥३॥ तमस्तिमिरमां
ध्यं च चित्तोन्मेषश्च मूढता॥ हृदयाकरणं ध्वांतमंधकारो विमोह
नं॥४॥ इति गुणत्रयलक्षणं॥ श्लेष्मपर्याय॥ वातो गंधवहो वायुः
पवमानो महाबलः॥ स्पर्शनो गंधवाही च पवनो मरुदाशुगः॥६
॥ श्वसनो मातरिश्वा च नभस्वान्मारुतोनिलः॥ समीरणो जगत्प्रा
णः समीरश्च सदागतिः॥७॥ जवनः पृषदश्वश्च तरस्वी च प्रभंजनः
॥ प्रभावनो नवस्थानो धूननो मोटनः खगः॥८॥ अन्येपि वायवो दे
हे नाडीचक्रप्रवाहकाः॥ मया वितत्य नोक्तास्ते ग्रंथगौरवभीरुणा
॥९॥ इति त्रिदोषनाम॥ सत्वादिगुणसंभिन्नदोषत्रयवशात्मना॥
आभ्यंतरं च वाह्यं च स्वरूपं सन्निरुच्यते॥१०॥ सत्वाद्यः शुचिरास्ति
कः स्थिरमतिः पुष्टांगको धार्मिकः कांतः सोपि बहुप्रजासु मधुरः क्षी
राद्विभोज्यप्रियः॥ दाता पात्रगुणादृतो दृढतनुर्मेधावी वाग्मी कृपालुः समो
गौरः श्यामतनुर्घनां वुतुहिनस्वप्नेक्षणः श्लेष्मलः॥११॥ राजसेपि
त्तप्रकृतिः॥ राजसो लवणाम्लतिक्तकटुकप्रायोष्णभोजी पटुः प्रौ
ढो नास्तिकशोप्यकालपलितीक्रोधप्रपंचान्वितः॥ द्राघीयानपि
लाश्यो वितरिनासोपाधिकं याचितो गौरांगः कनकादिदीप्तिल
लितः स्वप्नी च पित्तात्मकः॥१२॥ तामसे वातप्रकृतिः॥ निद्रालुर्बहु
भावकः सुकुटिलः क्रूराशयो नास्तिकः प्रायः पर्युषिता तिशीत विर
साहारैकनिष्ठोलसः॥ कार्येषुत्वभिमानवान समये दाता न यो वंक
शः स्वप्ने व्योमगतिः सितेतरतनुर्वातूलकस्तामसः॥१३॥ मिश्रप्रकृ
तिलक्षणं॥ सत्वादीनां गुणा यत्र मिश्रिताः संति भूयसा॥ मिश्रप्रकृ
तिकः सोयं विज्ञातव्यो मनीषिभिः॥१४॥ अपि च॥ सत्वादिरजसामि

श्रेष्ठंसत्वादिनामसे॥मध्यमंरजसामिश्रंकनीयोगुणमिश्रणं॥१५
॥गुणत्रयगुणलक्षणं॥सत्वंचित्तविकाशमाशुतनुतेदत्तेप्रबोधस्त
नांकालुष्यंकुरुतेरजस्तुमनसःप्रस्तौतिचाव्याकृतिं॥आध्यंहंत
हृदिप्रयच्छतितिरोधत्तेस्वतत्वेधियंसंधत्तेजडतांचसंततमुपाध
त्तेप्रमीलांतमः॥१६॥वातप्रकोपलक्षणं॥वातःस्वैरःस्याल्लघुःशी
तरूक्षःसूक्ष्मःस्पर्शज्ञानकस्तोदकारी॥माधुर्यान्तेसोभ्रकालेप
राह्णेप्रत्यूषेन्तेयातिजीर्णेचकोपं॥१७॥पित्तप्रकोप॥पित्तंचति
क्ताम्लरसंचसारकंचोष्णंद्रवंतीक्ष्णमिदंमधोबहु॥वर्षान्तका
लेभृशमर्द्धरात्रेमध्यंदिनेन्नस्यजरेचकुप्यति॥१८॥श्लेष्मप्रको
प॥श्लेष्मागुरुःश्लक्ष्णमृदुःप्रसक्तुकःस्निग्धःपटुःशीतजडश्चगो
ल्यवान्॥शीतेवसंतेचभृशंनिशामुखेपूर्वेन्हिभुक्तोपरिचप्रकुप्य
ति॥१९॥दोषत्रयस्ययेभेदावृद्धिक्षयविकल्पतः॥तावंतःसंप्रवक्ष्या
मिसंक्षेपार्थसमंजसं॥२०॥एकैकवृद्धौस्युर्भेदास्त्रयोयेवृद्धिदास्त्र
यः॥तत्राप्येकतराह्रार्थेषडेवद्वौदशैवते॥२१॥वृद्धातुमत्यपाभ्यां
षट्त्रिप्रवृध्यातुसप्तमः॥वृद्धोन्योन्योवृद्धतरःपरोवृद्धतमस्त्विति
॥२२॥तारतम्येनषड्भेदास्तएवंपंचविंशतिः॥एवंक्षयेपितावंतस्त
तःपंचाशदीरिताः॥२३॥वृद्धोन्योन्यःसमोन्यश्चक्षीणस्त्वितिपुन
श्चषट्॥द्विवृध्येकक्षयादुक्तव्यत्ययाच्चपुनश्चषट्॥२४॥एतेद्वा
दशतःसर्वेद्विषष्टिःसमुदाहृताः॥त्रिषष्टिस्त्वंतिमोभेदस्त्रयाणां
प्रकृतौस्थितिः॥२५॥एवंदोषत्रयस्यैतद्दोषंविज्ञायतत्वतः॥तत्तो
हिषट्प्रयुंजीततदवस्थोचिताःक्रियाः॥२६॥भूतभविष्यवर्त्तमा
न॥कालस्तुवेलासमयोप्यनेहादिष्टश्चलश्चावसरस्थिरश्च॥सो
प्येकभूतःकिलवर्त्तमानस्तथाभविष्यस्त्वितिचत्रिधोक्तः॥२७॥भू
तोवृत्तमतीतंचह्यस्तनंनिस्तुतंगतं॥वर्त्तमानेभवच्चाद्यतनंस्यादध
नातनं॥२८॥अनागतंभविष्यंस्यात्श्वस्तनंचप्रगेतनं॥वर्त्स्यद्वर्त्ति
ष्यमाणंचस्यादागामिचभाविच॥२९॥साधारणंतुसामान्यंतत्सर्वत्रा
नुवर्त्तिने॥विशेषणंविशेषश्चसकृत्स्थानेचवर्त्तिने॥३०॥तुर्यपादंच
तुर्यांशमीषत्किंचित्तथोच्यते॥अथपार्वणफलादि॥भूषापीयूषांशु

स्वर्क्षोद्योतप्रस्यंदामंदःस्वर्कुंदपूराभःस्वर्गगासंगोन्मीलनमौलिं॥
मेरुश्रीकैलासक्रीडासंघाटीशोभानंभःश्लाघाजंघालश्रीगौरीगूढां
गंवंदेशंभुं॥३१॥शब्दोच्चारेसकलगुरुकेषष्टिवर्णप्रमाणेमानंकाले
पलमितिदशस्यात्क्षणस्तानिनैस्तु॥षड्भिर्नाडीप्रहरइतिताःसप्तसा
र्धास्तथाहोरात्रेत्रेयःसुमतिभिरसावष्टभिस्तैःप्रदिष्टः॥३२॥पलादि
वकं॥पक्षःस्यात्पंचदशभिरहोरात्रैरुभाविमौ॥मासोद्वादशभिर्मा
सैःसंवत्सरउदाहृतः॥३३॥द्विशश्चैत्रादिभिर्मासैर्विज्ञेयाऋतवश्च
षट्॥त्रिभिस्त्रिभिःक्रमाद्देतैःस्यातांचविषुवायने॥३४॥पलंविघटि
काप्रोक्तानाडीनैस्तुत्रिविंशतिः॥नाडीतुघटिकाप्रोक्तातद्द्वयंचमु
हूर्तकं॥३५॥यामःप्रहरइत्युक्तोदिनभागोदिनांशकः॥अहोरात्रदि
वारात्राहर्दिवाहर्निशानिच॥३६॥घस्रोदिनोपिदिवसोवासरोभा
स्वरोदिवा॥प्राह्णापराह्णमध्याह्नसायान्हाःस्युस्तदंशकाः॥३७॥
प्रातर्दिनादिःप्रत्यूषोनिशांतःप्रत्युषोउषः॥व्युष्टंचाहर्मुखंकल्यं
प्रगेप्राह्णंप्रभातकं॥३८॥त्रिशिलु॥आतपस्तुदिनज्योतिःसूर्यालो
कःप्रभाकरः॥रविप्रकाशःप्रद्योतस्तमोरिस्तपनद्युतिः॥३९॥रो
चिर्दीप्तिर्द्युतिःशोचिस्त्विडोजोभारुचिःप्रभा॥विभालोकप्रकाश
श्चतेजओजाप्तितंचरुक्॥४०॥संध्यासायंदिनांतश्चनिशादिर्दिव
सात्ययः॥सायंपितृप्रसूश्चाद्यप्रदोषःस्यान्निशामुखं॥४१॥छाया
वीभानुगाश्यामानेजोभीरुरनातपं॥आभीतिरातपाभावोभावाली
नाचसास्मृता॥४२॥रात्रि॥शर्वरीक्षणदारात्रिर्निशाश्यामातमस्वि
नी॥तमीत्रियामाशयनीक्षपायामवतीतमा॥४३॥नक्तंनिशीथि
नीदोषाताराभूषाविभावरी॥ज्योतिष्मतीतारकिनीकालीस्वापि
कलापिनी॥४४॥साज्योत्स्नाचंद्रिकायुक्तातमिस्रातुतमोन्विता
॥अर्धरात्रोनिशीथिन्यांमध्यरात्रंचसःस्मृतः॥४५॥ज्योत्स्नातुचं
द्रिकाचांद्रीकौमुदीकामवल्लभा॥चंद्रातपश्चंद्रकांताशीतामृततरं
गिणी॥४६॥चेलुवितिके॥कांतिस्तुसुषमाशोभाछविश्छायाथवि
भाप्रभा॥श्रीर्लक्ष्मीर्हृद्विभ्रयाभिरव्याभातंभातिरुमारमा॥४७॥कत
ले॥तमस्तमिस्रंतिमिरंध्वांतंसंतमसंतमः॥अंधकारंचभूषापंतच्चां

धनमसंपनं॥४८॥पक्षादिःप्रथमाद्याचपक्षतिःप्रतिपच्चसा॥पक्षां
तोर्केंदुविश्लेषःपर्वःपंचदशीतथा॥५०॥द्वितीयंतुभवेत्पर्वचंद्रार्का
त्यंतसंगमः॥पक्ष॥प्रथमाद्यंताःक्रमात्द्वितीयादिकश्चपंचदश
॥पक्षेतिथयोज्ञेयाःपक्षश्चासितोःसितोद्विविधः॥५१॥शुक्लपक्ष॥
सितस्त्वापूर्यमाणःस्यात्शुक्लश्चविशदःशुचिः॥कृष्णपक्ष॥असि
तोमलिनःकृष्णोबहुलोवदिचस्मृतः॥५२॥दिवसैर्यत्रतत्रापिचसु
सागरसंमितैः॥भिषक्क्रियोपयोगायमंडलंभिषजांमतं॥५३॥पू
र्णिमापौर्णमासीचज्योत्स्नाचेंदुमतीशुचा॥सापूर्वानुमतिर्ज्ञेयाराका
स्यादुत्तराचसा॥५४॥दर्शस्तुस्यादमावास्याऽमावस्यार्केंदुसंगमः॥
सापूर्वात्रसिनीवालीद्वितीयातुकुहूर्मता॥५५॥मासार्द्धस्तुभवेत्पक्षः
सपंचदशरात्रकः॥द्विपक्षस्तुभवेन्मासश्चैत्राद्याद्वादशाश्चते॥५६॥
चैत्रस्तुचैत्रिकश्चैत्रीमधुःकालादिकश्चसः॥वैशाख॥वैशाखोमा
धवोराधोज्येष्ठःशुक्रस्तपस्तथा॥५७॥आषाढः॥आषाढःशुचिरुक्तः
श्रावणिकःश्रावणोनभाश्चापि॥भाद्रपद॥भाद्रोभाद्रपदोविप्रोप्रोष्ठ
पःस्यान्नभस्यच॥आश्वयुज॥इषस्त्वाश्वयुजश्चस्यादाश्विनःशारद
श्चसः॥५८॥कार्त्तिक॥कार्त्तिकोबाहुलोपिस्यादूर्जःकार्त्तिकिकश्च
सः॥मार्गशीर्ष॥मार्गःसहामार्गशीर्षआग्रहायणिकोपिसः॥५९॥
पुष्य॥पौषस्तुपैष्टिकस्तैषःसहस्योहेमतोपिच॥माघ॥माघस्तपा
स्तपस्यस्तुफाल्गुनोवत्सरांतकः॥६०॥चैत्रादिमासौद्वौद्वौस्युनी
त्नाषडृतवःक्रमात॥भवेद्वसंतोमधुमाधवाभ्यांस्यात्तांतथाशुक्र
शुचीनिदाघः॥नभोनभस्यौजलदागमःस्यादीषोर्जकाभ्यांशरदं
वदंति॥६१॥हेमंतकालस्तुसहःसहस्यौतपस्तपस्यौशिशिरःक्र
मेण॥मासद्विकेनेतिवसंतकाद्याधीमद्भिरुक्ताऋतवःषडेते॥६२॥
ऋतुराजोवसंतःस्यात्सुरभिर्माधवोमधुः॥पुष्पमासःपिकानंदः
कांतःकामरसश्चसः॥६३॥निदाघस्तूष्मकोघर्मोग्रीष्मऊष्मागम
स्तपः॥तापनश्चोष्णकालःस्यादुष्णश्चोष्णागमश्चसः॥६४॥वर्षा
प्रावृड्वर्षकालोघर्मांतोजलदागमः॥मयूरालासकःकांतश्चात
काह्लादनोपिसः॥६५॥शारदर्षावसायःस्यान्मेघांतःप्रावृडत्ययः॥

ऊष्मापहस्तु हेमंतः शरदंतो हिमागमः ॥ ६६ ॥ शिशिरः कंपनः शीतो
हिमकूटश्च कूटनः ॥ इत्येतन्नामतः प्रोक्तमृतुषट्कं यथाक्रमं ॥ ६७ ॥
इत्यृतवः ॥ इह सुरभिनिदाघमेघकालाः शिशिरशरद्धिमहायनाः
क्रमेण ॥ प्रतिदिनमृतवः स्युरूर्ध्वमर्कोदयसमयाद्दशकेन नाडिका
नां ॥ ६८ ॥ उत्तरायणं ॥ दक्षिणायनं ॥ मकरक्रांतिमारभ्य भानोः स्यादु
त्तरायणं ॥ कर्कटक्रमणादूर्ध्वं दक्षिणायनमुच्यते ॥ ६९ ॥ विषुवं ॥ य
दा तुलां च मेषं च सूर्यसंक्रमणं क्रमात् ॥ तदा विषुवतीस्यातां विषुवे
अपि ते स्मृते ॥ ७० ॥ संवत्सरादिकालज्ञैः षष्टिराख्यायि वत्सराः ॥ प्र
भवादयः ॥ शरत्संवत्सरोब्दश्च हायनो वत्सरः समाः ॥ ७१ ॥ वसंते
दक्षिणे वातो भवेद्वर्षासु पश्चिमः ॥ उत्तरः शरदे काले पूर्वो हेमंत शै
शिरे ॥ ७२ ॥ इति वायुदिग्व्यवस्था ॥ पूर्वस्तु मधुरो वातः स्निग्धकूटर
सान्वितः ॥ गुरुर्विदाहशमनो वातदः पित्तनाशनः ॥ ७३ ॥ दक्षिणः
षड्रसो वायुश्चक्षुष्यो बलवर्धनः ॥ रक्तपित्तप्रशमनः सौख्यकांति
बलप्रदः ॥ ७४ ॥ पश्चिमो मारुतस्तीक्ष्णः कफमेदोविशोषणः ॥
सद्यः प्राणापहो दुष्टः शोषकारी शरीरिणां ॥ ७५ ॥ उत्तरः पवनः
स्निग्धो मृदुर्मधुर एव च ॥ सकषायरसः शीतो दोषाणां च प्रकोप
नः ॥ ७६ ॥ कृत्वैवमवधिं तस्मादिदं पूर्वं च पश्चिमं ॥ इति देशान्वि
निर्दिश्य यथासा दिगिति स्मृता ॥ ७७ ॥ दिगाशा च हरित्काष्ठा क
कुप्पा च निदेशिनी ॥ सा च देशविभागेन दशधा परिकल्प्यते ॥ ७८
॥ ज्योतींषि तपनादीनि ज्योतिश्चक्रभ्रमीक्रमात् ॥ यतो नित्यमु
दीयंते सा पूर्वास्या दिगुच्यते ॥ ७९ ॥ पूर्वा च दक्षिणा चैव पश्चिमा
चोत्तरापि च ॥ प्रादक्षिण्यक्रमेणैताश्चतस्रः स्युर्महादिशः ॥ ८० ॥
पूर्वा प्राची पुरो माघोन्यैंद्री माघवती च सा ॥ शामनी दक्षिणा प्राची
यामी वैवस्वती च सा ॥ ८१ ॥ पश्चिमा तु प्रतीची स्याद्वारुणी प्रत्यगि
त्यपि ॥ उत्तरा दिक्कौबेरी ऐंदेवसि स्यादुदीच्यपि ॥ ८२ ॥ इति दिशः ॥
दिशोर्द्वयोर्द्वयोर्मध्ये यो भागः कोणसंज्ञितः ॥ विदिशस्ताश्चतस्रश्च
प्रोक्ता उपदिशस्तथा ॥ ८३ ॥ कोणेगलु ॥ आग्नेयी स्यात्प्राच्यपाच्यो
स्तु मध्ये नैर्ऋत्या रक्षा स्यादपाचीप्रतीच्योः ॥ वायव्यापि स्यादुदीचीप्र

तीच्योरैशानीस्यादंतराप्राच्युदीच्योः॥८४॥उपरिष्टाद्दिगूर्ध्वंस्याद
धस्तादधरास्मृता॥अंतस्त्वभ्यंतरंप्रोक्तंअंतरंचांतरालकं॥८५॥इ
तिदिशः॥स्पष्टस्त्वष्टयवैर्देशोमितोज्ञेयोंगुलाह्वयः॥स्याच्चतु
र्विंशकैस्तैस्तुहस्तोहस्तचतुष्टयं॥८६॥दंडोदंडैर्द्विसाहस्रैःक्रोश
स्तेषांचतुष्टयं॥योजनंस्यादितिह्येषदेशस्योक्तोमितिक्रमः॥८७
॥इतिप्रस्तावनोवैद्यस्योपयुक्तंतथामया॥परिमाणंतथोन्मान
मितिह्नितयमीर्यते॥८८॥इतियोजनप्रमाणं॥धान्येसानिष्टिका
पुंसोयत्तुमुष्टिचतुष्टयं॥तद्द्वयेनाष्टिकाज्ञेयाकुडवस्तद्द्वयेनतु॥८९॥
प्रस्थस्तुतच्चतुष्केणतच्चतुष्केणआढकी॥तास्त्रतस्रोभवेद्द्रोणःखा
रीतेषांतुविंशतिः॥९०॥मुष्टिरष्टादशोमाषः॥इतिधान्यमापल
क्षणं॥गोधूमह्नितयोन्मितिस्तुकथितागुंजातयासार्धयावल्लोव
ल्लचतुष्टयेनभिषजांमाषोमतस्तच्चतुः॥निष्कोनिष्कयुगंतुसार्ध
मुदितःकर्षःपलंतच्चतुस्तद्द्वंशीशरवेणतच्छततुलाभारंतुलानां
शतं॥९१॥इतिनूकक्रमः॥संग्रामोत्संगरिंगतुरगखुरपुटोद्धूत
धात्रीरजोभिःसंरंभंयातिसांद्रेनभसिकिलशमंयद्द्विषांयातिसत्वं
॥तस्यैषोप्येकविंशःश्रयतुखलुकृतौनामनिर्माणचूडारत्नापीठे
प्रशांतिंनरहरिकृतिनःकोपिसत्वादिवर्गः॥९३॥इतिश्रीनरह
रिपंडितविरचितेराजनिघंटौसत्वादिरेकविंशोवर्गः॥२१॥अथ
मिश्रकादिवर्गः॥यान्यौषधानिमिलितानिपरस्परेणसंज्ञांतरैर्व्य
वहृतानिचयोगरूढिः॥तेषांस्वरूपकथनायविमिश्रकाख्यंवर्गं
महागुणमुदारमुदीरयामः॥१॥मरिचंपिप्पलीशुंठीत्रयमेतद्विमि
श्रितं॥त्रिकटुत्र्यूषणंत्र्यूषंकटुत्रयकटुत्रिकं॥२॥हरीतकीचामल
कंविभीतकमितित्रयं॥त्रिफलात्रिफलीचैवफलत्रयफलत्रिके
॥३॥लाक्षाकाश्मर्यखर्जूरीफलानिमिलितानितु॥मधुरात्रिफला
ज्ञेयामधुरादिफलत्रयं॥४॥जातीफलंपूगफलंलवंगकलिकाफ
लं॥सुगंधित्रिफलाप्रोक्तासुरभित्रिफलाचसा॥५॥चंदनंकुंकुमं
वारित्रयमेतद्वराधकं॥त्रिभागकुंकुमोपेतंतदुक्तंचाद्यपुष्पकं॥६॥
सैंधवंचविडंचैवरुचकंचेतिमिश्रितं॥लवणत्रयमाख्यातंतच्चत्रिल

वर्णंतथा॥७॥सर्जिकाचयवक्षारष्टंकणक्षारएवच॥क्षारत्रयंचत्रि
क्षारंक्षारत्रितयमेवच॥८॥हरीतकीनागरंचगुडंचेतित्रयंसमं॥स
मत्रितयमित्युक्तंत्रिसमंचसमात्रया॥९॥सितामाक्षिकसर्पींषिमि
लितानियदातदा॥मधुरत्रयमाख्यातंत्रिमधुस्यान्मधुत्रयं॥१०॥
गुडोत्पन्नाहिमोत्पन्नामधुरानेतिमिश्रितं॥त्रिशर्कराचत्रिसिता
सितात्रयसितात्रिके॥११॥कालांजनसमायुक्तेपुष्पांजनरसांज
ने॥अंजनत्रितयंप्राहुरत्नांजनंचांजनत्रयं॥१२॥वातःपित्तंकफ
श्चेतित्रयमेकत्रसंयुतं॥दोषत्रयंत्रिदोषंस्याद्दोषत्रितयमित्यपि
॥१३॥वातपित्तकफायत्रसमतांयांतिनित्यशः॥त्रिदोषसममित्ये
तत्समदोषत्रयंतथा॥१४॥वृहतीचाग्निदमनीदुःस्पर्शाचेतितुत्रयं
॥कंटकारीत्रयंप्रोक्तंत्रिकंटकंटकत्रयं॥१५॥नागरातिविषामुस्ता
त्रयमेतत्रिकार्षिकं॥गुडूच्यामिलितंतच्चचातुर्भद्रकमुच्यते१६
त्वगेलापत्रकैस्तुल्यैस्त्रिसुगंधंत्रिजातकं॥नागकेसरसंयुक्तंचा
तुर्जातकमुच्यते॥१७॥एलात्वक्पत्रकैस्तुल्यैर्मरिचेनसमन्वितैः
॥कटुपूर्वमिदंचान्यच्चातुर्जातकमुच्यते॥१८॥श्रीखंडागरुकर्पूर
काश्मीरैस्तुसमांशकैः॥मृगांकमुकुटार्होयंमिलितैर्देवकर्दमः॥
॥१९॥कर्पूरागरुकस्तूरीकंकोलैर्यक्षकर्दमः॥यक्षकर्दमइत्युद्र
व्यचतुष्टयगुणागुणः॥कुंकुमागरुकुरंगनाभिकाचंद्रचंदनस
मांशसंभृतं॥त्र्यक्षपूजनपरैकगोचरंयक्षकर्दममिदंप्रचक्षते॥२०
कर्पूरकंकोललवंगपुष्पगुहाकजातीफलपंचकेन॥समांशभा
गेनचयोजितेनमनोहरंपंचसुगंधकंस्यात्॥२१॥पिप्पलीपिप्प
लीमूलचव्यचित्रकनागरैः॥सर्वैरेकत्रमिलितैःपंचकोलकमु
च्यते॥२२॥न्यग्रोधोदुंबराश्वत्थप्लक्षवेतसवल्कलैः॥सर्वैरेकत्र
मिलितैःपंचवेतसमुच्यते॥२३॥पंचवेतसं॥शालिपर्णीपृश्निप
र्णीवृहतीकंटकारिका॥तथागोक्षुरकश्चेतिलघ्विदंपंचमूलकं॥
॥२४॥विल्वोग्निमंथःस्योनाकःपाटलीटुंटुकस्तथा॥सर्वैस्तुमिलि
तैरेतैःस्यान्महापंचमूलकं॥२५॥पंचमूलकयोस्त्वेतन्नद्वयंचमिलि
तंयदा॥तदाभिधानमाख्यातंगुणाढ्यंदशमूलकं॥२६॥बलापुन

नैवैरंडैःसूर्यपर्णीद्वयेनतु॥एकत्रयोजितैरेतन्मध्यमंपंचमूलकं॥
॥२७॥गुडूचीगोक्षुरश्चैवमुशलीमुंडिकातथा॥शतावरीतिपंचानां
योगःपंचामृताभिधः॥२८॥गव्यमाज्यंदधिक्षीरंमाक्षिकंशर्करान्वितं
॥एकत्रमिलितंज्ञेयंदिव्यंपंचामृतंपरं॥२९॥गोमूत्रंगोमयंक्षीरंगव्य
माज्यंदधीतिच॥युक्तमेतद्यथायोगंपंचगव्यमुदाहृतं॥३०॥निंबस्य
पत्रत्वक्पुष्पफलमूलैर्विमिश्रितैः॥पंचनिंबंसमाख्यातंनतिक्तंनिंब
पंचकं॥३१॥कोलदाडिमवृक्षाम्लचुल्लिकाचाम्लवेतसैः॥फलंपंचा
म्लमुद्दिष्टमम्लंपंचफलंस्मृतं॥३२॥जंबीरनारिंगसहाम्लवेतसैःस
तिंतिडीकैश्चसबीजपूरकैः॥समांशभागेनतुमेलितैरिदंद्वितीयमु
क्तंचफलाम्लपंचकं॥३३॥चांगेरीलिकुचाम्लवेतसयुतंजंबीरकपू
रकंनारंगंफलशाडवंस्त्वितितुपिंडाम्लंचबीजाम्लकं॥अंबष्ठासहि
तंद्विरेतदुदितंपंचाम्लकंतद्द्वयंविज्ञेयंकरमर्दनिंबकयुतंस्यादम्ल
वर्गीद्वयं॥३४॥नैलकंदःसुधाकंदःक्रोडकंदोरुदंतिका॥सर्पने
त्रयुताःपंचसिद्धौषधिकसंज्ञकाः॥३५॥शैरीयकुसुमंमूलंफलंप
त्रंत्वगित्ययं॥कीरादिःकथितोयोगःपंचशैरिषकाभिधः॥३६॥त्व
क्पत्रकुसुमंमूलंफलमेकस्यशाखिनः॥एकत्रमिलितंतच्चपंचांग
मितिसंज्ञितं॥३७॥विदारिकंदावृहतीपृश्निपर्णीनिदिग्धिका॥श्व
दंष्ट्राचेतिसंप्रोक्तोयोगःपंचगणाभिधः॥३८॥अत्यम्लपर्णीकांडीरमा
लाकंदद्विसूरणैः॥प्रोक्तोभवतियोगोयंपंचसूरणसंज्ञकः॥३९॥
शृंगीचकालकूटश्चमुस्तकोवत्सनाभकः॥सक्तुकश्चेतियोगोयंम
हापंचविषाभिधः॥४०॥स्नुह्यर्ककरवीराणिलांगलाविषमुष्टिका
॥एतान्युक्तानिभिषजापंचपांडित्यशालिना॥४१॥गवामजानांमे
षीणांमहिषीणांचमिश्रितं॥मूत्रेणगर्दभीनांचतन्मतंमूत्रपंचकं॥
॥४२॥सुवर्णरजतंताम्रंत्रयमेतत्त्रिलोहकं॥वंगनागसमायुक्तंत
त्प्राहुःपंचलोहकं॥४३॥सुवर्णरजतंताम्रंत्रपुकृष्णायसंसमं॥ग्र
हांगमितिवाद्रूयंद्वितीयंपंचलोहकं॥४४॥यवमुष्ककस्वर्जीनांपला
शतिलयोस्तथा॥क्षारैस्तुपंचभिःप्रोक्तःपंचक्षाराभिधोगणः॥४५॥
कांचसैंधवसामुद्रविडसौवर्चलैःसमैः॥स्यात्पंचलवणंतच्चमृत्स्नो

पेतंषडाहूयं॥मृत्स्नायांसुलवणंरेहइतिप्रसिद्धं॥इतिपंचद्रव्यग
णः॥धवापामार्गकुटजलांगलीतिलमुष्कजैः॥क्षीरैरेतैस्तुमि
लितैःक्षारषट्कउदाहृतः॥४७॥इतिषट्कद्रव्यगणः॥रसासृङ्मांस
मेदोस्थिमज्जाशुक्रसमाह्वयैः॥शरीरस्थैर्मदैरेतैःसप्तधातुमयो
गणः॥४८॥इतिसप्तधातुगणः॥दरदःपारदःसस्योवैक्रांतंकां
तमभ्रकं॥माक्षिकंविमलंचेतिस्युरेतेष्टौमहारसाः॥४९॥खेच
रांजनकंकुष्ठगंधालंगैरिकक्षितिः॥शैलेयांजनसंमिश्राःशंसं
त्युपरसाबुधाः॥५०॥कंपिल्लगौरीचफलाकपर्दसशैलसिंदूरक
वह्निजारान्॥पाषाणिनोबादरशृंगयुक्तानित्यष्टकंसूतसमा
नमाहुः॥५१॥पंचलोहसमायुक्तंकांतमुंडकतीक्ष्णकं॥कल्पितः
कथितोधीरैरष्टलोहाभिधोगणः॥५२॥इत्यष्टद्रव्यगणः॥शिग्रु
मूलकपलाशचुक्रिकाचित्रकार्द्रकसनिंबसंभवैः॥इक्षुशेखरि
कमोचिकोद्भवैःक्षारपूर्वदशकंप्रकीर्तितं॥५३॥मूत्राणिहस्तिमे
षोष्ट्रगवाजकानांमेषाश्वरासभकमानुषमानुषीणां॥पतेनयत्र
मिलितानिदशेतितानिशास्त्रेषुमूत्रदशकाह्वयभांजिनीति॥५४॥
इतिदशद्रव्यगणः॥स्याज्जीवकर्षभकयुग्मयुगह्विमेदाकाकोलि
काह्वययुतद्विकसूर्यपर्ण्यः॥जीव्यामधूकयुतयामधुराह्वयोयंयो
गोमहानिलविराजतिजीवकादिः॥५५॥जीवकर्षभकौमेदकाको
ल्यौऋद्धिवृद्धिकौ॥एकत्रमिलितैरेतैरष्टवर्गःप्रकीर्त्तितः॥५६॥कु
ष्ठमांसीहरिद्राभिर्वचाशैलेयचंदनैः॥मुराकर्चूरमुस्ताभिःसर्वौ
षधमुदाहृतं॥५७॥अजाजीमरिचंशुंठीग्रंथिधान्यंनिशाहूयं॥
पिप्पलीमरिचंचेतिवेसवारगणोमतः॥५८॥सर्वौषधसमायुक्ताः
शुष्कास्त्वामलकत्वचः॥यदातदायंयोगःस्यात्सुगंधामलकाभि
धः॥५९॥द्राक्षादाडिमखर्जूरकदलीशर्करान्वितं॥लाजाचूर्णस
मध्वाज्यंसंतर्पणमुदाहृतं॥६०॥सक्तुभिःसर्पिषाभ्यक्तैःशीतवा
रिपरिप्लुतैः॥नात्यच्छोनातिसांद्रश्चप्रस्थइत्यभिधीयते॥६१॥दा
डिमंकिंशुकंलाक्षाबंधूकंचनिशाहूयं॥कुसुंभपुष्पंमंजिष्ठाइत्य
सोरसवर्णकः॥६२॥खटिनीश्वेतसंयुक्ताःशंखशुक्तिवराटकाः॥

भृष्टाश्मशर्कराचेतिशुक्लवर्गउदाहृतः॥६३॥भार्गीशटीपुष्क
रवत्सबीजदुरालभाशृंगिपटोलतिक्ताः॥किरातविश्वेंद्रकणे
भबीजधान्यानितिक्तसुरदारुकंच॥६४॥अष्टादशांगाभिधएष
योगःसमागमेस्याद्दशमूलकेन॥द्विधाचभार्ग्यादिकएकएष
ज्ञेयोद्वितीयस्तुकिरातकादिः॥६५॥द्वात्रिंशत्पलसंमितंदधिप
लान्यष्टौचखंडंपलस्याईचेन्मरिचस्यतेनतुलितंयुक्तंत्वगेला
द्वयं॥मध्वाज्यंचयुतंतदर्धमिलितैःसंशोधितैर्योजिताभांडेस्या
द्धिमवासिताशिखरिणीश्रीकंठभोग्यागुणैः॥इत्थंनानामिश्रयो
गाभिधानादेतंवर्गंमिश्रकाख्यंविदित्वा॥वैद्यःकुर्याद्योगमत्रान्य
संज्ञासंख्याज्ञानंबंधुभिर्योनधीरः॥६७॥शौर्यासंगरताचयास्व
यमुमाशश्वत्शिवासंगिनीसावाणीचतुराननप्रणयिनीःसंमि
श्रितायंश्रिता॥तस्यायंत्वभिधानशेखरमणौवर्गोनृसिंहेशितु
र्द्वाविंशोवसितःकृतैःकृतधियांयोमिश्रकाख्योमतः॥६८॥इ
तिश्रीनरहरिपंडितविरचितेनिघंटुराजापरपर्यायवत्यभिधा
नचूडामणौमिश्रकाख्योवर्गोद्वाविंशः॥२२॥अथैकार्थादिवर्गः
॥श्रीश्वलक्ष्मीफलेज्ञेयाअशनोबीजवृक्षकः॥शालूकंपद्मकंदे
स्यात्सदापुष्पोरविद्रुमे॥१॥कुबेरकोनदीवृक्षोगोकंठ्येगोक्षु
रेतथा॥दंतफलस्तुपिप्पल्यांकसेरुर्भद्रमुस्तके॥२॥नागरोत्था
कक्रुरुहाअंकोल्येदीर्घकीलकः॥शल्लकीसल्लकीवस्लेमातुलिंगे
तुपूरकः॥३॥ब्रह्मघ्नीतुकुमारीस्यात्अंकालेगूढमल्लिका॥अ
तिविषाश्वेतविषेपकुंचिस्थूलजीरके॥४॥कवचःस्यात्पर्पट
केलवणंतुपयोधिजं॥बृहत्त्वक्सप्तपर्णेस्यात्कांभोजीवाकुची
तथा॥५॥वीटपाटीहंसपादीकुनटीतुमनःशिला॥वैकुंठमर्जके
प्राहुर्भूधात्र्यांतुतमालिनी॥६॥शतकुंदःशरीरेस्यादग्निकाष्ठंत
थागुणैः॥सूक्ष्मपत्रीशतावर्यांक्षीरवर्णार्कसंज्ञके॥७॥शौंडीतु
पिप्पलीज्ञेयाकस्तूरीमदनीतथा॥ब्रह्मपर्णीपृश्निपर्ण्यांचित्रप
र्णीचसास्मृता॥८॥छत्रपर्णःसप्तपर्णेपीलुपर्णीतुतुंडिका॥प्रा
कश्रेष्ठस्तुवंताकेशंगराभिरुच्यते॥९॥गोरटःस्याद्विट्खदिरे

तुंडिचारण्यबिंबिका॥विष्णुगुप्तंतुचाणक्यमूलेनंतायवासुको
॥१०॥कपिकच्छ्वात्मगुप्ताशंवानपोनस्तुकिंशुके॥पीतानुरजनीज्ञे
याबोधिवृक्षस्तुपिप्पलः॥११॥उशीरेसमगंधिस्याद्धिंगुलेचूर्णपा
रदः॥हिंगावगूढगंधःस्याद्रोदंतेविस्रगंधिका॥१२॥शाम्याग्नी
शानमित्याहुर्हिंवांधोलूकउच्यते॥पयस्याक्षीरकाकोल्यांशतवे
ध्यम्लवेतसे॥१३॥रोचनीनारिकेलेचभूधात्र्यांचारुटास्मृता॥प्रि
याप्रियंगुकेप्राहुःखराह्वाचाजमोदके॥नगरंदंडहस्तीस्याद्भसो
नोलसुनेस्मृतः॥तपस्विनीतुमांसीस्यात्तसेघपुष्पाजभृंगिका॥१५॥
शष्पंबालतृणंप्रोक्तंशैलेयंचाश्मपुष्पके॥श्रीपुष्पंतुलवंगेस्या
द्वालपुष्पीतुयूथिका॥पुष्पंतुस्थूलझिंडूकेचित्रकेदारुणःस्मृतः
अतस्याद्विषपुष्पंतुपुष्पंस्यान्मादनानिच॥बलभद्रेचदंबेल्वेआ
स्वोटेभूतवृक्षकः॥रामातमालपत्रेस्याद्भूर्जेचर्मदमोमतः॥आम्र
शल्याशनवर्या[?]पिकोकुलभवल्लभा॥विप्रप्रियःपलाशेचज्वरारि
स्तुगुडूचिका॥कंटकार्यांतुश्वेतायांज्ञेयातुकपटेश्वरी॥पांडुफलं
पटोलेस्याच्छालिपर्ण्योस्थिरामता॥गायत्रीखदिरेप्रोक्तास्यादेर्वा
रुस्तुकर्कटी॥नीवारेरण्यशालिःस्यात्पार्वत्यांगजपिप्पली॥सक्का
यांदेवपुत्रीस्यादंकोल्लेदेवदारुच॥रीठाप्रकीर्यकेप्राहुर्दंत्यांकेश
रुहास्मृता॥आम्रस्तुसहकारेस्याज्ज्ञेयास्त्रालेदमेश्वरी॥दुष्पुत्रश्चो
रकेप्राहुर्भीडेचैववितानकः॥माल्विषामंटकेप्रोक्तामार्जारीमृगना
भिजा॥तिंतिडीकेतिवीजाम्लेकदल्यांतुसकृत्फला॥जर्हिलश्चार
ण्यतिलेनार्स्यशैलेरसांजने॥विभीतकेकलिंदःस्याच्छालिज्ञेयातु
पाटला॥रंगमातातुलाक्षायामग्निज्वालातुधातकी॥तिनिशेस्याद्भ
स्मगर्भामधूल्यांमधुकर्कटी॥सितगुंजाकाकपीलोचंद्रायांतुगुडू
चिका॥नटश्चाशोकवृक्षेस्याद्दाडिमेफलशाडवः॥निष्पावेतुपलंक
स्यात्कलशीपृश्निपर्णिका॥राजान्नेदीर्घभूकःस्याज्जरणःकृष्णजी
रके॥पिंगाचैवहरिद्रायांश्वेतशूकेजवःस्मृतः॥श्यामाकेतुत्रिबीजः
स्याद्दादक्यांतुवरीस्मृता॥प्रोक्तःश्रुकाश्मीरवृक्षोविषतिंदुर्विषद्रुमे
॥पलाशेपत्रकःप्रोक्तोन्यग्रोधोरोहिणःस्मृतः॥नारिकेलेरसफलस्त

थानालेतुशंबरः॥विकंकतोमृदुफलोकेसरेबकुलस्मृतः॥सेफाली
सिंधुवारेचहिलिमोचीतुवास्तुके॥वास्तुकेश्वेतविल्लिस्याद्धेल्लिका
चेंदुयोदकी॥आरामवल्लिकायांतुमूलयोनीतुबिमृता॥मृदुःकन्या
तुसंप्रोक्ताजीवास्याज्जीवकेतथा॥छिन्नायांतुगुडूचीस्यान्नाराय
ण्यांशतावरी॥सर्जेतुवस्तकर्णीचशलाटूविल्वकेतथा॥सर्जीतरे
चाश्वकर्णोगोकर्णीसमदोरसे॥कृष्णंनीलांजनेप्राहुराखुकर्णीतु
शंबरी॥दुर्गातुश्यामयक्षीस्याद्भूतोमुस्ताथदुर्ग्रहः॥अपामार्गोथर
क्तातुमंजिष्ठायांशठस्तथा॥धत्तूरेब्रह्मनाब्राह्मीगंधर्वःकोकिले
स्मृतः॥सरटोतुदुरारोहाबाहुल्यांतवटःस्मृतः॥सर्षपंतुदुराधर्षो
ह्रीबेरंबालकेतथा॥हेमवतीचाल्परसाद्विषघ्नानाटरुषके॥ब्रह्म
पुत्रीतुभार्गीस्याद्धस्तिपर्णीतुकर्कटी॥तुलसीबहुभंजषीकट
भ्यांगर्दभीस्मृता॥ककुभ्नोहपुषायांचसाल्मलीचयमद्रुमे॥सूक्ष्मै
लाचैवकोरंग्यांगंधाण्यांधूम्रपत्रिका॥शैलजागजपिप्पल्यांसी
रिणीतुकुटुंविनी॥देवबलायांत्रायंतीकटीचबदरेस्मृता॥इंदी
वराकरंभायांकंदेचेंदीवरंस्मृतं॥पुष्पांतरेराजकल्यांपार्थिवेत
गरंतथा॥सागरेरत्नगर्भःस्याद्रत्नगर्भातुमेदिनी॥सुवर्णेकांचनं
ज्ञेयंहेमदुग्धातुकांचनी॥प्रसारिण्यांराजबलाकर्पूरेहिमवालुकः
॥हिमंकर्पूरकेप्राहुर्गोशीर्षंचंदनंस्मृतं॥ब्रह्मदारुःस्मृतःफंज्यांप
ण्यंधापणदास्मृतः॥वत्सादनीगुरुच्यांचसोमवल्ल्यत्रवल्लिका॥
नद्यांम्लेचसमष्ठिलाथरजनीस्यात्कालमेष्यांबुधेर्दग्धेहस्तिलके
पलांडुरितिचस्याद्दीपनेचोक्ततः॥मोचाहस्तिविषाणिकेचक
थिताभार्ग्यांतुपद्मेस्मृतानिवेशीर्णदलस्तथात्रकथितास्याद्धा
न्यराजोपवे॥इत्येकार्थगणः॥अथद्व्यर्थाः॥सोराष्ट्रंरूचिदेचैव
संधानंचप्रसूते॥पत्साचकिसटीलासाक्तिनवश्चोरकेशठे॥बला
कावर्हिणश्चैवमेघानंदःप्रकीर्तितः॥आकाशेभ्रकेगगनंजलूका
मत्कुणेस्तपः॥नासानक्षत्रयोर्नाडीकोलायांशुंडिकेकणा॥ज्वर
घ्नेछिन्नवासूकेललनाचारसर्जयोः॥मंजिष्ठायांगुडूच्यांतुकुमारी
नागपूर्विका॥मदरेसप्तपर्णेस्यात्सप्तच्छदमुदाहृतं॥कृत्रिमंकुवि

डेकाचेपाक्यांचयवजेविजे॥सपीतरेपटोलेचकुलकःसमुदाहृतः
॥जंतुकायांतुवास्तुकेविज्ञेयाचक्रवर्तिनी॥मधुरोजीवकेप्रोक्तामे
दायांचतथास्मृता॥कर्कंधुश्चेतिसंप्रोक्तोवदरेपूतिमारुते॥वासं
तीकोकिलायांतुदंत्यापुष्पंप्रचक्षते॥चंद्रावेचोत्पलंकुष्ठेकर्कारश्च
श्चयातपोः॥चपचामधमागंधोद्वरण्यांखदिरेक्षमा॥सिंधुपुष्पंक
दंवेचवकुलेचाथलोमशा॥काकोल्यांतुवचायांचसूक्ष्मेलाचेंद्रवारु
णी॥ऐंद्र्यांगोदावरीचैवगोतम्यांरोचनातथा॥कुसुंभोरण्यजेचैव
कौसुंभंकुसुमांजने॥सटीगंधनिशायांतुचोरकेचाथकर्कटी॥दे
वदाल्यांत्रपुस्यांचशतान्हयांशतावरी॥मिशिस्तुतुच्छनीलिन्यां
सूक्ष्मैलायांतथास्मृता॥वितुन्नांकंतुभूधात्र्याख्यातातुकुस्तुंबरीत
था॥बर्हिर्दर्भेमयूरेचप्लक्षमर्कटयोःप्लवः॥आखुपर्णीमृगश्रे
ण्यांप्रत्यक्श्रेण्यांतथास्मृता॥वस्त्रेतमालपत्रेचअंशुकःसमुदा
हृतः॥दर्भेचकुशिकेवज्रंकंगुधान्येप्रियंगुके॥कंगुरंगारवल्लीतु
फंजिहस्तिकरंजयोः॥वक्रपुष्पमगस्त्येवपलाशेचाश्वपुच्छकं॥
माषपर्णीशुनःपुच्छेचिल्लिस्याच्छाकलोध्रयोः॥अथवाचेंद्रवारु
ण्यांशक्रान्हेंद्रयवेतथा॥काकभांडीकाकतुंड्याख्याताहस्तिक
रंजके॥दीर्घाकुश्यांपलाशेचयाज्ञिकोथविदारिका॥काश्मरीच
सृगाल्यांचटेंटौचमृगधूर्तके॥कटुकाराजपिप्पल्योःख्यातावश
कुलादनी॥मंथानकेसमाख्यातोराजवृक्षस्तृणाधिपे॥मदनेकु
टिलेचैवतगरंचाथरक्तिका॥गुंजायांराजिकायांचपिशुनंचापिकुं
कुमे॥नगरेथयवाहूयायांयवक्षारंयवासिवा॥अंगुरोदनयोःकुरो
दंतीमधुकपुष्पयोः॥मधुपुष्पीचशोफघ्नीशालिपर्ण्यापुनर्नवा॥
वालपत्रोयवासेचखदिरेचाथवालके॥उदीच्यामुत्तरेदेशेकपिः
कीचतुरुष्कयोः॥लांगलीदर्भयोःशीरीप्रग्रहेजलवेतसे॥व्याधि
घात्योवलंगेचश्रीगंधेदिव्यचंदने॥स्वादुकंठकमाचख्युर्गोक्षुरेच
विकंकते॥वंशबीजेयवफलावत्सकेधान्यकर्कके॥आगस्त्योदेवप्रि
यःस्याद्बृचाश्वेतादिपश्यरी॥गोलोम्यांगंजनंप्रोक्तंलसुनेरक्तमूल
के॥कंकुमेरामवेलाह्लिकातपासोदितीभवेत॥महासमंगवेश्वयीज

टामांस्यांजटास्मृता॥कारीचमृगनाभौचधुत्तूरेपरिकीर्तिता॥हंस
पाद्यामुसल्यांचख्याता गोधापदीबुधैः॥तपस्वीहिंगुपत्र्यांचप्रकीर्ये
रैप्यमुक्तयोः॥तारंस्यान्माषपर्ण्यांतुलिंग्यांचाह्वःस्वयंभुवं॥सहस्र
वेधीकस्तूर्यांरामवेथाब्जकेसरे॥पुंनागेतुंगमाचख्युस्त्रिवृद्धान्यवि
शेषयोः॥मसूरोप्योथविष्मायांश्रुंठीप्रतिविषंतथा॥श्रीगंधगंधपा
षाणौगंधसारेथपिछिले॥शाल्मलीशिग्रुवौवासावृहत्यौहिभका
भिधे॥मर्कटस्त्वजमोदायांवनौक्कापिचविश्रुतः॥स्याल्लांगुलीगुडू
च्यौतुविशल्यामथतेजिनी॥तेजोवत्यांतुमुर्वायांचांगेरीलोणशाक
योः॥लोणिकाचापिपिण्याकंतिलकिट्टंतुरुष्कयोः॥वृहत्यांचैववृंता
केवार्त्ताकींचसदाफलं॥उदुंबरेविल्ववृक्षेलज्जाखदिरवृक्षयोः॥ख
दिरेचाथसामुद्रंलवणेतुहिफेनके॥ग्रंथिभोगोसुरेबिल्वेकटुकामी
नपित्तयोः॥मत्स्यपित्तोथरजनिहरिद्रानिलिकख्ययोः॥मिश्रेयके
मुरल्यांचवातपत्रेथमुस्तके॥अब्देभकेश्वेतपद्मपुष्करंपौष्करेमतं
॥तुंडिकेर्यांचकार्पासेतुंडिकाचप्रशस्यते॥धुत्तूरेचविडेधूर्त्तःश्रीवे
ष्टेसूचिपत्रकः॥वृक्षधूपोहिमांशुःस्यात्कर्पूरेचप्रकीर्तितः॥जाती
फलंतुशैलूषेश्रीफलेचसितावरी॥सुचिपत्रेतुवाकुच्यांशार्करागंड
दूर्वयोः॥मत्स्यंडिकातुद्राक्षायांचाराब्दोतापसप्रिया॥फंजीतुवकुडी
चैवआजांत्र्यंतुप्रशस्यते॥अर्कावर्तेरवौसूर्यःपेयंक्षीरेजलेस्मृतं॥क
र्पूरेचक्रकेचंद्रःसौद्रेनाप्येचमाक्षिकं॥मंजिष्ठातगरेभुंडीतूत्वुटागु
जमुस्तयोः॥सुवर्चलंमातुलिंगेरुचकेचसुवर्चला॥अर्कावर्त्तेतुमं
डूक्यांह्रीवेरपिचुमंदयोः॥निंबोथसप्तलायांतुसप्तलानवमल्लिका॥
लांगल्यांगजपिप्पल्यांख्यातावन्हिशिखातथा॥ज्योतिष्मत्यांकाक
जंघापारावतपदीतथा॥दुरालभायवासेचयासेचस्तुरकोमतः॥गो
क्षुरेकोकिलाक्षेचक्षुरेगोकंटकेक्षुरः॥पुष्करेचपलाशेचसुरश्रेष्ठप्र
कीर्तितः॥सोमोधान्याम्लकेसोमेप्रियामङ्गनांतरे॥मुनिदुर्घंटुकेग
स्त्येमृणालंचमुशीरके॥मुनींद्रेष्टंटुकेगस्त्येममृणालमुशीरके॥ला
मज्जकेब्रह्मरक्षोरक्तागस्त्येपर्णेशाके॥वटेप्लक्षेचशृंगीस्यात्कांतारव
नवंशयोः॥भूतणेधान्यकेकतमूलकेकतमूलके॥मूलकंचयवानी

तुदीपिकात्वजमोदयोः॥एलावालुककर्कस्यैवालुकंक्षीरभूरुहे॥
ताम्रचोडुंवरेचाथभूर्जेद्राक्षवर्णीतथा॥रीत्यांपुष्पांजनेरीतिसचिवो
मंत्रिधूर्त्तयोः॥चाणवामूलकेसिग्रेशालयोश्चार्कसारिवे॥आस्फोता
यांतुपर्जन्योवृष्टिदारुहरिद्रयोः॥लकुचेचुक्रवास्तुकेलिकुचेथगु
णामता॥दूर्वायांमांसरोहिण्यांसातलामांसरोहिणी॥उभेश्चर्मकशा
यांतुनीवारेपिचकर्वुरे॥मुनिप्रियोवरायांतुगुडचीतुविडंगके॥रसं
तुपारदेबोलोरसःपारदचर्मणोः॥भल्लूकःशुनकेरूक्षेपद्मिन्यां
नलिनीत्विभो॥किंशुकेप्रवरोख्यातोआरूकेपरिकीर्त्तिताः॥चि
त्रकेमेथिकाबीजेज्योतिष्कोचाथवार्षिके॥त्रायमाणान्यपुष्टं
चमेथिकात्रित्रिमूलयोः॥वल्लरीचाथकलभेधत्तूरेचगजार्भके
॥नटिनीलिकयोरेलाशिखंड्यांचमयूरके॥सुवर्णयूथिकायां
चकारवेकचकेतथा॥कलिंगेचस्मृतश्चापखगेवायोचपक्षिणी
॥धनुर्वृक्षोधन्वनागेसस्याद्बल्लातइत्यपि॥घुटुकेखङ्गशृंग्यांचष्ट
शुशिंग्यश्चेतना॥पथ्यारुष्कस्तुनिचुलेअशोकेवंजुलःस्मृतः॥
कपिकच्छ्वपामार्गेमर्कटीचान्यपक्षिणी॥भारद्वाजोभवेद्वन्य
कार्पासेचाथगुग्गुलौ॥दहनागुरौपुरेचैवप्रोक्ताथजतुपत्रिका
॥सुद्राक्षभेदेचांगेर्यांमतसीशालिपर्णिका॥एकमूलातुकुंभी
स्यात्पाटलीद्रोणपुष्पयोः॥वाराहीचहरिक्रांताविष्णुक्रांताभिदा
मता॥सारंगश्चानकेरंशोशंखोवारिभवेभवे॥मांसलंतुफलेप्रोक्तं
वृंताकेतुकलिंगके॥निष्पत्रिकायांवंशाग्रेकरीरंसंप्रकीर्त्तितं॥मा
षपर्ण्यांतुगुंजायांकांभोजीचाथपूतना॥गंधमांस्यांहरीतक्यांचि
त्रांगम्लेच्छतालयोः॥अंकोल्लकेतुमदनंख्यातंगंधोत्कटंबुधैः॥हि
निशोशिंशुपायांतुभस्मगर्भःप्रकीर्त्तितः॥वातेमरुद्देचैवख्यातोवै
द्यैःसमीरणः॥क्षीरदुग्धेतवक्षीरेस्ववथुःसुतकासयोः॥सितमंदा
रकेपुष्पविशेषेकुरवस्मृतः॥सुषवीकटुतुंब्यांचविभूतास्थूलजो
रके॥कंटकोखदिरेप्रोक्तोवृंताकेचाथनीलिका॥सिंदुवारेतुनी
लिन्यांपिकेचैवाथकोकिला॥कोकिलाक्षेचगंधार्यांपत्रीस्यात्साय
वासिके॥चक्रांगीचैवरोहिण्यांमंजिष्ठायांप्रकीर्त्तिता॥मसूरात्रि

वृत्तायांच प्रोक्ताधान्यविशेषके॥ गिरिजं गैरिकं प्रोक्तं शिलाजतु प्र
शस्यते॥ चंद्रिका चंद्रकांतेच निर्गुंड्यां च प्रकीर्तिता॥ कंजीयोज
नवल्यां तु भार्ग्यां चैवाथ नीलिका॥ मृगाक्षी श्रीफलीकायां मृगाक्षी
धात्रिकाफलं॥ ख्याता मृतफले चाथ श्यामेक्षुः कोकिलाक्षकः॥ इक्षु
रके वक्रशल्यां कटुविंग्यां प्रचक्षते॥ दंत्यांतरे विभांड्यां च प्रख्या
ता कर्नरी बुधैः॥ अभया च समाख्याता हरीतक्यां मृणालयोः॥ ज
तुकायां जनन्यां तु भ्रामरी च भिषग्वरैः॥ गोरसे रोचने गव्यं कार्पास्यां
चव्यचव्यके॥ गोरोचना रोचना यी ख्याता स्याद्दूशरोचना॥ ज्योति
ष्मत्यां पक्षिभेदे पिंगला च प्रकीर्तिता॥ अमृते शालिपर्ण्यां तु सुधा
च परिकीर्तिता॥ रसराजः समाख्यातो पारदे च रसांजने॥ वल्ली
करंजे सितपाटलक्यां कुबेरनेत्राथ जगाद मांस्यां॥ मांसी हदंत्यां
लवणे महीजे कांताय साश्मे तु हिरोमकाख्यां॥ इति द्व्यर्थाः॥ अ
थ त्र्यर्थाः॥ सितजे पातपत्रे च वासंत्यां माधवी भवेत्॥ ज्योतिष्म
तीं किणिसां च सुष्कुल्यां कटभी स्मृता॥ पुनर्नवे द्रगोपे तु वर्षा
भूर्दर्दुरिः स्मृतः॥ सुकुमारस्तु श्यामाके चंपके स्ववके तथा॥ स्वक्षा
तु सुकुमारायां नेपाली मालती स्मृता॥ महाबला गवाख्यां तु पु
ष्यान्यां च गवादिनी॥ अरिष्टस्तक्रभेदे च निंवे चलसुने तथा॥ क
टुकावंश दूर्वास्तु शतपर्वा च किंशुका॥ ज्योतिष्मत्यां पलाशे च नं
दी वृक्षोथ लांगली॥ हरिन्यां गजपिप्पल्यां नारिकेले प्रशस्यते॥
कादंबे मल्लिकाख्ये च शिरीषवृत्तपुष्पकः॥ गिरिकर्णी द्रवारुण्यां
पिंडिन्यां च गवादिनि॥ शिरीषे मधुके दंत्यां मधुपुष्पं च वंजुलः॥
अशोके चैव भेरण्यां निचुले चाथ नाकुली॥ सर्पीसासितसुद्रायां य
वतिक्तेथ दुर्दरः॥ भल्लातके ऋषभके अनड्डाच प्रशस्यते॥ मयूर
के मेथिकायां चित्रके च भवेच्छिखी॥ कदल्यामजमोदायां गजे ह
स्तीति संज्ञकः॥ अमोघा पद्मभेदे स्यात्पाटल्यां च विलंगिके॥ कु
ल्माषः कांजिके वंशे गंधमात्यां सुवस्यतः॥ सोमायां महिषी वल्ल
ब्राह्मी हेमलता स्मृताः॥ वंशे स्यान्नारिकेरे च ताले च तृणराजकः॥
मुस्तायामथ कं मेघे घनस्याथ पित्तप्रिया॥ अगस्त्यो भृंगराजे थका

लश्चकेचविभृताः॥दंतशठस्तुचांगेर्यांजंबीरेचकपित्थके॥दह
नोरुष्करंप्रोक्तोवृश्चिकाल्यांचचित्रके॥विडंगेचजयंत्यांचमोटा
यांचबलास्मृता॥आम्रातकेशिरीषेचप्लक्षेचैवकपीतनः॥कटु
हुच्यांकारवल्लीकांडीरेचीरपत्रके॥यवासेस्तुद्रूखदिरेकार्पासेच
मरुद्रूवा॥समुद्रांनाचस्पृक्कायांकार्पासेचयवासके॥मंडूकपर्णी
मंडूक्यांमंजिष्ठादित्यकांतयोः॥ऋषभकेयवासायांबलीवर्देवृ
षःस्मृतः॥चापेयंचंपकेप्रोक्तंकिंजल्केनागकेसरे॥उशीरेचलवं
गेचश्रीखंडेवारिसंभवे॥पलितंशैलजेश्यामेशुभ्रकेशेचविश्रुतं
॥कुंदुरुकेधूपभेदेशाल्लक्यांचतृणांतरे॥पृथ्वीकायांहिंगुपत्री
स्थूलेलाकलिकास्मृता॥शतपत्रेराजकीरेकमलेपुष्पभेदके॥
न्यग्रोधस्त्वाखुपर्ण्यांचभूतस्त्रोण्यांवटेस्मृतः॥सुद्राग्निमंथनकौ
रीजीमूलेचाभिमंथके॥श्वेतेकौप्येचमीनाक्ष्यांसिताचपरिकीर्ति
ता॥सोमवल्कस्तुखोनायांकदरेकृष्णगर्भके॥शैलेयकेशिलाहृ
चकुंडल्यांचशिलाजते॥पाटलायांमाषपर्ण्यांकाश्मर्यांकृष्णवृं
तिका॥जटामांसीचलाक्षायांलाक्षायांचबलंस्मृतं॥समंगायांरक्त
पादीमंजिष्ठाचबलास्मृता॥भल्लातकेबिल्वतरौपार्थेवरितसः
स्मृतः॥दुःस्पर्शायांकंटकारीकपिकच्छूदुरालभा॥वत्सादन्यां
गुडूचीचतार्क्षीचगजपिप्पली॥आमंडेपुष्करेकंजेपद्मपत्रंप्रच
सते॥कालेयकंतुदार्व्यांचकुंकुमेहरिचंदने॥श्रीखंडेवाजगंधे
स्यात्क्रौवेष्टेतिलपर्णिका॥लोध्रेपूगीफलेचैवनलेचक्रमुकः
स्मृतः॥पिप्पल्यांयूथिकायांचजीरकेमाधवीभवेत्॥अजमोदा
शताह्वायांमिशीश्चवशतावरी॥त्रपुस्यांकर्कटीनोसीनस्यास्या
हुनकर्कटी॥कुस्तुंबर्यांचभूधात्र्यांधान्यंव्रीह्यादिकंस्मृतं॥त्रपु
सीदेवदालीचघोटिकोशफलेस्मृता॥तंदुल्यांयवतिक्ताचशशां
डल्यब्दनादयोः॥सुरदारुगंधबंधोव्रीडायांगंधमादिनी॥शापे
शुकेरसुकेपिकाकासेकोकिलास्कः॥वरांगंमस्तकेगुह्येत्व
चायांचप्रशस्यते॥कर्पासेतकिणिह्यांचकटभ्यांगिरिकर्णि
का॥पतंगोन्यमधूकेचैसूरंजनकेतथा॥द्राक्षाचशतवीर्यायांदू

र्यांचैवशतावरी॥शुंठीप्रतिविषाचैवविम्बायांचशतावरी॥जया
हरिद्राविजयाजयंत्यांचप्रशस्यते॥कटुरायांदुरालभास्वयंगु
प्तायवासकैः॥वृद्धस्त्र्याचगोधूमेरसालेचप्रचक्षते॥द्राक्षायां
तुरसालास्याद्रूस्यतेचभिषग्वरैः॥हेमवत्यांवचाश्वेतक्षीरिणी
लोमशास्मृता॥विल्वेधात्रीफलेचैवश्रीफलंचार्द्रविकणे॥ति
लकेचछिन्नरुहाप्युषवेकेनकीभवेत्॥वंशःसर्जद्रुमेवेणौकु
लाम्लायेचविश्रुतः॥सलिलेवत्सनाभेचव्यालेचैवविषंस्मृतं॥स्थू
लकंदोमुखालुःस्यात्सूरणंहस्तिकंदकं॥आम्रातकेपीतनको
अम्लिकाचपलाशिका॥विषदोऽन्यांमहानिंबेमदनेविषमुष्टि
कः॥नगरेकुंकुमेप्रोक्तोधूर्तूरेचशठःस्मृतः॥कपित्थकेस्वर्णपु
ष्प्यांकूष्मांडेनागपुष्पके॥तिलकेचातिमुक्तेचइक्षुभेदेचपुंड्रके
॥आखोटेवारुणीचैवगवाक्ष्यांचर्मवादिनी॥तोयवल्यांचकांडी
रेमहादुग्धामृतस्रवा॥पृथ्व्यांपुनर्नवामेदाधारिणीचप्रशस्यते
॥मुचुकुंदेजयापुष्पेगणीर्योहरिवल्लभा॥कामुकेलघुकाश्मर्यां
कैडर्येऽन्यकरंजके॥ह्रस्वांतरेशिखरिणीनेवाल्यांदधिभेदके॥
कुटजेंद्रयवौप्रोक्तौपुष्पकासीसवत्सके॥क्षौद्रेमघांतरेप्रोक्तो
मधुयष्ट्यांमधुस्मृतः॥चटकेत्वरसेचैवनीलकंठेमयूरके॥शो
णितंकुंकुमेरक्तेरक्तगंधेइतिस्मृतं॥तर्कारीदेवदाल्यांचअरण्यां
वादिमंडले॥वसर्पारश्चिकेचैवकाकवंध्यासरूसजा॥कद्वंग्यां
चकटभ्यांचपटोल्यांदधिपुष्पिका॥धूर्तूरेकेसरेहेम्निसुवर्णंसंप्र
चक्षते॥सुवर्णायांहरिद्रांचवारुणीकणगुग्गुलुः॥वाराह्यांशिशु
मार्यांचकंदभेदेचसूकरी॥पत्नांडूंतरेलसुनेमूलेचापाक्यसंज्ञके
॥महाकंदःसमाख्यातोवैद्यशास्त्रार्थकोविदैः॥लोहेचवनरंभायां
लघुपाषाणभेदके॥निंबेतेषुचगिरिजाप्रोक्तात्रेयभिषग्वरैः॥जर
णःकासमर्देतुरामठेकृष्णजीरके॥सशमंजायनेतीक्ष्णंतगरेचप्र
शस्यते॥दुरालभायांकपिकच्छुकेस्यात्तथाशिखर्यांदुरभिग्रहाच॥
महासमंगाबहुपुत्रिकाचसासारिवास्यात्फणिजिह्विकायां॥इति
न्यर्थाः॥अथचतुर्वर्गाः॥अम्लिकायांतुतांगेर्यामाविकेचाम्रविंच

कौ॥वयस्थायांचकाकोल्योदावींचसोमवल्लरी॥जंतुकायांपुत्रदा
त्र्यांषट्पद्यांभ्रमरीत्वचौ॥भ्रमरीचारकोवैद्यशास्त्रमापुष्मतेस्म
तः॥अभयाचिभिटावंध्याककोटीचमृगादनी॥पथ्यायांसंप्रवक्ष्य
तेचतस्रश्चभिषग्वरैः॥कुष्ठेकुंदरुकेनिंबराजकेराजभद्रकः॥कट
केकाचवेलोहेतिलकंगंधभेदकः॥मानेष्यायांमहाराज्ञेकाकमा
च्यांमहापरं॥मीनाख्यायामहाराष्ट्याकाकमाच्यांतथापरं॥ब्रह्मम
ण्डूकिकायांतुमत्स्याक्षीचप्रचक्ष्यते॥नक्तंचरःकौशिकेस्यादूल्लुले
टुंडुलेतुरे॥शिफाजगंधाकारव्यांमेथिकाचाजमोदिका॥पंचास्ये
मर्कटेचाश्वेमंडूकेचहरिःस्मृतः॥श्यामालंकांत्रिपूरायांस्थूलेला
वृत्तमल्लिका॥लोहंचलोहजेकांस्येकृष्णलोहेतथागुरौ॥खर्जूर्यां
नालिकेरेचतालेवंशेद्रुतारुहाः॥शुंठीमरिचपिप्पल्यांकणामूलंष
डूषणं॥अग्निस्त्वरुष्करेजारेनिंबुकेचित्रकेतथा॥भूतांकुशस्त्व
पामार्गेसुकुमारश्चराजिका॥त्वचेचास्ववलेचैवप्रोक्तस्तत्रभिषग्व
रैः॥शमीहरिद्राचद्विश्वलास्यास्त्यामब्रह्मचारिणी॥जंबूकोसोमम
स्यास्त्रिक्तोडिब्राह्मिचकीर्तिता॥मार्कवेभ्रामरेभृंगस्त्वचेपस्त्रिवि
शेषके॥सेचनंस्याद्दाडिमकेजंभेनिंबेचपूरके॥स्त्रिताज्येदमने
व्याघ्रेरुग्भेदेपुंडरीककः॥जलजंमौक्तिकेरांखेलोणक्षारेलवं
गके॥बंध्याककोटकीचैववरहत्यन्याचलक्ष्मणा॥सूतदापुत्र
दायांतुचतस्रःपरिकीर्तिताः॥उशीरंगृंजनंचैवमधुपुष्पंचबं
जुलः॥दीर्घपत्रेचकेतक्यांकन्यायांदीर्घपत्रिका॥वासंतेरुच
केह्यस्रःकलिंगेदेवसर्षपः॥लामज्जकेदीर्घमूलंयासेवेलंत
रेशाठे॥तथास्याक्कालिपर्ण्यांचदीर्घमूलास्मृताबुधैः॥रामायां
त्रायमाणांचकन्यांशोकश्चसातलं॥अमृतंवेदनृसारेसुधाचैव
तथाविशे॥वराहःशिशुमारेचवाराह्यांसूकरेघने॥वाराहेवंजु
लेकासेनादेयीजलवेतसे॥शारदोबकुलेराष्ट्र्यांसारिकाकृष्ण
मुद्गयोः॥कुब्जकेवार्षिकायांचफलिन्यांप्रोषितप्रिया॥काश्मी
रंकुंकुमेरंशपौष्करेमृगनाभिजे॥केसरेवकुलेहेम्नि किंजल्केच
कसीसके॥जंबीरेस्यान्नमरुकेगुच्छेवार्जुनयमके॥बंध्याककों

टकीचैवईश्वर्यासप्तचस्मृते॥वसंतदूत्यांगणिकारिकाश्ववासंतिकापाटलकोकिलाच॥वत्सादनीवाकुचिकागुडूचीसोमासमंडूकिकसोमवल्ल्यां॥चक्रीनखांतरेकोकेदध्नोपिनिनिसेखरे॥सिंधुजेतिलकेधान्यांपारदेटंकणेपिच॥जातीसुरीरीकटुत्रुंबिनीचबिंदुरीरेणुसराजपुत्री॥स्वर्णेन्यथागुग्गुलुकेसराखुशठेषुधीराःकुभकंवदंति॥इतिपंचार्थाः॥अथषडर्थाः॥वृहद्दूलावरीनालीकटुकानिविषातथा॥काकोलीचैववषड्गंवीरायांचप्रचस्तते॥सातलाक्षीरकाकोलीविभांडीवाजभृंगिका॥कुंजरोदुर्द्दुरश्चैवषड्विषाणीनिकीर्त्तिता॥नीलदूर्वानिशाभद्रुरोचनाचहरीतकी॥बहुपुष्पीभिषग्वर्यैःशिलायांषडमीस्मृताः॥निंबखर्जूरितालीसंमरिचंचंदनमूलकं॥पलांडुश्चेतिषडमीनिंवसंज्ञाप्रकीर्त्तिताः॥मूर्वास्टक्कासहीदेवीदेवद्रोणाचकेसरं॥आदित्यभक्ताषडितिदेवीसंज्ञाप्रकीर्त्तिताः॥ब्राह्मणःक्षत्रियोवैश्योदंतोसर्पोखगस्तथा॥द्विजद्विजन्मनाचैवइत्युक्तोसुरभिःसदा॥गवादनीचैवदूर्वागंडदूर्वाचहस्तिनी॥प्रतीचीमदिराचेतिवारुण्यांषट्सुसंमता॥हपुषापीतनिर्गुंडीविष्णुक्रांताजयंतिका॥शितादिकर्णीशंस्यन्यापडेताअपराजिताः॥कुमार्यांचवराहीचवंध्याकर्कोटकीमृदुः॥स्थूलैलास्थूलपर्ण्याचषट्कन्याचकुमारीका॥वीजद्रुमेनगेचैवसीसकेनागकेसरे॥विषेचपन्नगेचैवषडेतेनागइत्यपि॥सूक्ष्मेलाचमहाराष्ट्रीमत्स्याक्षीकाकमाचिका॥गंडदूर्वाचमंडूकीमत्स्यादन्यांषडस्मृताः॥मेणेकलिंगेकोशाम्रेशल्यकाकेचधूर्त्तके॥मदनेचसमाख्याताःषडमीसमुदाहृताः॥डोडीगुडूचीमेदांचकाकोलीहरिणीतथा॥जीवन्त्यांचैवषट्स्वेतेजीवंत्यांचभिषग्वरैः॥धूम्राटभृंगयोःखलुमांसनेचत्यक्षेशिरीषकुटजेकलिंगे॥द्राक्षाचदुर्यांजरणाचचैवकृष्णाभिधाबाकुचिकापटुश्च॥इतिषडर्थाः॥अथसप्तार्थाः॥भद्रापांत्रुबलानीलीदंतीकाश्मीरसारिका॥श्वेताद्रिकाणीगौरीचसप्तचैताभिषग्वरैः॥मंजिष्ठाकटुकापथ्याकश्मीरीचंद्रवल्लभा॥तंत्रांकोरजनीचैवरोहिण्यां

सप्तचस्मृताः॥धात्रीबहुफलायांस्याच्छिद्रिनीकाकमाचिका॥कां
भोजीचशशांडूलीकटुहुंचीचवालुकी॥मंडूकीब्रह्मजाशंखपुष्पी
ज्योतिष्मतीमुनिः॥विष्णुक्रांतावचाश्वेतामेध्यायांसप्तसंमता॥
आखुकर्णीस्तनस्त्रेणीइंद्राह्वाचकलिंगकः॥गंडदूर्वागवाक्षीच
सिमासुद्राहरीतकी॥इतिसप्तार्थाः॥विजयाकांचनहूंहूंसंजिष्ठा
चवचानथा॥स्यात्तथाश्वेतनिर्गुंडीजयंत्याकांजिकाभया॥एरं
डनद्यामलताकरंजस्याद्ब्रह्मदंडीपनसः कुसुंभः॥स्याद्गोक्षुरः
कंटफलेचधूर्तोभिषग्भिरष्टाविनिसंप्रदिष्टाः॥स्वर्णैकपित्थेदधि
नालिकेरयोस्याज्जीवकेचेनस्थलपद्मकेनथा॥मसूरकेतोसम
धूककेनथामांगल्यमष्टाविनिसंप्रचस्तने॥इत्यष्टार्थाः॥अथन
वार्थाः॥वातारिजंतुकायांचभल्लांमीलदवंजयोः॥टेंटुकामंड
योर्भार्ग्योर्निर्गुंड्यांसूरणेस्मृताः॥धात्रीगुडूचीराष्णाचद्विधादू
र्वाहरीतकी॥लिंगिनीतुवरीमद्यंधीमतायांनवौषधी॥ब्राह्मी
वराहीलसुनीविषंचमूल्लादिकंदःसितकंटकारी॥भूम्यांहुली
चेदपराजिताचशुंठीतिचेत्तासुमहौषधीस्यात्॥इतिनवार्थाः॥
अथदशार्थाः॥स्याद्भ्रमांसीतुलसीहरिद्रानालुनथारोचनहेम
मोचाः॥जनप्रियायोजनवल्लिकास्यासामल्लिकाचंद्रशशीचगो
र्यां॥सितायांवाक्रुचीदूर्वामद्यंधात्रीकुटुंबिनी॥चंद्रिकाचप्रिया
पिंगात्रायमाणाचतेजिनी॥इतिदशार्थाः॥अथैकादशार्थाः॥दू
र्वानिशाऋद्धिवचाप्रियाचसामाषपर्णीशिशिरोचनात्वथ॥त्रायं
तिकीजीवतिकामहाबलामंगल्यकायामितिचंद्रमाहुयाः॥प्रियं
गुच्छिन्नात्रिवृत्ताकणाहूयावंदाकदूर्वातुलसीचनीलिनी॥दुर्गाख
गःकस्तुरिकृष्णसारिवाश्यामामहीदोक्कथितामिषग्वरैः॥इति
एकादशार्थादि॥एतेद्वादशार्थाः॥इतिएकार्थादिएकादशार्थाः॥
इतिकाश्मीरमंडलप्रसिद्धवसतिश्रीमठसिद्धगुहाख्यस्थानस्थि
तश्रीनंदिस्फोटाप्रसिद्धमहिमानंदश्रीसोमानंदआचार्यवंशोद्भ
वचतुर्दशविद्याविनोदपरिणतसमागमहिजवैराग्ययोग्यश्रीपरम
हंसजगदविज्ञानतिमिरमार्तंडश्रीपद्मपदनामधेयश्रीराजरा

जैंद्रगिरिश्रीपादपद्मसर्वशास्त्रमकरंदामोदमुदितसद्वैद्यविद्या
विशारददासविशारदमानसंहितारिधुरंधरनानाधनाग्रहणस
त्वगुणसहजश्रीमदीश्वरसूरिसूनुश्रीमदमृतेशानंदचरणार
विंदमकरंदानंदोदितश्रीनरहरिपंडितविरचितेनिघंटुराजापर
पर्यायवत्यभिधानचूडामणौनैकार्थाद्यभिधानस्त्रयोविंशोवर्गः॥

## निघंटुराजस्यसूचीपत्रं ॥

